प्रकर्षे: प्राबल्यनयने च सक० “इदं तु मम दीनस्य मनोभूयः प्रकर्षति” रामा० सु० १,१.

सम्+ सम्यक्कर्षणे सक० सङ्कर्षणम् । [समाकर्षी ।

सम्+आ+सम्यक्तया दूरपर्य्यन्तनयने सक० । समाकर्षति

कृषधातुर्न्यादिपाठात् द्विकर्म्मकः । कर्षणञ्च भूमिसंयोजनेन बलेन देशान्तरसंयोगानुकूलव्यापारानुकूलव्यापारः तेनास्य द्विव्यापारबोधकतया द्विकर्म्मकत्वम् । ग्राममजां कर्षति इत्यादौ अकथितञ्चेत्यादि पा० अजादेः कर्म्मत्वम् । अत्र प्रधाने कर्म्मण्येव वाच्ये लकारादयः । “प्रधाने नीहृकृष्वहाम्” भर्तृहर्य्युक्तेः । अजा ग्रामं कृष्यते । विलेखनस्य विदारणं तदर्थे न द्विकर्म्मकतेति भेदः

कृषक त्रि० कृष—क्वुन् । १कर्षके कृषिशब्दे उदा० । २फाले न० मेदि० । ३वृषे पु० हेम० ।

कृषर न० कृष—करन् । कृशरशब्दार्थे पृषो० अमरोऽप्यत्र केचित्

कृषाण त्रि० कृष—बा० आनक् । कर्षके कृषिशब्दे उदा०

कृषि स्त्री कृष—इक् । शस्योत्पादनार्थं भूमिकर्षणरूपे वैश्यवृत्तिभेदे अमरः कृषिकर्म्मप्रकारादि कृषिपराशरे दर्शितं यथा तत्रादौ कृषिप्रशंसा “चतुर्व्वेदालयो ब्रह्मा अधीत कृषणं वचः । अलक्ष्म्या युज्यते सोऽपि प्रार्थनानाथवान्वितः । एकयैव पुनः कृष्या प्रार्थको नैव जायते । कृष्यान्वितो हि लोकेऽस्मिन् भूयादेकश्च भूपतिः । सुवर्णरौप्यमाणिक्यवसनैरपि पूरिताः । तथापि प्रार्थयन्त्येव कृषकान् भक्ततृष्णया । कण्ठे कर्णे च हस्ते च सुवर्णं यदि विद्यते । उपवासस्तथापि स्यादन्नाभावेन देहिनाम् । अन्नं प्राणा बलञ्चान्नमन्नं सर्व्वार्थसाधकम् । देवासुरमनुष्याश्च सर्व्वे चान्नोपजीविनः । अन्नन्तु धान्यसम्भूतं धान्यं कृष्या विना न च । तस्मात् सर्वं-परित्यज्य कृषिं यत्नेन कारयेत् । कृषिर्धन्या कृषिर्मेध्या जन्तूनां जीवनं कृषिः । हिंसादिदोषयुक्तोऽपि मुच्यतेऽतिथिपूजनात् । तेनार्च्चितं जगत् सर्व्वमतिथिर्येन पूजितः । अर्च्चितास्तेन देवाश्च स एव पुरुषोत्तमः” ।

अथ कृषेः स्वयमवेक्षणोक्तिः “फलत्यवेक्षिता स्वर्णं, दैन्यं सैवानवेक्षिता । कृषिः कृषिपुराणज्ञ इत्युवाच पराशरः” । अथ चान्ये मुनयश्चाहुः “पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् । गोषु चात्मसमं दद्यात् स्वयमेव कृषिं व्रजेत् । कृषिर्गावो वाणिज्याः स्त्रियो राजकुलानि च । क्षणेनैतावसादीनि गुञ्जनमनवेक्षणात् । सदैव कृषिः कार्य्या लोकानां हितकाम्यया असमर्थो हि कृषको भिक्षामटति शोचयन् । गोहितः क्षेत्रगामी च कालज्ञो बीजतत्परः । वितन्द्रः सर्व्वशस्याढ्यः कृषको नावसीदति” ।

अथ वाहपोषणादिप्रकारः । “कृषिश्च तादृशी कुर्य्यात् यथा वाहान्न पीडयेत् । वाहपीडार्जितं शस्यं गर्हितं सर्व्वकर्म्मसु । वाहपीडार्जितं शस्यं फलितञ्च चतुर्गुणम् । वाहनिश्वासविफलः कृषको निःस्वतां व्रजेत् । गुडकैर्यवसैर्भूमैस्तथान्यैरपि पोषणैः । वाहाः कार्य्याश्च सीदन्ति सायं प्रातश्च चारणात्” ।

अथ गोशालाविधानम् । “गोशाला सुदृढा यस्य शुचिर्गोमयवर्जिता । तस्य वाहा विवर्द्धन्ते पोषणैरपि वर्जिताः । शकृन्मूत्रविलिप्ताङ्गा वाहा यत्र दिने दिने । निःसरन्ति गवां स्थानात् तत्र किं पोषणादिभिः । पञ्चपञ्चायता शाला गवां वृद्धिकरी मता । सिंहस्थाने कृता सैव गोनाशं कुरुते ध्रुवम् । सिंहगेहेऽर्पितां चैव गोशालां कुरुते यदि । प्रमादादन्धबुद्धित्वात् गवां नाशो भवेत्तदा । तण्डुलानां जलञ्चैव तप्तमण्डं झषोदकम् । कार्पासास्थितुषञ्चैव गोस्थाने गोविनाशकृत् । सम्मार्जनीञ्च मुषलमुच्छिष्टं गोनिकेतने । कृत्वा गोनाशमाप्नोति तथा तत्राजबन्धने । गोमूत्रजालकेनैव तत्रावस्करमोचनम् । कुर्व्वन्ति गृहमेधिभ्यस्तत्र का वाहवासना । विशङ्किं गोमयस्यापि रविभौमशनेर्दिने । न कारयेत् भ्रमेणापि गोवृद्धिं यदि वाञ्छति । वारत्रयं परित्यज्य दद्यादन्येषु गोमयम् । विलम्ब्य शनिभौमेषु गवां हानिकरः स्मृतः । श्लेष्ममूत्रपुरीषाणि पङ्कानि च रजांसि च । न पतन्ति गवां यत्र तत्र लक्ष्मीः स्थिरा भवेत् । सन्ध्याकाले च गोस्थाने दीपो यत्र न दीयते । स्थानं तत् कमलाहीनं वीक्ष्य क्रन्दन्ति गोगणाः । हलकष्टगवं धर्म्यं षड्गवं व्यवसायिनाम् । चतुर्गवं नृशंसानां द्विगवञ्च गवाशिनाम् । नित्यं दशहले लक्ष्मीर्नित्यं पञ्चहले धनम् । नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम् । आत्मपोषणमात्रन्तु द्विहलेन च सर्व्वदा । पितृदेवातिथीनाञ्च पुष्ट्यर्थं सोऽक्षमो भवेत् ।

अथ गोपर्व्वकथनम् “गोपूजां कार्त्तिके कुर्य्यात् लगुडप्रतिपत्तिथौ । चतुःश्यामलतां स्कन्धे लिखा तैलहरिद्रया । कुङ्कुमैश्चन्दनैश्चापि कृत्वा चाङ्गे विलेपनम् । उद्धृत्य लगुडं हस्ते गोपालाः कृतभूषणाः । ततो वाद्यैश्च

मर्द्दयेच्च मण्डयित्वाऽम्बरादिभिः । भ्रामयेद्वृषं मुख्यं ग्रामे गोपिनिशान्तये । गवामङ्गे तदा दद्यात् कार्त्तिकप्रथमे दिने । तैलं हरिद्रया युक्तं मिलित्वा कुङ्कुमैः सह । तन्नोहादिकं तत्र गवामङ्गे प्रदापयेत् । छेदनञ्च प्रकुर्व्वीत लाङ्गूले कर्णयोः । सर्व्वा गोजातयः सुस्था भवन्त्यनेन तद्गृहे । नानाव्याधिविनिर्म्मुक्ता वर्षमेकं न संशयः" ।

अथ गवां यात्राप्रवेशकालादि । पूर्व्वात्रयं धनिष्ठा च इन्द्राग्निसौम्यवारुणाः । एते शुभप्रदा नित्यं गवां यात्राप्रवेशयोः । उत्तरात्रयरोहिण्यां सिनीवाली चतुर्द्दशी । पुष्यश्रवणहस्तेषु चित्रायामष्टमीषु च । गवां यात्रां न कुर्व्वीत प्रस्थानं वा प्रवेशनम् । पशवस्तत्र नश्यन्ति ये चान्ये तृणचारिणः । अर्कार्किकुजवारेषु गवां यात्राप्रवेशयोः । गमने गोविनाशः स्यात् प्रवेशे गृहिणो वधः" ।

अथ गोमयकूटोद्धारः "माघे गोमयकूटन्तु संपूज्य श्रद्धयान्वितः । सारं शुभदिने प्राप्य कुद्दालैस्तोलयेत्ततः । रौद्रे संशोष्य तत् सर्व्वं कृत्वा गुण्डकरूपणम् । फाल्गुने प्रतिकेदारे गर्त्तं कृत्वा निधापयेत् । ततो वपनकाले तु कुर्य्यात् सारविमोचनम् । विना सारेण यद्धान्यं वर्द्धते न फलत्यपि" ।

अथ हलसामग्रीकथनम् "ईषा युगो हलस्थाणुर्निर्योलस्तस्य पाशिका । अड्डचल्लश्च शौलश्च पच्चनी च हलाष्टकम् । पञ्चहस्ता भवेदीषा स्थाणुः पञ्चवितस्तिकः । सार्द्धहस्तस्तु निर्योलो युगः कर्णसमानकः । निर्योलपाशिका चैव अड्डचल्लस्तथैव च । द्वादशाङ्गुलमानो हि शौलोऽरत्निप्रमाणकः । सार्द्धद्वादशमुष्टिर्वा कार्य्या वा नवमुष्टिका । दृढा पच्चनिका ज्ञेया लौहाग्रा वंशसम्भवा । आबन्धो मण्डलाकारः स्मृतः पञ्चदशाङ्गुलः । योक्त्रं हस्तचतुष्कञ्च रज्जुः पञ्चकरात्मिका । पञ्चाङ्गुलाधिको हस्तो हस्तौ वा फालकः स्मृतः । अर्कस्य पत्रसदृशी पाशिका च नवाङ्गुला । एकविंशतिशल्यस्तु विद्धकः परिकीर्त्तितः । नवहस्ता तु मदिका(मइ)प्रशस्ता कृषिकर्म्मसु । इयं हि हलसामग्री पराशरमुनेर्म्मता । सुदृढा कर्षकैः कार्य्या शुभदा कृषिकर्म्मणि । अदृढा युज्यमाना सा सामग्री वाहनस्य च । विघ्नं पदे पदे कुर्य्यात् कर्षकाले न संशयः" ।

अथ हलप्रसारणकालादि "अश्विनोत्तररोहिण्यां मृगमूलपुनर्व्वसौ । पुष्याश्रवणहस्तेषु कुर्य्याद्धलप्रसारणम् । हलप्रसारणं कार्य्यं कर्षकैः शस्यवृद्धये । शुक्रेन्दुजीववारेषु शशिजस्य विशेषतः । भौमार्कदिवसे चैव तथैव शनिवासरे । कृषिकर्म्मसमारम्भो राज्योपद्रवमादिशेत् । दशम्येकादशी चैव द्वितीया पञ्चमी तथा । त्रयोदशी तृतीया च सप्तमी च शुभावहा । शस्यच्छेदः प्रतिपदि द्वादश्यां वधबन्धनम् । बहुविघ्नकरी षष्ठी कुहूः कर्षकनाशिनी । हन्त्यष्टमी बलीवर्द्दान् नवमी शस्यघातिनी । चतुर्थी कीटजननी सर्व्वं हन्ति चतुर्द्दशी । वृषे मीने च कन्यायां युग्मे धनुषि वृश्चिके । एतेषु शुभलग्नेषु कुर्य्याद्धलप्रसारणम् । मेषलग्ने पशुं हन्यात् कर्कटे जलजात् भयम् । सिंहे चौरभयञ्चैव कुम्भे सर्पभयं तथा । मकरे शस्यनाशः स्यात् तुलायां प्राणसंशयः । तस्माल्लग्नं प्रयत्नेन कृष्यारम्भे विचारयेत् । शुभेऽर्के चन्द्रसंयुक्ते शुक्लयुग्मेन वाससा । शुक्लपुष्पैश्च गन्धैश्च पूजयित्वा यथाविधि । पृथिवीं हलसंयुक्तां पृथुञ्चैव प्रजापतिम् । अग्नेः प्रदक्षिणं कृत्वा भूरि दत्त्वा च दक्षिणाम् । फालाग्रं स्वर्णसंयुक्तं कृत्वा च मधुलेपनम् । अहेः क्रोडे वामपार्श्वे कुर्य्याद्धलप्रसारणम् । स्मर्त्तव्यो वासवो व्यासः पृथुरामः पराशरः । सम्पूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रसारणम् । कृष्णौ वृषौ हले साध्यौ रक्तौ वा कृष्णलोहितौ । रूक्षपार्श्वौ तयोः स्नाप्यौ नवन्या च घृतेन च । उत्तराभिमुखो भूत्वा इन्द्रायार्घ्यं निवेदयेत् । शुक्लपुष्पसमायुक्तं दधिक्षीरसमन्वितम् । सुदृष्टिं कुरु देवेश ! गृहाणार्घ्यं शचीपते ! । निविष्टो विष्टरे भक्तः संस्थाप्य जानुनी क्षितौ । प्रणमेद्वासवं देवं मन्त्रेणानेन कर्षकः । वृषो महाकटिर्व्वर्ज्यः स्थूललाङ्गूलकर्णकः । सर्व्वशुक्लस्तथा वर्ज्यः कृषकैर्हलकर्म्मणि । हलप्रसारणं कार्य्यं नीरुग्भिः प्रकर्षकैः । छिद्ररेखा न कर्त्तव्या यथा प्राह पराशरः । एका तिस्रस्तथा पञ्च हलरेखाः प्रकीर्त्तिताः । एका जयकरी रेखा तृतीया चार्थसिद्धिदा । पञ्चमाख्या तु या रेखा बहुशस्यप्रदायिनी । हलप्रवाहकाले तु कुम्भमुत्पाटयेद्यदि । गृहिणी म्रियते तस्य तथा चाग्निभयं भवेत् । फालोत्पाटे च भङ्गे च देशत्यागो भवेद्ध्रुवम् । लाङ्गलो भिद्यते वापि प्रभुस्तस्य विनश्यति । ईषाभङ्गो भवेद्वापि कृषको जीवनाशनः । भ्रातृनाशो युगे भग्ने शौले च म्रियते वृषः । योक्त्रच्छेदे च रोगः स्यात् शस्यहानिश्च जायते । निशाले कर्षकस्यापि कष्टं स्यात् राजमन्दिरे । हलप्रवाहकाले तु सौरेयः प्रपतेद्यदि । ज्वरातिसाररोगेण कालुषो

म्रियते तदा । हले प्रवहमाने तु हलो भावत् यदि व्रजेत् । कृषिभङ्गो भवेत्तस्य पीड़ा चापि शरीरजा । हलप्रवाहमात्रन्तु शौरेको नर्द्दते यदि । नाशालीढ़ं प्रकर्षति तदा शस्यं चतुर्गुणम् । प्रवाहाक्रान्तमात्रन्तु गौरेकः स्रवते यदि । अन्यस्य लेहनं कुर्य्यात् तदा शस्यं चतुर्गुणम् । हले प्रवहमाने तु शकन्मूत्रं यदा स्रवेत् । शस्यहानिः शकृत्पाते मूत्रे वन्या प्रजायते । हलप्रसारणं येन न कृतं मृगकुम्भयोः । कुतस्तस्य कृषाणस्य फलाशा कृषिकर्म्मणि । हलप्रसारणं नैवं कृत्वा यः कर्षणं चरेत् । केवलं बलदर्पेण स करोति कृषिं वृथा । स्यात् सुवर्णसमा माघे कुम्भे रजतसन्निभा । चैत्रे ताम्रसमा ख्याता धान्यतुल्या च माधवे । ज्यैष्ठे मृदेव विज्ञेया आषाढ़े कर्द्दमाहुया । निष्फला कर्कटे चैव हलैरुत्पाटिता तु या"। तथाच पराशरः।"हेमन्ते कृष्यते हेम । वसन्ते ताम्ररौप्यकम् । धान्यं निदाघकाले तु दारिद्र्यन्तु घनागमे" ।

अथ वीजस्थापनविधिः "माघे वा फाल्गुने वापि सर्ववीजसमुद्भवः । शोषयेदातपे सम्यक् नोखारे विनिधापयेत् । वीजस्य पुटिकां कृत्वा निधानं तत्र शोधयेत् । वीजं निधानसंमिश्रं फलहानिकरं परम् । एकरूपन्तु यद्वीजं फलं फलति निर्भरम् । एकरूपं प्रयत्नेन तस्माद्वीजं समाहरेत् । सुदृढं पुटकं बद्धा तृणं छिन्द्यात् विनिर्गतम् । अच्छिन्नतृणके तस्मिन् कृषिः स्यात्तृणपूरिता । न वल्मीके न गोस्थाने न प्रसूतानिकेतने । न च वन्ध्यावति गेहे वीजस्थापनमाचरेत् । नोच्छिष्टः संस्पृशेद्वीजं न च नारी रजस्वला । न वन्ध्या गुर्व्विणी चैव न च सद्यःप्रसूतिका । घृतं तैलञ्च तक्रञ्च प्रदीपं लवणं तथा । वीजोपरि भ्रमेणापि कृषको नैव कारयेत्" । तथाच गार्ग्यः "दीपाग्निधूपसंस्पृष्टं दृष्टा चोपहतञ्च यत् । वर्जनीयं सदा वीजं यद्गर्त्तेषु निर्वापितम् । पोषितं वीजसंमिश्रं भ्रान्त्या न निर्वपेत् क्वचित् । निधानं गुड़संमिश्रं तद्वीजं वन्ध्यतां व्रजेत् । कृषाणस्तत्र केदारदलवल्कलकादयः । सर्वे ते वन्ध्यतां यान्ति वीजे वन्ध्यत्वमागते । [illegible] विधिरेव प्रकीर्त्तितः । वीजे [illegible]" ।

अथ वीजवपनविधिः "[illegible] ममम् । आषाढे [illegible] श्रावणे चाधमाधमम् । रोपणन्तु वीजानां शुभो वपनस्य-

समम् । श्रावणे चाधमं प्रोक्तं भाद्रे चैवाधमाधमम् । उत्तरात्रयमूलेन्द्रमैत्रपैत्रेन्दुधातृषु । हस्तायामथ रेवत्यां वीजवापनमुत्तमम् । विष्णुर्व्विशाखासु यमरौद्रानिलाहिषु । वीजानां वपनं कृत्वा वीजं प्राप्नोति मानवः । वपने रोपणे चैव वारयुग्मं विवर्जयेत् । मूषिकाणां भयं भौमे मन्दे शलभकीटयोः । न वापयेत्तिथौ रिक्ते क्षीणे सोमे विशेषतः । एवं सम्यक् प्रयुञ्जानः शस्यवृद्धिमवाप्नुयात् । ज्यैष्ठान्ते त्रिदिनं त्यक्त्वा आषाढादौ तथैव च । वपनं सर्वशस्यानां फलार्थी कृषकस्त्यजेत्" । तथाच वराहः "वृषान्ते मिथुनादौ च त्रीण्यहानि रजस्वला । वीजं न वापयेत्तत्र जनः पापाद्विनश्यति । मृगशिरसि निवृत्ते रौद्रपादेऽम्बुवाची भवति ऋतुमती क्ष्मा भास्करे त्रीण्यहानि । यदि वपति कृषाणः क्षेत्रमासाद्य वीजं न भवति फललाभो दारुणस्तत्र कालः । हिमेन वारिणा सिक्तं वीजं शान्तमनाः शुचिः । इन्द्रं चित्ते समाधाय स्वयं मुष्टित्रयं वपेत् । कृत्वा धान्यस्य पुण्याहं कृषका हृष्टमानसाः । प्राङ्मुखाः कलसं कृत्वा पठेयुर्म्मन्त्रमुत्तमम् । ओँ वसुधे ! हेमगर्भासि यज्ञभागफलप्रदे ! । वसुपुत्र्ये ! नमस्तुभ्यं वसुपूर्णास्तु मे कृषिः । रोपयिष्यामि धान्यानां हृच्चवीजानि प्रावृषि । सुस्था भवन्तु कृषका धनधान्यसमृद्धिभिः । वासवो नित्यवर्षी स्यान्नित्यवर्षास्तु तोयदाः । शस्यसम्पत्तयः सर्वाः सफलाः सन्तु नीरुजः । इति प्रणम्य वसुधां कृषकान् घृतपायसैः । भोजयित्वा स्रष्टा भूरि निर्व्विघ्नां कुरुते कृषिम्" ।

अथ मदिकादानम् । "वीजस्य वपनं कृत्वा मदिकां तत्र दापयेत् । विना मदि(मइ)प्रदानेन शस्यजन्म न जायते" ।

अथ धान्यरोपणविधिः "वपनं रोपणञ्चैव वीजं स्यादुभयात्मकम् । वपनं गर्दनिर्म्मुक्तं रोपणं सगदं विदुः । न हस्तरूपधान्यानां [illegible] न [illegible] [illegible] [illegible]" ।

अथ [illegible] "[illegible] श्रावणे चैव धान्यमाकर्षयेद्बुधः । [illegible] यथा वीजं तथैव हि । भाद्रे च कर्षयेद्धान्यमष्टौ कृषितत्परः । भाद्रे चार्द्धफलप्राप्तिः फलाशा नैव चाश्विने । न विलम्बो धा-

न्यानां कुर्य्यात् कद्दनरोपणे। न च सारप्रदानन्तु तृण-मात्रन्तु शोधयेत्"।

अथ धान्यनिस्तृणीकरणम् "निष्पन्नमपि यद्धान्यमकृत्वा तृणवर्जितम्। न सम्यक् फलमाप्नोति तृणक्षीणा कृषिर्भवेत्। कुलीरभाद्रयोर्म्मध्ये यद्धान्यं निस्तृणं भवेत्। तृणैरपि तु सम्पूर्णं तद्धान्यं द्विगुणं भवेत्। द्विवारमाश्विने मासि कृत्वा धान्यन्तु निस्तृणम्। अथ पार्कशीनं हि धान्यं फलति भाषयत्। तस्मात् सर्व्वप्रयत्नेन निस्तृणां कारयेत् कृषिम्। निस्तृणा हि कृषाणानां कृषिः कामदुघा भवेत्"।

अथ भाद्रे जलमोचनम् "नैरृत्यांशे हि धान्यानां जलं भाद्रे विमोचयेत्। मूलमात्रन्तु संस्थाप्य कारयेज्जलमोक्षणम्। भाद्रे च जलसम्पूर्णं धान्यं विविधबाधकैः। प्रपीड़ितं कृषाणानां न धत्ते फलमुत्तमम्"।

अथ धान्यव्याधिखण्डनमन्त्रः "ओं सिद्धिः, गुरुपादेभ्यो नमः। स्वस्ति, हिमगिरिशिखरात् शङ्खकुन्देन्दुधवलशिखरतटात् नन्दनवनसङ्काशात् परमेश्वरपरमभट्टारकमहाराजाधिराजश्रीमद्रामभद्रपादा विजयिनं समुद्रतटावस्थितनानादेशागतवानरकोटिलक्षाग्रगण्यं खरतरनखरातितीक्ष्णहस्तमुद्गलाङ्गूलं लीलागमनसमुद्भूततवातवेगावधूतपर्व्वतशतं परचक्रप्रमथनं पवनसुतं श्रीहनूमन्तमाज्ञापयन्ति अमुकग्रामे अमुकगोत्रस्य श्रीमतोऽमुकस्य अस्खण्डक्षेत्रे राता भोम्भा उदा गाम्बिया भोम्भी गान्धी द्रोढ़ी पाण्डरमुखी मच्छिधामुण्डी धूलिशृङ्गा मण्डूका इत्यादयः तालजङ्घाः चटकशुकशूकरमृगमहिषमूषिकवराहपतङ्गादयः सर्व्वे शस्योपघातिनो यदि त्वदीयवचनेन न त्यजन्ति तदा तान् वज्रलाङ्गूलेन ताड़यिष्यसीति। ओं क्रां श्रीं घ्रीं नमः"।

मतान्तरे धान्यव्याधिखण्डनमन्त्रः "ओं सिद्धिः, गुरुपादेभ्यो नमः। श्रीरामचन्द्रचरणेभ्यो नमः। स्वस्ति, हिमगिरिशिखरात् शङ्खकुन्देन्दुधवलशिलातटात् नन्दनवनसङ्काशात् परमेश्वरपरमभट्टारकमहाराजाधिराजश्रीमद्रामभद्रपादाः कृतजिनः समुद्रतटावस्थितनानादेशागतवानरकोटिलक्षाग्रगण्यं खरतरनखरातितीक्ष्णहस्तमुद्गलाङ्गूलं लीलागमनसमुद्भूतवातवेगावधूतपर्व्वतशतं परचक्रप्रमथनं पवनसुतं श्रीमन्तं हनूमन्तमाज्ञापयन्त्यदः, अमुकग्रामे कडुकगोत्रस्य श्री अमुकस्य अस्खण्डक्षेत्रे भोम्भा--भोम्भी--पाण्डरमुखी-गान्धी-धूलिशृङ्गादिरोगच्छलेन त्रिपुटी नाम राक्षसी सप्त पुत्रानादाय विविधविघ्नं समाचरन्त्यवतिष्ठते, इदं मदीयशासनलिखनमवगम्य तां पापराक्षसीं सपुत्रबान्धवां वज्रदण्डाधिकलाङ्गूलदण्डैः खरतरनखरैश्च विदार्य्य दक्षिणसमुद्रे लवणाम्बुधौ खण्डशः प्रक्षिपेति, यद्यत्र त्वया क्षणमपि विलम्ब्यते तर्हि त्वं केशरिणा पित्रा पवनेन मात्रा चाञ्जनया शप्तव्योऽसीत्यन्यथा नाहं प्रभुर्न त्वं भृत्य इति ओं घ्रां घ्रीं घ्रः"।

इमं मन्त्रं बिल्वकण्टकेन केतकीदले लिखित्वा शुक्लकेशेनाटित्यवारे क्षेत्रस्यैशान्यां शस्यमध्ये मञ्जरीषु बन्धयेत्। पाटान्तरञ्च लिखित्वाऽलक्तकेनैतन्मन्त्रं शस्येषु बन्धयेत्। न व्याधिकीटहिंस्राणां भयं तत्र भवेत् क्वचित्"।

अथ जलरक्षणम्। आश्विने कार्त्तिके चैव धान्यस्य जलरक्षणम्। न कृतं येन मूर्खेण तस्य का शस्यवासना। यथा कुलार्थी कुरुते कुलस्त्रीपरिरक्षणम्। तथा संरक्षयेत् वारि शरत्काले समागते।

अथ कार्त्तिकसंक्रान्त्यां नलरोपणम् "घटप्रवेशसंक्रान्त्यां रोपयेत्तु नलं तथा। केदारैशानकोणे च सयत्नं कृषकः शुचिः। गन्धैः पुष्पैश्च धूपैश्च शुक्लवस्त्रैर्विशेषतः। पूजयित्वा नलं तत्र पूजयेद्धान्यवृक्षकान्। दधिभक्तञ्च नैवेद्यं पायसञ्च विशेषतः। ततो दद्यात् प्रयत्नेन तालादिशस्यमेव च"। तत्र मन्त्रः। "बालकास्तरुणा वृद्धाः सन्ति ये धान्यवृक्षकाः। ज्येष्ठाश्चापि कनिष्ठा वा सगदा निर्गदाश्च ये। आज्ञया भीमसेनस्य रामस्य च पृथोपरि। ताड़िता नलदण्डेन सर्व्वे स्युः सपुष्पिताः। सपुष्पत्वमासाद्य फलन्त्वाशु च निर्भरम्। सुस्था भवन्तु कृषका धनधान्यसमन्विताः। रोपयित्वा नलं क्षेत्रे मन्त्रेणानेन च क्रमात्। धान्यवृद्धिं परां प्राप्य नन्दन्ति कृषका जनाः। नलन्तु घटसंक्रान्त्यां क्षेत्रे नारोपयन्ति ये। विफला बन्ध्यपुष्पाश्च तेषां स्युर्धान्यजातयः"।

अथ मार्गे मुष्टिग्रहणम्। "ततो मार्गे तु सम्प्राप्ते केदारे शुभवासरे। धान्यस्य लवनं कुर्य्यात् सार्द्धमुष्टिद्वयं शुचिः। गन्धैः पुष्पैश्च धूपैश्च नैवेद्यैर्धान्यवृक्षकान्। पूजयित्वा यथान्यायमैशाने लवनं चरेत्। ततस्तन्मस्तके कृत्वा सम्मुखं शीर्षकान्वितम्। न स्पृष्ट्वा कमपि क्वापि व्रजेन्मौनेन मन्दिरम्। सम्पदयां ततः पादं दत्त्वा मुख्यनिकेतने। प्रतिगृह्य स्थापयेत्तत्तु पुष्पगन्धादिपूजितम्। न मुष्टिग्रहणं कुर्य्यात् कदाचिद्घटपौषयोः। अंशो मुष्टिग्रहो

मार्गे धनधान्यफलप्रदः। सार्द्धं कुम्भद्वयं मार्गे योऽस्थित्वा लवनञ्चरेत्। पदे पदे विफलता तस्य धान्यं कुतो गृहे। रौद्रे मघे तथा सौम्ये पुष्ये हस्तानिलोत्तरे। धान्यच्छेदं प्रशंसन्ति मूलश्रवणयोरपि। व्यतीपाते च भद्रायां रिक्तायां वैधृतौ तथा। भौमार्किबुधवारेषु मुष्टिसंग्रहणं त्यजेत्"।

अथ मार्गे मेधिरोपणम् "कृत्वा तु खलकं मार्गे समं गोमयलेपितम्। रोपणीया प्रयत्नेन तत्र मेधिः शुभेऽहनि। स्त्रीनाम्ना तरुणा कार्य्या मेधिर्वृश्चिकभास्करे। मेधेर्गुणेन कृषकः शस्यवृद्धिमवाप्नुयात्। न्यग्रोधः सप्तपर्णी वा गाम्भारी शाल्मलिस्तथा। औदुम्बरो विशेषेण अन्यो वा क्षीरवांस्तरुः। वटादीनामभावे तु कार्य्या स्त्रीनामधारिका। वैजयन्तीयुता मेधिर्निर्व्वसर्पपरिवर्जिता। धान्यकेशरसंयुक्ता तृणमर्कटकान्विता। अर्च्चिता गन्धपुष्पाभ्यां मेधिः शस्यसुखप्रदा। पौषे मेधिर्न चारोप्या क्रूराहे श्रवणे तथा। शस्यवृद्धिकरी मार्गे पौषे शस्यक्षयङ्करी। कपित्थविल्ववंशानां तृणराशां तथैव च। मेधिः कार्य्या नरैर्नैव यदीच्छेदात्मनः शुभम्"।

अथ पौषे पुष्ययात्राकथनम् "अखण्डिते ततो धान्ये पौषे मासि शुभे दिने। पुष्ययात्रां जनाः कुर्युरन्योन्यं प्रेमसन्निधौ। परमान्नञ्च तत्रैव व्यञ्जनैर्मत्स्यमांसजैः। निरामिषैस्तथा दिव्यैर्हिङ्गुमारीचसंयुतैः। दधिभिश्च तथा दुग्धैराज्यपायससम्मिश्रितैः। नानाफलैश्च मूलैश्च मिष्टपिष्टकविस्तरैः। एभिः सुढौकितं कृत्वा तदन्नं कदलीदले। भोजयेयुर्जनाः सर्वे यथावृद्धपुरःसराः। आचम्य च ततस्तत्र चन्दनैश्च चतुःसमैः। अन्योन्यं लेपनं कुर्य्युस्तैलैः पक्वैः सुगन्धिभिः। कर्पूरवासितं दिव्यं ताम्बूलं गन्धधूपितम्। भक्षयेयुः प्रपर्य्याप्तं परिधाय नवाम्बरम्। पुष्पैराभरणं कृत्वा नमस्कृत्य शचीपतिम्। गीतैर्वाद्यैश्च नृत्यैश्च कुर्य्युस्तत्र महोत्सवम्। ततस्तु हर्षिताः सर्वे मन्त्रं श्लोकचतुष्टयम्। हस्तसंपुटकं कृत्वा पठेयुर्वीक्ष्य भास्करम्। क्षेत्रे चाखण्डिते धान्ये तव देव! प्रसादतः। पुष्यन्तु मिलिताः सर्वे शस्यानि शुभकारकाः। मनसा कर्म्मणा वाचा ये चास्माकं विरोधिनः। ते सर्वे प्रशमं यान्तु पुष्ययात्राप्रभावतः। धान्यवृद्धिर्यशोवृद्धिः प्रवृद्धिः पुत्रदारयोः। राजसम्मानवृद्धिश्च गवां वृद्धिस्तथैव च। मन्त्रप्रावनवृद्धिश्च लक्ष्मीवृद्धिरहर्निशम्। अस्माकमस्तु सततं यावत् पूर्णो न वत्सरः। ततः प्रमुदिताः सर्वे व्रजेयुः स्वनिकेतनम्। न भोजनं पुनः कुर्य्युस्तस्मिन्नहनि मानवाः। हिताय सर्वलोकानां पुष्ययात्रा मनोहरा। पुरा पराशरेणेयं कृता सर्वार्थसाधिनी। तस्मादियं प्रयत्नेन पुष्ययात्रा विधानतः। सर्वविघ्नप्रशान्त्यर्थं कार्य्या शस्यस्य वृद्धये। पुष्ययात्रां न कुर्वन्ति ये जना धनगर्व्विताः। न विघ्नोपशमस्तेषां कुतस्तद्वत्सरे सुखम्। पौषे मासि ततः कुर्य्याद्धान्यच्छेदं विचक्षणः। मर्द्दयित्वा यथायोग्यमाढकेन प्रमापयेत्। सुप्रमाप्य च तद्धान्यं यथालाभं प्रबन्धयेत्। प्रमादेनापि पौषे तु व्ययं तस्य न कारयेत्। मापनं सर्वशस्यानां वामावर्त्तेन कीर्त्तितम्। धान्यानां दक्षिणावर्त्तं मापनं क्षयकारकम्। वामावर्त्तेन सुखदं धान्यवृद्धिकरं परम्"।

आढकलक्षणम् "द्वादशाङ्गुलकैर्मानैराढकः परिकीर्त्तितः। श्लेष्मातकाम्रपुन्नागकृतमाढकमुत्तमम्। कपित्थपर्कटीनिम्बजनितं दैन्यवर्द्धनम्"।

अथ धान्यस्थापनम्। हस्ते स्वातौ च पुष्यायां रेवत्याञ्च प्रजापतौ। यममूलोत्तरे सौम्ये मघायाञ्च पुनर्वसौ। जीवे सोमे भृगोर्वारे निधने क्रूरवर्जिते। मीनलग्ने शुभे कन्ये धान्यस्थापनमुत्तमम्"।

कृषिकर्त्तव्यतायां विशेषो वृहत्पराशरसं॰ दर्शितो यथा "अतःपरं गृहस्थस्य कर्माचारं कलौ युगे। धर्मं साधारणं साक्षाच्चतुर्वर्णक्रमागतम्। युष्माकं सम्प्रवक्ष्यामि पराशरप्रचोदितम्। षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत्। हीनाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम्। क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत्। स्थिराङ्गं नीरुजं तृप्तं शान्तं षण्डविवर्जितम्। हृष्टं सबलप्राणमनड्वाहं तु वाहयेत्। वाहयेद्दिवसस्यार्धं पश्चात् स्नानं समाचरेत्। कुगवेन कृषिं कुर्य्यात् सर्वथा धेनुसंग्रहम्। बन्धनं पालनं रक्षां द्विजः कुर्य्याद् गृहे गवाम्। यस्माच्च यत्नतो रक्ष्या वर्धन्ते ते यथाक्रमम्। न दूरं तास्तु मोक्तव्याश्चरणाय कदाचन। दूरे गावश्चरन्त्यो यं न भवन्ति शुभावहाः। प्रातरेव हि दोग्धव्या दुग्धाः सायं तथा गृही। दोग्धुर्विपर्य्यये नैव वर्द्धन्ते ताः कदाचन। अनादेयतृणं भुक्त्वा स्रवन्त्यनुदिनं पयः। तुष्टिकृद्देवतादीनां पूज्या गावः कथस्व ताः। यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः। पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु। या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः। सर्वदेवमयी गौस्तु तुष्येत्तद्भक्तितो हरिः।

हरन्ति स्वर्गमात्पापं पयसा पोषयन्ति याः। प्रापयन्ति दिवं दत्ताः पूज्या गावः कथन्न ताः। यच्छफाहतभूमेस्तु उद्यतः पांशुसंचयः। पोषयेत् पुरुषस्येनो वन्द्या गावः कथन्न ताः। मातृत्वं हि यस्यास्तु पितुः पुनाति पातकम्। किमपूज्यं हि तस्या गोरिति पाराशरोऽब्रवीत्। गौरवत्सा न दोग्धव्या नचैव गर्भसम्भिनी। प्रसूता च दशाहाद्वर्गिग्दोग्धा चेन्नरकं व्रजेत्। दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सभूः। सा साधुभिर्न दोग्धव्या वर्णिभिः सुखमीप्सुभिः। कुलान्ते पुष्पिता गावः कुलान्ते बहवः स्तनाः। कुलान्ते चलचित्ताः स्त्री कुलान्ते बन्धुविग्रहः। एकत्र पृथिवी सर्वा सशैलवनकानना। तथा गौर्ज्यायसी साक्षादेकत्रोभयतोमुखी। यथोक्तविधिना यस्ता वर्णैः पाल्यास्तु पूजिताः। पालयेत् पूजयेत्ताः स प्रेत्येह च मोदते। दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि। बन्धनीयास्तथैतास्तु न च प्राक्पश्चिमामुखाः। गोष्पदार्जितशालायां सुतीक्ष्णं लौहदात्रकम्। स्थाप्यन्तु सर्वदा तस्यां गवि लुप्तविमोक्षणात्। गावो देयाः सदा रक्ष्याः पोष्याः पाल्याश्च सर्वदा। ताडयन्ति च ये पापा ये चाकर्षन्ति ता नराः। नरके पच्यन्तेऽङ्गानि श्वासेन च प्रपीड़िताः। विकर्षन्तीं न दण्डेन पालकस्तां निवर्त्तयेत्। गच्छ गच्छेति तां ब्रूयान्मा भैरिति वारयेत्। संस्पृशन् गां नमस्कृत्य कुर्य्यात्तान्तु प्रदक्षिणम्। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा। तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्। सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः। पृथिव्यां यानि तीर्थानि समुद्राश्च सरांसि च। गवां शृङ्गोदकस्नाने कलां नार्हन्ति षोड़शीम्। कुतस्तेषां हि पापानि येषां शृङ्गमलङ्कृतम्। सततं बालवत्साभिर्गोभिः स्वीभिरिव स्वयम्। ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्। तिष्ठन्त्येकत्र मन्त्राणि हविरेकत्र तिष्ठति। गोभिर्यज्ञाः प्रवर्त्तन्ते गोभिर्देवाः प्रतिष्ठिताः। गोभिर्वेदाः समुत्कीर्णाः सषड़ङ्गपदक्रमाः। सौरभेयास्तु तस्याग्रे पृष्ठतोऽप्यस्य ताः स्थिताः। वसन्ति हृदये नित्यन्तासां मध्ये वसन्ति ये। ते पुण्यपुरुषाः शोच्यं नाकेऽपि दुर्लभाश्च ते। शृङ्गमूले स्थितो ब्रह्मा शृङ्गमध्ये तु केशवः। शृङ्गाग्रे शङ्करं विद्यात्त्रयोदेवाः प्रतिष्ठिताः। शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च। सर्वे देवाः स्थिता देहे सर्वदेवमयी हि गौः। ललाटाग्रे स्थिता देवी नासामध्ये तु

षण्मुखः। कम्बलाश्वतरौ नागौ तत्कर्णे तु व्यवस्थितौ। स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ। दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः। सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः। ऋषयो रोमकूपेषु प्रस्रावे जाह्नवीजलम्। कालिन्दी गोमये तस्या अपरा देवतास्तथा। अष्टाविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः। उदरे गार्हपत्योऽग्निर्हृदये दक्षिणस्तथा। मुखे चाहवनीयस्तु चावसथ्यस्तु च कुक्षिषु। एवं यो वर्त्तते गोषु ताडने क्रोधवर्जितः। महतीं श्रियमाप्नोति स्वर्गलोके महीयते। कुल्यं तस्या न लङ्घेत पतितं न वर्जयेत्। यावज्जिघ्रति तद्गन्धं तावत्पुण्यं प्रवर्द्धते। यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम्। शिवस्यायतनं दत्तं दत्तं तेन च विश्वकम्। उक्ता गौर्वेधसा सृष्टा तस्य ह्युत्पादनाय च। तैरुत्पादितशस्येन सर्वमेतद्धि धार्य्यते। यस्तैतान् पालयेत् यत्नात् वर्द्धयेच्चैव यत्नतः। जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च। यावद्गोपालने पुण्यमुक्तं पूर्वमनीषिभिः। उक्षणोऽपि पालने तेषां फलं दशगुणं भवेत्। जगदेतद्धृतं सर्वमनड्डुद्भिश्चराचरम्। वृष एष कृतोरक्ष्यः पालनीयस्तु सर्वदा। धर्मोऽयं भूतले साक्षाद्ब्रह्मणा हितकारिणा। त्रैलोक्यधारणायालमन्नानाञ्च प्रसूतये। अनादेयानि धान्यानि विध्वंसन्ति सकामतः। भ्रमिता भूतलं दूरकृष्णगड्डो न पूजयेत्। उत्पादयन्ति शस्यानि मर्दयन्ति वहन्ति च। आनयन्ति दधीयःस्यकृष्णोवा कोऽधिको भुवि। स्कन्धेन दूराच्च वहन्ति भारमन्नादिकानां न च भक्षयन्ति। स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्धयन्ति। पुण्यास्तु गावो वसुधातले मां बिभ्रत्यलं पृष्ठगगर्भभारम्। भारः पृथिव्या दशताड़िताया एकस्य चाप्यो ह्यपि साधुवाचः। एकेन दत्तेन वृषेण येन दत्ता भवेयुर्द्दश सौरभेयाः। दाने ह्यपीयं धरणी समा नो तस्माद्वृषात् पूजितमस्ति नान्यत्। उत्पाद्य शस्यानि तृणाङ्कुरान्ति तदेव भूयः सकलं वहन्ति। न भारखिन्नाः प्रवदन्ति किञ्चिदहोवृषाद्धार्यति जीवलोकः। तृतीयेऽह्नि चतुर्थे वा यद्देवोक्ता दृढोभवेत्। तदा नस्या न भेत्तव्या नैव प्राग्दुर्बलस्य च। नासावेधनकीलन्तु खादिरं वाथ शैंशपम्। द्वादशाङ्गुलकत्कार्य्यन्तन्मध्यस्तौ ... दमे च वा। शालां द्विपानां वृषगोहयानां तां याम्यदिग्द्वारवतीं विदध्यात्। सौम्यां ककुबद्वारवतीं वृषोभान्ते-

वां शमिच्छन् हितमात्मनश्च । गावो वृषो वा हयहस्तिनो वा अन्येऽपि सर्वे पशवो द्विजेन्द्राः । याम्यानना नैव तु उत्तरादिङ्मुखांशकास्ते खलु बन्धनीयाः । शालाप्रवेशे वृषगोपशूनां राजापि वक्षाश्वयकुञ्जराणाम् । क्षौमस्य सप्तार्चिषि शास्त्रयुक्तं कुर्य्याद्विधिज्ञो द्विजपत्तनस्य । लाङ्गलं तत् प्रवक्ष्यामि यत्काष्ठं दृतुमानतः । हलीशायास्तथा मानं प्रतोदस्य युगस्य च । चत्वारिंशत्तथा चाष्टावङ्गुलानि कृषः (कलः) स्मृतः । अथा शामोऽङ्गुलैर्भिन्नो हलीशावेधनश्च यः । षोडशैव तु तस्याधः षड्विंशति रथोपरि । वेधस्तथा च कर्त्तव्यः प्रमाणेन षडङ्गुलः । अष्टाङ्गुलमरस्तस्य वेधादूर्द्ध्वं प्रकल्पयेत् । पीशा दशाङ्गुला चोर्द्ध्वं हस्तयाहो ततः स्मृतः । अङ्गुलैश्चाष्टभिस्तत् स्याद्वेधः स्यात् प्रतिहारकः । तस्यावस्थाद्यङ्गुल्यारि स वेधश्चतुरङ्गुलः । प्रतिहारी शुभा कार्य्या तद्वेधस्त्र्यङ्गुलो भवेत् । पञ्चाङ्गुलमरस्तस्याः सीरस्येति विभाजनम् । पृथुत्वं शिरसोधार्य्यं हस्ततलप्रमाणकम् । अङ्गुलानि तथा चाष्टौ उरसः पृथुता स्मृता । बन्धहीनः प्रतीहारी षड्विंशदङ्गुला भवेत् । तृतीयाया लोकपालस्य उक्ता दामादिदारकत् । न सीरं चीरवृक्षस्य न विल्वपिचुमर्दयोः । इत्यादीनां हि कुर्वाणो न नन्दति चिरं गृही । प्राञ्जला सप्तहस्ता तु हलीशा विदुषां मता । तस्याः(ईशायाः)वेधः समर्णायाः कार्य्यो नववितस्तिभिः । प्रत्यञ्चयोर्न तत्कुर्य्यान्कीर्तितौ तौ प्रकीर्तितौ । प्रमादतस्तु ताः कुर्वन् समस्तो नश्यते गृही । नीचोच्चप्रमानेन तज्ज्ञास्तां प्रवदन्ति हि । चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत् । मेषशृङ्गाः कदम्बस्य शालधवद्रुमस्य च । सथ्या (सापि) वेधार्द्धिकः कार्य्या दशाङ्गुलप्रमाणिका । तन्माने च प्रमाणे च तदन्तरदशाङ्गुलम् । प्रतोदं विपमध्यस्थ वैणवश्च चतुःकरः । तदग्रे तु प्रकर्त्तव्या यवाकारा तु लोहवत् । हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः । कुर्य्यादनड्हां दैन्याददैन्याद्वरकं व्रजेत् । यथाऽभीष्टं यथाशोभं वाहकस्य प्रमाणतः । भूमेश्च कर्षणायालं तज्ज्ञाः सर्वं वदन्ति हि । योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा । श्रवणचालसंयुक्ते पुण्येऽह्नि तद्विधीयते । यत्र दिने तु बुध्येत तत्र कार्य्यं विजानता । यत्र कृत्यं हितं चापि पुण्यं वा मनसि स्मरेत् । तत्र विद्वान् द्विजश्रेष्ठः पुण्येऽह्नि तद्विधीयते । माङ्गल्याद्यं द्विजः कृत्वा यथोक्तविधिना गृही । द्रव्यकालानुसारेण कुर्वतो धर्म्मतः कृषिम् । प्रोक्षयन् मण्डलं पुष्पधूपदीपैः समर्च्चयेत् । इन्द्राय च तथाश्विभ्यां मरुद्भ्यश्च तथा द्विजः । कुर्य्याद्बलिहृतिं विद्वान् उदकस्त्रयाय च । तथा कृमाश्च सीतायै अनुमत्यै तथा बलिम् । नमः स्वाहेति मन्त्रेण संशाङ्कसात्मनः शुभम् । दधिगन्धाक्षतैः पुष्पैः शमीपत्रैस्तिलैस्तथा । दद्याद्बलं वृषाणाञ्च तथाज्यप्राशनं ततः । संघृष्य सीरफालाग्रे हेम्ना वा राजतेन वा । प्रलिप्य मधुसर्पिर्भ्यां कुर्य्याच्चैव प्रदक्षिणम् । अन्युक्षाणोर्मङ्गलं कुर्य्यात् कृत्वा सीरप्रवाहणम् । पुष्पं लाङ्गलकल्याणं कल्याणाय नमोऽस्त्विति । सीतायाः स्थापनं कुर्य्यात् पाराशरस्मृतिं स्मरन् । सीतां युञ्जत इत्याद्यैर्मन्त्रैः सीरं प्रवाहयेत् । दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदैः । सीतां पूज्य यशो भक्तैरक्षवस्त्रैर्विधानके । सप्त धान्यानि चादाय प्रोक्ष्य पूर्वामुखो हली । तानि दक्षोषणः स्वेते किरन् भूमौ कृषेद्द्विजः । न यवैर्न तिलैर्हीनं द्विजः कुर्य्याच्च कर्षणम् । तद्विहीनन्तु कुर्वाणं न प्रशंसन्ति देवताः । तिलमात्रच्युतं तोयं दक्षिणस्यां मतेर्दिशि । तेन तृप्यन्ति पितरो यावच्च तिलविक्रयः । विक्रीणीते तिलान् यस्तु तर्पयेत्सर्वदेवताः । विमुच्य पितरस्तन्तु प्रयान्तीय तिलैः सह । कृपाजलं यवस्तम्बपत्रेभ्यो भूतले पतत् । पयोदविकृताद्यैस्तु तर्पयेत् सर्व्वदेवताः । देवपर्ज्जन्यभूसीरयोगात् कृषिः प्रजायते । व्यापारात् पुरुषस्यापि तस्मात्तलोद्यतो भवेत् । शालीन् सशणकार्पासं वार्त्ताकुप्रभृतीनि च । वापयेत्सर्व्वबीजानि सर्व्वदा पी न सीदति । चन्द्रक्षये पतिर्विप्रो यो युनक्ति वृषान् कचित् । तत्पञ्चदशवर्षाणि त्यजन्ति पितरो हि तम् । चन्द्रक्षये द्विजो विद्वान् यो भुङ्क्ते तु परान्नकम् । भोक्तुर्मासार्जितं पुण्यं भवेदन्नवशस्य तत् । चन्द्रार्कयोस्तु संयोगे कुर्य्याद्यः स्त्रीनिषेवणम् । रेतोभोजिनस्तस्य पञ्चमासं पितरोऽहिताः । चन्द्रक्षये च यः कुर्य्यात्तरस्तक्वनिकृन्तनम् । तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः । वनस्पतिगते सोमे योऽध्वध्वानं व्रजेन्नरः । भ्रष्टद्विजकर्म्माणं तं त्यजन्त्यमरादयः । वासांसीन्दुप्रणाशे यो रजकस्याप्रतिः क्षिपेत् । पिबन्ति पितरस्तस्य मासं वस्त्रजलन्तु तत् । सोमक्षये द्विजो याति यत्कालस्तु कृतायनम् । तदेव पितृयापाग्निदग्धो नरकमाविशेत् ।

अष्टमी कामभोगेन, षष्ठी तैलोपभोगतः। कृष्टस्तु दन्तकाष्ठेन क्रिमस्त्वाखप्रमं कुलम्। चन्द्रामतीतोः पुरुषस्तु दैवाद्द्वादशगत्या यदि दन्तकाष्ठम्। नराधिराजैः संकृतस्तु तेन घातः कृतः स्यात्पितृदेवतानाम्। तथाप्यजय विधाणानि गावश्चैव दृषास्तथा। चरणाय विसृज्यन्ते आगतान्यपि भोजयेत्। य उत्पाद्येह शस्यानि सर्वाणि तृणचारिणः। जगत्सर्व्वं धृतं यैस्तु पश्यन्ते किन्न ते दृषाः। येनैतेन महत्तेन दत्तं गोदशकम्भवेत्। यद्रूपेण स्थितो धर्म्मः पश्यन्ते किन्न ते दृषाः। पाल्याहि यत्नतस्ते वै वाहनीया यथाविधि। स याति नरकं घोरं यो वाहयत्यपालयन्। नाधिकाङ्गो न हीनाङ्गः दुष्प्रिताङ्गो न दूषितः। वाहनीयो हि शूद्रेण वाहयन् क्षयमाप्नुयात्। वर्ज्जयेद्दुष्टदोषांश्च गावो वै दोहने नरः। पाल्या वै यत्नतः सर्व्वे पालयन् शुभमाप्नुयात्। अन्नार्थे नानुजाताः ससर्ज्ज परमेश्वरः। अन्नेनाप्यायते सर्व्वं त्रैलोक्यं सचराचरम्। अग्निर्ज्ज्वलति चान्नार्थं वाति चान्नाय मारुतः। स्पृह्यति चाम्भसां सूर्य्यो रसानन्नाय रश्मिभिः। अन्नं प्राणो बलं चान्नमन्नाज्जीवितमच्यते। अन्नं सर्व्वस्य चाधारः सर्व्वमन्ने प्रतिष्ठितम्। सुरादीनां हि सर्व्वेषामन्नं बीजं परं स्थितम्। तस्मादन्नात्परं तथ्यं न भूतं न भविष्यति। द्यौः पुमान्, धरणी नारी, अम्भोबीजमिदं स्मृतम्। द्युधात्रीतोयसंयोगादन्नादीनां हि सम्भवः। आपोमूलं हि सर्व्वस्य सर्व्वमप्सु प्रतिष्ठितम्। अतोऽमृतरसा ह्यापः आपः शुक्रं बलं महः। सर्व्वस्य बीजमापो वै सर्व्वमद्भिः समाहृतम्। सत्त्व आप्यायना कृत्याप: आपो ज्येष्ठतरा कृताः। किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः। न जीवन्ति विना तास्तु तस्मादापो महत्तमम्। दत्तानि चाद्भिरेतस्याः किं न दत्तं त्रिलोके भवेत्। तस्याद्येन महत्तेन सर्व्वं दत्तं भवेदिह। अतोऽन्नाद्यार्थभावेन कर्त्तव्यं कर्षणं द्विजः। यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम्। सीते! सौम्ये! कुमारि! त्वं देवि! देवार्च्चिते! शिवे। सन्तता हि यथा सिद्धा यथा मे सिद्धिदा भव। महत्सूनोविना नाम्ना सीतायाः स्थापनं विना। विनाभ्युक्षणरक्षार्थं सर्व्वं हरति राक्षसः। वापने लवने क्षेत्रे खले गन्धाप्रयाहृणे। एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने। देवतायतनोद्यानमिपातस्थानगोव्रजान्। सीमाश्मशानभूमिश्च छत्र-

च्छायाश्रितिं तथा। भूमिं निखातयूपाञ्च अयनस्थानमेव च। अन्यामपि हि चाशाहृां न कर्षेत् कृषिकृत् धराम्। नोषरां वाहयेद्भूमिं वर्च्चास्थिकर्करीवृताम्। वाहयन्नप्रमत्तश्च न नदीपुलिनं तथा। यद्यसौ वाहयेल्लोभात् द्वेषाद्वापि हि मानवः। क्षीयते सोऽचिरात्पापात् सपुत्रपशुबान्धवः। नरकं घोरतामिस्रं पापीयान् याति चैनसा। परकीयां योऽपहृत्य कृषिक्षेत्राहरेद्धराम्। स भूमिस्थेन पापेन कृन्तन्नरकं पचेत्। न दूरं वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा। वाहयन् पथि क्षेत्रं वाहयन्दुःखभाग् भवेत्। क्षेत्रेष्वेवं दृतिं कुर्य्यात् यामुष्ट्रो नावलोकयेत्। न लङ्घयेत्पशुर्व्वां वा नाभीघ्राञ्च शूकरः। तच्चश्च यत्नतः कार्य्यो मृगयुत्रासनाय च। अतोऽप्युपद्रवं राजतस्करादिसमुद्भवम्। संरक्षेत्सर्व्वतो यत्नाद्यत्नात् स्पृह्यात्यसौ करात्। कृषिकर्म्मानवस्त्वेवं मत्वा धर्म्मं कृषेर्ध्रुवम्। अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम्। निम्नां हि वाहयेद्भूमिं यत्र तिष्ठते जलम्। वाहयेत्तु जलाभ्यर्णं पुटे ससैकतस्थले। शारदस्तु चकैः स्थाने कलम्बं वापयेद्बली। चक्रान्तकात्तु कार्पासं तदन्यत्र तु हैमनम्। वसन्तग्रीष्मकालीयमपस्तु स्निग्धेषु तद्विदः। केदारेषु तथा शालीन् जलोपान्तेषु चेक्षवः। इन्ताकशाकमूलानि कन्दानि च जलान्तिके। दृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान्। गोधूमांश्च मसूरांश्च खल्वान् खलु कुलत्थकाः। समस्तवेषु चोप्यानि भूमीजीवान् विजानता। तिला बहुविधास्ताभ्या अतसीशणमेव च। सद्‌भूतं जगद्धं वापयेत्कर्षकत्वरः। संपश्येत्वरतः सर्व्वान् गेहपालीन् स्वयङ्कृषी। चिन्तयेत्स्वमात्मानं स्वयमेव कृषिं व्रजेत्। प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम्। तृतीयं विक्रयः प्रोक्तश्चतुर्थं राजसेवनम्। नक्षैर्विलिख्यते यस्याः भ्रूयुद्धीयं मनीषिणः। तस्याः सोऽरिवदारेण किन्न पापं क्षितेर्भवेत्। तृणैकच्छेदनालेन मोच्यते चयमायुषः। अवलम्बकन्दनिर्वासादसङ्ग्रातमवेदयम्। यत्सेचनात् कीटवधस्तथा मर्द्दनादपि। अंहः कुक्कुटिकानाञ्च तदंहः कृषिजीविनाम्। वधकानाञ्च यत्पापं यत्पापं मृगयोरपि। कदर्य्याणाञ्च तत्पापं तत्पापं कृषिजीविनाम्। पर्णानाञ्च स्पृहस्यानां कृषिवृत्त्युपजीविनाम्। तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः। द्वादशो नवमो वापि

सप्तमः पञ्चमोऽपि वा । धान्यभागः प्रदातव्यो देहिनः क्षेत्रिणा ध्रुवम् । अज्ञयद्यूतधर्मी च विद्विषितः क्षेत्रभुग्भवेत् । एकैकांशापकर्म स्यादाद्यावद्दशमसप्तमौ । ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः । स च भागः प्रदातव्यो यतस्तौ कृषिभागिनौ । व्यूढौ त्व स्वार्थमात्राया देयोंऽशः स्याच्चतुर्दशः । एकैकांशाप कर्म स्यात् यावद्दशमसप्तमौ । ब्राह्मणस्तु कृषिं कृत्वा हृदिक्स्था धनम् । न किञ्चित् कस्यचिद्दद्यात् सर्वस्य प्रभुर्यतः । ब्रह्मा वै ब्राह्मणानां स्यात्प्रभुत्वमसृजदादितः । तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि । पशुपाल्याय धान्योत्पत्त्यै ऊरुभ्याञ्च तथा विशः । द्विजदास्याय पद्भ्यां शूद्रमकल्पयत् । यत्किञ्चिज्जगतीसंस्थं भूगेहाश्वगजादिकम् । स्वामित्वेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् । ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ । न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत् । तस्मान्न ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम् । ग्रामेशस्य नृपस्यापि किञ्चिन्मात्रमसौ बलिम् । अथान्यत्सम्प्रवक्ष्यामि कृषिकर्मविधिकारणम् । संयुक्तः कर्षकोऽयेन स्वर्गलोकमवाप्नुयात् । सर्वसत्त्वोपकाराय सर्वत्र कृषिकर्षकः । कुर्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीवकृत् । सर्वेषां स्थितिकारण्यास्य देवपितृभिः पुनः । मनुष्याणान्तु पोषाय कृषिं कुर्यात् कृषीवलः । वयांसि चान्यसत्त्वानि क्षुत्तृष्णातो विमोचयन् । विमुक्तः सर्वपापेभ्यः स्वर्गलोकमवाप्नुयात् । चतुर्दन्तु खले कुर्यात्प्राच्यामतिघनावृतिम् । सैकद्वारपिधानञ्च पश्चाच्चैव सर्वतः । खरोष्ट्राजोरणादींस्तु विशतस्तु निवारयेत् । शूकरान् श्वशृगालादिकाकोलूककपोतकान् । दिग्भ्यश्च प्रोक्षणं कुर्यात् दानीयाम्बुक्षणाम्बुभिः । रक्षा च भस्मना कुर्याज्जलधाराभिरन्वहम् । त्रिसन्ध्यामर्चयेद्गोतां पराशरऋषिं स्मरन् । प्रेतभूतादिनामानि न वदेच्च तदग्रतः । स्मृतिशास्त्रेष्वयत्नात् कर्त्तव्यं परिरक्षणम् । हरन्त्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि । प्रशस्तेऽदिनपर्वाह्णे नापराह्णे न सन्ध्ययोः । धान्यस्नानं सदा कुर्यात्सीतापूजनपूर्वकम् । यजेत खलभिक्षाभिः खलेऽरोहिण्यपि हि । भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम् । खलयज्ञाः पक्षिणां वै ब्रह्मणा निर्मिताः पुरा । भागधेयमथो कृत्वा तां यज्ञलीह मानिकाम् । यतस्त्वा-इन्द्रो देवाः पितरः सोमपादयः । सनकादिमनुष्याश्च ये-चान्ये दक्षिणागताः । तानुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं खले । विवाहे स्वनयने च संक्रान्तौ पर्वसु च । पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् । अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः । दीनानामप्यनाथानां कुब्जानां कुष्ठरोगिणाम् । लोभात्स्वर्बधिरादीनां सर्वेषामपि दीयते । वर्णानां पतितानाञ्च कुक्कुरपूतानि तर्पयेत् । चाण्डालानां श्वपाकानां प्रीत्यात्युच्चावचान्ददत् । ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः । स्तोकशः सीरिभिः सर्वे वाक्याभिष्टकर्मभिः । दत्त्वा त्वन्वकया वाचा प्रणिपत्य विसर्जयेत् । तत्कृत्वा स्वगृहं गच्छेत्कुर्यादभ्युदयं चरेत् । शरदि नवशस्यसम्पन्नैः श्राद्धमाचरेत् । नाकृत्वा तत्तदश्नीयाद्यदन्नं स्वर्ग्यमश्नुते । कृष्या तूत्पाद्य धान्यानि खलयज्ञं समाप्य च । सर्वसत्त्वहितोद्युक्त इहामुत्र सुखी भवेत् । कृषेरन्योत्तमं धर्मं न लभेत् कृषितोऽन्यतः । न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति । अवकृतत्वं निरन्नत्वं कृषितो नैव जायते । अनातिथ्यञ्च दुःखित्वं दुर्मनो न कदाचन । निर्धनत्वमसभ्यत्वं विद्यायुक्तस्य कर्हिचित् । अस्थानित्वमभाग्यत्वं न सुशीलस्य कर्हिचित् । वदन्ति कवयः केचित् कृष्यादीनां विशुद्धये । लाभस्यांशप्रदानञ्च सर्वेषां शुद्धिकृद्भवेत् । प्रतिपक्षचतुर्थांशं वणिग्लाभं तृतीयकम् । कृषितो विंशतिश्चैव ददतो नास्ति पातकम् । राज्ञो दत्त्वा च षड्भागं देवतानां च विंशकम् । त्रयस्त्रिंशच्च विप्राणां कृषिकर्मा न लिप्यते । कृष्या समुत्पाद्य यवादिकानि धान्यानि भूयांसि, मखं विधाय । मत्तो यद्यप्यपि पराशरेण तस्यामयः कश्चिदथापि दोषः । देवा मनुष्याः पितरश्च सर्वे साध्याश्च यक्षाश्च सकिन्नराश्च । गावो द्विजेन्द्राः सह सर्वसत्त्वैः कृष्यां न तृप्तानि मनाग् दुरेति । यश्चैतदालोच्य कृषिं विदध्यात् लिप्येत पापैर्न स भूमिपश्च । सीरेण तस्यापि विदारिताऽपि स्याद्भूतधात्री वरदानदात्री । षट् कर्माणि कृषिं ये तु कुर्युर्ज्ञानविधिं द्विजाः । ते सुरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः । षट्कर्मभिः कृषिः प्रोक्तो द्विजानां षट्कर्मिणाम्” ।

कृषिकार्य्यारम्भमुहूर्त्तो द कु० चि० पी०धा० दर्शितं यथा “मूलद्वीशमघाचरध्रुवमृदुक्षिप्रैर्विनार्केऽशनिं पापैर्हीनबलौषधौ जलमृहे शुक्रे विधौ मांसले । लग्ने देवगुरौ-हलप्रवहणं शस्तं न सिंहे घटे कर्कजैणघटे तनौ व्यय-

करं रिक्तासु पञ्चान्तथा । एतेषु श्रुतिशाक्रवादितिविशाखोडूनि भौमं विना बीजोप्तिर्गदिता शुभा त्वशुभतोऽष्टाश्वीन्दुरामेन्दवः । रामेन्द्वग्नियुगान्यसच्छुभकराण्यग्नौ हलेऽर्कोज्झिताङ्गाद्रामादनयाष्टभानि मुनिभिः प्रोक्तान्यसन्ति च" मू०

"मूलविशाखामघाभिः चरध्रुवमृदुक्षिप्रैश्च एकोनविंशतिनक्षत्रैर्हलप्रवहणं हलप्रवृत्तिं कुर्यात् यदाह नारदः "मृदुध्रुवक्षिप्रचरविशाखापितृभेषु च । हलप्रवाहं प्रथमं विदध्यान्मूलभे वृषैः" । विशेषमाह श्रीपतिः "मृदुध्रुवक्षिप्रचरेषु मूले मघाविशाखासहितेषु भेषु । हलप्रवाहं प्रथमं विदध्यान्नीरोगमुष्कान्वितसौरभेयैः" । नीरोगाः पीडारहिता मुष्का वृषणास्तैरन्विता ये सौरभेया वृषास्तैर्विदध्यादित्यर्थः । उक्तञ्चैतत् वृषाणां वृषणास्तु फलरूपा अतस्तादृग्वृषैः कृतं कर्षणं सफलं स्यात् चूर्णितवृषणैर्वृषैः कृतं कर्षणं निष्फलमेव भवति । तथाऽर्कं सूर्यवारं शनिवारं विना त्वन्यवारेषु चन्द्रमङ्गलबुधबृहस्पतिशुक्रवारेषु हलप्रवहणं शुभम् । उक्तञ्च व्यवहारतत्त्वे "पूर्वाद्वीशयमाग्निभेऽर्कयमयोरिक्तासु नेष्टा कृषिरिति" । अथ सामान्यतो लग्नशुद्धिः तत्र पापग्रहैर्हीनबलैर्निर्बलैरुपलक्षिते लग्ने विधौ चन्द्रे शुक्रे मांसले बलिनि पुष्टे उदित इत्यर्थः । तत्र विधौ चन्द्रे जलस्थे जलराशिस्थे सति देवगुरौ लग्नस्थे च सति हलप्रवहणं शुभम् । उक्तञ्च रत्नमालायाम् "शक्तिशालिनि सितेऽथ शीतगौ दुर्बलैरसितभौमभास्करैः । काम्यते शशिनि वारिभोदये लग्नवर्त्तिनि गुरौ कृषिक्रिया" । काश्यपोऽपि "गुरौ लग्नगते शुक्रे बलिन्यापोदये विधौ । शस्ता कृषिक्रिया तत्र दुर्बलैः क्रूरखेचरैः" । अथ विशेषतो लग्नशुद्धिः तत्र सिंहे घटे कुम्भे कर्के अजे मेषे एणे मकरे घटे तुलायाम् एषु लग्नेषु कृषिकर्म्म न शस्तं यतस्तत्क्षयकरं पीडाकरं तथा रिक्तासु चतुर्थीनवमीचतुर्दशीषु षष्ठ्याञ्च क्षयकरं तथाशब्दोऽनुक्तसमुच्चयार्थस्तेनाष्टम्यामपि न शस्तं कृषिकर्म्म । उक्तञ्च ज्योतिःसारसागरे "मेषलग्ने पशून् हन्ति कर्कटे जलजम्भयम् । सिंहे सस्यभयं ज्ञेयं तुलायां हलसंक्षयः । मकरे सस्यनाशः स्यात्कुम्भे चौरभयन्तथा । हन्त्यष्टमी बलीवर्दान् नवमी सस्यघातिनी । षष्ठी च कीटजननी पशून् हन्ति चतुर्दशी" । चतुर्थ्यामपीदं फलं ज्ञेयम् । अथ बीजोप्तिमुहूर्त्तं फणिचक्रहलचक्रादि च शार्दूलविक्रीडितेनाह एतैश्चेति । श्रुतिः श्रवणः वारुणं शततारका अदितिः पुनर्वसुः विशाखा प्रसिद्धा एतैरुडुभिर्नक्षत्रैर्विना तेषु पूर्वोक्तनक्षत्रेषु मूलमघाध्रुवमृदुक्षिप्रधनिष्ठास्वातीषु पञ्चदशनक्षत्रेषु बीजोप्तिर्बीजवपनं शुभम् । उक्तं च रत्नमालायाम् "हस्ताश्विपुष्योत्तररोहिणीषु चित्रानुराधामृगरेवतीषु । स्वातीधनिष्ठासु मघासु मूले बीजोप्तिरुत्कृष्टफला प्रदिष्टा" । वसिष्ठेनाप्येतावन्त्येव नक्षत्राण्युक्तानि "धातृद्वये कौष्णपपैत्रपुष्ये हस्तत्रये त्र्युत्तरमैत्रभेषु । पौष्णे धनिष्ठास्वथ वाश्विनीषु बीजोप्तिरुत्कृष्टफलप्रदा स्यादिति" । कौष्णपो मूलम् नारदेनाप्युक्तानि "मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु । समूलभेषु बीजोप्तिरत्युत्कृष्टफलप्रदा" । कश्यपेनापि वसुवायुभनैर्ऋत्यक्षिप्रध्रुवमृदूडुषु । वीतां स्मृत्वाथ बीजोप्तिरत्युत्कृष्टफलप्रदा" । अत्र भवा नोक्ता अत्र भौमोऽङ्गलवारो निषिद्धः अर्थात् सूर्यचन्द्रबुधगुरुशुक्रशनीनां वारेषु बीजोप्तिः शुभा । नेष्टा कृषिरित्यतो नकारोऽत्रानुवर्त्तते तेन बीजोप्तिर्नेष्टेत्यर्थः । अत्र कालविशेषनिषेधो राजमार्त्तण्डे "रवौ रौद्राद्यपादस्थे भूमेः संजायते रजः । तस्मादहस्त्रयं तत्र बीजवापं परित्यजेदिति । अथ बीजोप्तौ फणिचक्रमुच्यते । अशुभतो न विद्यन्ते गावः किरणा यस्यासावगुः यस्य स्वरूपाभावः । तस्य कुतस्तरां किरणाः तादृशोऽगू राहुस्तस्य भं नक्षत्रं तस्मादित्यर्थः राहुधिष्ठितनक्षत्रादष्टौ भानि असन्त्यसमीचीनानि, ततस्त्रीणि शुभानि, तत एकमशुभं ततस्त्रीणि शुभानि ततोऽप्येकमशुभं ततस्त्रीणि शुभानि ततोऽप्येकमशुभं ततस्त्रीणि शुभानि ततश्चत्वार्यशुभानि । एवं बीजोप्तौ सप्तविंशति नक्षत्राणां शुभाशुभत्वमुक्तम् । उक्तञ्च नारदेन "भवेद्भत्रितयं मूर्ध्नि धान्यनाशाय राहुभात् । गले त्रयं कज्जलाय वृद्धये द्वादशोदरे । निस्तण्डुलत्वं लाङ्गूले भचतुष्टयमीरितम् । नाभौर्वह्निःपञ्चके स्याद्बीजोप्तावपि चिन्तयेदिति" । राहुर्यस्मिन्नृक्षेऽस्ति तस्मान्नक्षत्रत्रयं मूर्ध्नि मस्तके स्थाप्यं धान्यनाशकरं भवति । ततस्त्रयं गले स्थाप्यं कज्जलाय श्यामिकासम्पादकं स्यात् । ततो द्वादश भानि वह्निनक्षत्ररहितानि उदरे स्थाप्यानि तानि धान्यवृद्धये स्युः ततो नक्षत्रचतुष्टयं पुच्छे निस्तन्दुलत्वकरं स्यात् ततोऽवशिष्टं वह्निनक्षत्रपञ्चकं धान्यनाशकरं स्यात् । रत्न-

मालायामपि "मूर्ध्नि त्रीणि गले त्रयञ्च जठरे धिष्ण्यानि च द्वादश स्यात् पुच्छे च चतुष्टयं बहिरतोभानां स्थितं पञ्चकम् । एतेडं कज्जलसन्निभ्रद्धिरभिका निस्तण्डुलत्वं क्रमात् स्यादीतिप्रभवं भयञ्च फणिभाद्बीजोप्तिकाले स्फुटम्"। अत्र केचित् । फणिभात् सूर्यनक्षत्रादिति व्याचख्युस्तत्र युक्तिः "सूर्यभादुरगःस्थाप्यः" इति स्वरोदयवाक्यैकवाक्यत्वात्, तत्र नारदवाक्ये सावाद्राङ्कभादित्युक्तत्वात् "राहोर्धिष्ण्यात्समारभ्य धिष्ण्यत्रयमिष्टस्तु निष्फलमिति" कश्यपोक्तेश्च । "सूर्यभादुरगः स्थाप्यः" इति तु स्वरोदयवचनं वीजरोपणविषयम् । तत्र लग्नशुद्धिमाह वसिष्ठः "भवारिपुसहजे पापैस्त्रिकोणकेन्द्रस्थितैश्च शुभैः । कथितेषु च धिष्ण्येष्वपि शुभलग्ने वीजवापनं कार्यमिति" अथ हलप्रवहणे चक्रमुच्यते हलेइति हले हलचक्रेऽर्कोज्झितात् सूर्यभुक्तानक्षत्रात् क्रमेण त्रीणि नक्षत्राणि असन्ति अशुभफलानि । ततोऽष्ट भानि सन्ति शुभफलदानि ततो नव भान्यसन्ति ततोऽष्टौ भानि सन्ति यथा सूर्यं अर्द्रायां भुक्तभं मृगः तत आरभ्य त्रीणि मृगाद्रापुनर्वसुभान्यशुभानि । ततः पुष्याश्लेषामघापूर्वफाल्गुनीहस्तचित्रास्वातीनक्षत्राणि शुभानि । ततो विशाखानुराधाज्येष्ठामूलपूर्वाषाढोत्तराषाढाभिजिच्छ्रवणधनिष्ठानक्षत्राणि अशुभानि । ततः शततारकापूर्वभाद्रपदोत्तरभाद्रपदारेवत्यश्विनीभरणीकृत्तिकारोहिणीनक्षत्राणि शुभानि । एवमष्टाविंशतिर्भानि भवन्ति यदाह वसिष्ठः "अर्कगतागतसंस्थभत्रितयं नेष्टमुभयतस्त्विष्टम् । षोडश धिष्ण्यं नवकं शिष्टमनिष्टं च लाङ्गले चक्रे" इति । अर्केण गतं भुक्तम् आगतं भोग्यं संस्थमाक्रान्तम् एतद्भत्रितयं नेष्टं तत उभयतःषोडशधिष्ण्यं इष्टं यथा सूर्यभुक्तभात् प्राक्तनान्यष्टौ शुभानि सूर्यभोग्यभादग्रेतनानि शुभानि स्युरित्यर्थः । शिष्टर्क्षरिति मध्यगतनक्षत्रनवकमनिष्टम् एवमत्राप्यष्टाविंशतिर्भानि । नारदोऽपि "हलादौ वृषनाशाय भत्रयं सूर्यभुक्तभात् । अग्रे कृत्त्रयं लक्ष्मीं सौख्यं पार्श्वस्थपञ्चकम् । शूलत्रयेऽपि नवकं मरणायान्यपञ्चकम् । श्रियै पुच्छे त्रयं श्रेष्ठं स्याच्चक्रे लाङ्गले शुभम्" इति । अस्यार्थः हलप्रवहणसमये सूर्यभुक्तनक्षत्रान्नक्षत्रत्रयं वृषनाशाय स्यात् । तदग्रे नक्षत्रत्रयं लक्ष्म्यै स्यात् तदग्रे पार्श्वनक्षत्रपञ्चकं सौख्याय स्यात् तदग्रे शूलत्रयगतं नक्षत्रनवकं मरणाय स्यात् तदग्रेऽन्यत् पार्श्वस्थपञ्चकं श्रियै स्यात् तदग्रे पुच्छगतं नक्षत्रत्रयं श्रेष्ठं शुभफलमिति । अनेनापि प्रकारेण मृगादीनि तान्येवाशुभाशुभानि सम्भवन्ति । तत्र हलचक्राकृतिर्लिख्यते तत्र कश्यपः "त्रिस्त्वष्टसु नवर्क्षेषु सप्तस्वर्कविमुक्तभात् । हानिर्वृद्धिः कर्तृमृत्युर्लक्ष्मीश्चैव यथाक्रममिति, हलनक्षत्रोक्तमन्तरमुक्तवान् अस्यायमर्थः अर्कविमुक्तभात्त्रिषु भेषु हानिः ततोऽष्टसु भेषु वृद्धिः ततो नवसु भेषु कर्तृनाशः, ततः सप्तसु भेषु लक्ष्मीप्राप्तिरिति यथाक्रमं फलं ज्ञेयम् । अत्र सप्तविंशतिनक्षत्रोक्तेरभिजिद्गणना नास्ति । अन्यत्र पञ्चनक्षत्रयोगे कोऽन्तरित्यत आह तदन्तरगत इति तच्छब्देन हलोर्द्ध्वदण्डशूलोर्द्धदण्डावुच्येते तयोरन्तरगते मध्ये विद्यमाने पङ्क्तिपञ्चके श्रियै स्थाप्ये नक्षत्रदशकमिति यावत् तत्रान्यद्भत्रयं हलदण्डोर्द्ध्वभागे शुभफलदं लेख्यम्" पी॰धा॰

अत्र विशेषः ज्यो॰ त॰ तत्र

कूर्म्मचक्रशब्दे दर्शितात् ज्यो॰त॰ वाक्यात् परमन्यो यथा "कूर्म्माङ्गस्थदेशानाह । "मध्ये सारस्वतामत्स्याः शूरसेनाः समाथुराः । पञ्चालशाल्वमाण्डव्यकुरुक्षेत्रगजाह्वयाः । मरुनैमिषविन्ध्याद्रिपाण्ड्यघोषाः सयामुनाः । काश्यथोऽथा प्रयागश्च गयावैदेहकादयः । प्राच्यां मागधशोणौ च वारेन्द्रीगौड़राढ़काः । वर्द्धमानतमोलिप्तप्राग्ज्योतिषोदयाद्रयः । आग्नेय्यामङ्गवङ्गोपवङ्गत्रैपुरकोशलाः । कलिङ्गोड्रान्ध्रकिष्किन्धाविदर्भशबरादयः । दक्षिणेऽवन्तिमाहेन्द्रमलया ऋष्यमूककाः । चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कणाः । कावेरी ताम्रपर्णी च लङ्कात्रिकूटकादयः । नैरृते द्रविडानर्त्तमहाराष्ट्राश्च रैवतः । जवनः पह्लवः सिन्धुः पारसिकादयो मताः । पश्चिमे कैकयास्ताद्रिम्लेच्छयामशकादयः । वायव्ये गुर्ज्जराटश्च नाटजालन्धरादयः । उत्तरे चीननेपालहूनकैकेयमन्द्राः । गान्धारहिमवत्क्रौञ्चगन्धमादनमालयाः । कैलासमद्रकाश्मीरम्लेच्छदेशाः खसादयः । ऐशाने स्वर्णभौमश्च गङ्गाद्वारञ्च टङ्कनः । काश्मीरकुलूपूर्वकिरातादरटादयः" । देवलः । "सिन्धुसौवीरसौराष्ट्रास्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गोड्रान् गत्वा संस्कारमर्हति" तीर्थयात्राव्यतिरेकेणेति द्रष्टव्यमिति मिताक्षरा । व्यासः "उपरा बहुला भूमिः पन्थानस्तस्कराकृताः । सर्वे वाणिजकाश्चैव भविष्यन्ति कलौ युगे । शस्यानिष्पत्तिरफला तरुणा वृद्धशालिनः । भविष्यत्यफलोत्कर्षः क्रोधश्च सफलोन्वयाम् । पुरुषाल्पं बहुस्त्रीकं

तद्वृषणान्तस्य भक्षणम्"। तत्र ग्रामादिषु स्वनामफलम्। ज्योतिषे "अवर्गेऽष्टाविषुः के च, षट् चे, वेदाः टवर्गके। एवं ते सप्त, पे वर्गे, ये द्वयं, शे च वह्नयः। इत्यमष्टसु वर्गेषु याः संख्याः कथिताः क्रमात्। नाम्नि वर्गात् स्वराश्चैव प्रत्येकं तां प्रकल्पयेत्। एकोनयाष्टभिर्भक्ते शेषसंख्याध्वजादयः। ध्वजोधूम्रश्च सिंहः श्वा वृषभोरासभोगजः। ध्वाङ्क्षश्च क्रमतो ज्ञेयः फलं तत्र बलक्रमात्। ध्वाङ्क्षधूम्रवृषभागजः सिंहोध्वजः खरः। यथोत्तरबला एते ज्ञातव्याः स्वरपारगैः। प्रभौ यौधे पुरे देशे मित्रनारीगृहेषु च। बलात् प्रायोभवेल्लाभो न लाभोबलवर्ज्जितात्। अ गरुडः क मार्जारश्च सिंहः ट शुनीसुतः। त भुजङ्गः प आखुः स्यात् य वर्गे भः, श मेषकः। नामादिवर्णतोऽस्या अष्टौ वर्गाः क्रमादमी। यद्वर्गभक्ष्यो यः प्रोक्तस्तस्मात्तस्य भवेत् क्षयः। ग्रामवर्गस्य ये भक्ष्यास्त्यज्यास्तद्ग्रामवासिनः। एवं दुर्गे रणे त्यक्ता न कर्त्तव्या गडाधिपाः। अवर्गाद्यष्टकं ज्ञेयं प्रागाद्यष्टदिशां क्रमात्। स्ववर्गात् पञ्चमे स्थाने स्वाक्षभङ्गश्च जायते"। व्यासः "धनिनः श्रोत्रियोराजा नदी वैद्यश्च पञ्चमः। पञ्च यत्र न विद्यन्ते तत्र न दिवसं वसेत्"। मत्स्यपुराणे "फालकृष्टे तथा देशे सर्व्वौषधानि रोपयेत्। त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि। ज्येष्ठा मध्या कनिष्ठा भूर्वर्ज्जनीयेतरा मता"।

अथ लाङ्गलचक्रं स्वरोदये "लाङ्गलं दण्डकायूपं योक्त्रद्वयसमन्वितम्। दण्डकादित्रिखेऽङ्कानि दिनेशाक्रान्तभादितः। दण्डका हलयूपानां द्विद्विस्थाने त्रिकं त्रिकम्। योक्त्रयोश्च त्रिकञ्चैव मध्ये पञ्चाष्टके द्वयम्। दण्डस्थे च गवां हानिर्यूपस्थे स्वामिनोभयम्। लक्ष्मीर्लाङ्गलयोक्त्रादौ क्षेत्रारम्भादिनर्क्षके"।

अथ बीजोप्तिचक्रम्। "सूर्य्यभादुरगः स्थाप्यस्त्रिनाड्येकान्तरक्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादश तूदरे। पुच्छे चतुर्बहिः पञ्च दिनभाच्च फलं वदेत्। वदने शोषकं विद्यात् गलेऽङ्गारकस्तथा। उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत्। ईतिरोगभयं राज्ये चक्रे बीजोप्तसम्भवे"। सूर्य्यभात् सूर्य्यभुज्यमाननक्षत्रात् त्रिनाड्येकान्तरक्रमादिति यदाश्विन्यां रविस्तदा तामारभ्य गणयेत्। त्रिनाडीषु अश्विनीभरण्योकृत्तिका दत्वा रोहिणी बहिः कार्य्या मृगार्द्रापुनर्व्वसूनि त्रिनाडीषु दत्वा पुष्योबहिः कार्य्यः एवं क्रमेणान्या बोध्याः। शोषकं शस्यशून्यताम्। ईतयः। "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः" बीजोप्तिः सम्भवः कारणमस्येति व्युत्पत्तिमाश्रित्य बीजरोपविषयमिति पी॰धा॰ स्थितम्।

"वृषचक्रं वृषाकारं सर्व्वावयवसंयुतम्। लिखित्वा विन्यसेद्भानि वृषनामर्क्षपूर्व्वकम्। मुखाक्षिकर्णशीर्षेषु शृङ्गे स्कन्धे द्विकं द्विकम्। त्रीणि पृष्ठे द्वयं पुच्छेऽष्टौ पादे तूदरे त्रिकम्। हलप्रवाहबीजोप्तिप्रारम्भादिदिनर्क्षकम्। यदङ्गेषु स्थितं तस्मात्तत्र सर्व्वं शुभाशुभम्। आस्ये हानिः सुखं नेत्रे कर्णे भिक्षाटनं तथा। शीर्षे धृतिस्तथा शृङ्गे सौख्यं स्कन्धे च मङ्गलम्। पृष्ठे कष्टं शुभं पुच्छे श्रमः पादे सुखं हृदि। चन्द्रयोगादिदं प्रोक्तं वृषचक्रफलं बुधैः"।

दीपिकायाम् "पूर्व्वात्रयाश्यफणिपित्र्यविशाखभेषु चित्राष्टमीविगतचन्द्रतिथिं विहाय। द्व्यङ्गालिगोघटुदये विकुजार्किवारे शस्तेन्दुयोगकरणेषु हलप्रवाहः। हलप्रवाहवद्बीजवपनस्य विधिः स्मृतः। चित्रायाञ्च शुभे केन्द्रे स्थिरलग्नमनुजोदये"। भीमपराक्रमे "वामे कृष्णं बलीवर्द्दं दक्षिणे लोहितं न्यसेत्। उत्तराभिमुखोभूत्वा कर्षकः कृषिमारभेत्। हले तु योजिते यत्र काले मूत्रं करोति गौः। तत्र स्याद्द्विगुणं शस्यमव्ययं गर्गभाषितम्"। कृत्यचिन्तामणौ बलभद्रः "सुखदा प्रतिपच्चैव द्वितीया कार्य्यसाधिनी। आरोग्यदा तृतीया च चतुर्थी कीटक्षतदा। पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया। सप्तमी स्यानदा भोग्या वृषं हन्ति तथाष्टमी। नवमी शस्यनाशाय दशमी भूतिदा सदा। एकादशी तथा कुर्य्याद्धनं धान्यं मनोरथम्। द्वादशी प्राणसन्देहा सर्व्वसिद्धा त्रयोदशी। चतुर्द्दशी पतिं हन्ति पञ्चदश्येव निष्फला। अमावास्याष्टमीं षष्ठीं रिक्तां च परिवर्जयेत्। सौरिभौमदिने चैव कृष्यारम्भे धनक्षयः। प्राजेशविष्णुत्र्येषु पित्र्यकरोत्तरेषु च। अश्विनीवातपौष्णेषु मूलादितीन्दुभे तथा। वारे भानुजशुक्रे च जीवे शीतकरे तथा। लग्ने स्त्रीगोमीनयुग्मे च कृष्यारम्भं शुभं विदुः। ऐशान्यां पुष्पनैवेद्यैः क्षेत्रपालञ्च पूजयेत्। सालङ्कारोहलधरः स्रग्भिश्च पूजितं हलम्। दध्याज्यमधुभिः श्रेष्ठं फालाग्रञ्च प्रलेपितम्। कर्षं प्रावर्त्तयेत् प्राक्प्रोक्तेन ह-

शरीरस्थोऽपि परिच्छिन्नोऽपि सर्वगः। अशरीरं सदा सन्तमिमं ब्रह्मविदं क्वचित्। प्रियाप्रिये न स्पृशतस्तथैव च शुभाशुभे। स्थूलादिसम्बन्धवतोऽभिमानिनः सुखञ्च दुःखञ्च शुभाशुभे च विध्वस्तबन्धस्य सदात्मनो मुनेः कुतः शुभं वाप्यशुभं फलं वा। तमसा ग्रस्तवद्भानादग्रस्तोऽपि रविर्जनैः। ग्रस्त इत्युच्यते भ्रान्त्या ह्यज्ञात्वा वस्तुलक्षणम्। तद्वद्देहादिबन्धेभ्यो विमुक्तं ब्रह्मवित्तमम्। पश्यन्ति देहवन्मूढाः शरीराभासदर्शनात्। अहिनिर्ल्वयनीवायं मुक्तदेहस्तु तिष्ठति। इतस्ततश्चाल्यमानो यत्किञ्चित् प्राणवायुना। स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम्। दैवेन नीयते देहो यथाकालोपभुक्तिषु। प्रारब्धकर्मपरिकल्पितवासनाभिः संसारिवच्चरति भुक्तिषु मुक्तदेहः। सिद्धः स्वयं वसति साक्षिवदत्र तूष्णीं चक्रस्य मूलमिव कल्पविकल्पशून्यः। नैवेन्द्रियाणि विषयेषु नियुङ्क्त एष नैवापयुङ्क्त उपदर्शनलक्षणस्थः। नैव क्रियाफलमपीषदवेक्षते स स्वानन्दसान्द्ररसपानसुमत्तचित्तः। लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत् केवलात्मना। शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः। जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः"।

विदेहकैवल्यमपि तत्र दर्शितं यथा "उपाधिनाशाद् ब्रह्मैव सद् ब्रह्माप्येति निर्द्वयम्। शैलूषवेषसद्भावाभावयोश्च यथा पुमान्। तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः। यत्र क्वापि विशीर्णं सत् पर्णमिव तरोर्वपुः पतनात्। ब्रह्मीभूतस्य यतेः प्रागेव तच्चिदग्निना दग्धम्। सदात्मनि ब्रह्मणि तिष्ठतो मुनेः पूर्णाद्वयानन्दमयात्मना सदा। न देशकालाद्युचितप्रतीक्षा त्वङ्मांसविट्पिण्डविसर्जनाय। देहस्य मोक्षो नो मोक्षो न दण्डस्य कमण्डलोः। अविद्याहृदयग्रन्थिमोक्षो मोक्षो यतस्ततः। कुल्यायामथ नद्यां वा शिवक्षेत्रेऽपि चत्वरे। पर्णं पतति चेत्तेन तरोः किं नु शुभाशुभम्?। पत्रस्य पुष्पस्य फलस्य नाशवद् देहेन्द्रियप्राणधियां विनाशः। नैवात्मनः स्वस्य सदात्मकस्यानन्दाकृतेर्वृक्षवदस्ति चैषः। प्रज्ञानघन इत्यात्मलक्षणं सत्यसूचकम्। अनूद्यौपाधिकस्यैव कथयन्ति विनाशनम्। अविनाशी वा अरेऽयमात्मेति श्रुतिरात्मनः। प्रब्रवीत्यविनाशित्वं विनश्यत्सु विकारिषु। पाषाणवृक्षतृणधान्यकटाम्बराद्या दग्धा भवन्ति हि मृदेव यथा तथैव। देहेन्द्रियासुमनआदि समस्तदृश्यं ज्ञानाग्निदग्धमुपयाति परात्मभावम्। विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि। तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते। घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम्। तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम्। क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले। संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः"।

एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम्। ब्रह्मभावं प्रपद्यैष यतिर्नावर्त्तते पुनः। सदात्मैकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः। अमुष्य ब्रह्मभूतत्वाद् ब्रह्मणः कुत उद्भवः?। मायाक्लृप्तौ बन्धमोक्षौ न स्तः स्वात्मनि वस्तुतः। यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ। आवृतेः सदसत्त्वाभ्यां वक्तव्ये बन्धमोक्षणे। नावृतिर्ब्रह्मणः काचिदन्याभावादनावृतम्। यद्यस्त्यद्वैतहानिः स्यात् द्वैतं न सहते श्रुतिः। बन्धश्च मोक्षश्च मृषैव मूढा बुद्धेर्गुणं वस्तुनि कल्पयन्ति। दृगावृतिं मेघकृतां यथा रवौ यतोऽद्वयासङ्गचिदेकमक्षरम्। अस्तीति प्रत्ययो यश्च यश्च नास्तीति वस्तुनि। बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः। अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न चात्मनि। निष्कले निष्क्रिये शान्ते निरवद्ये निरञ्जने। अद्वितीये परे तत्त्वे व्योमवत् कल्पना कुतः?। न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता। सकलनिगमचूडास्वान्तसिद्धान्तगुह्यं परमिदमतिगुह्यं दर्शितं ते मयाद्य। अपगतकलिदोषं कामनिर्मुक्तबुद्धिं स्वसुतवदसकृत्त्वां भावयित्वा मुमुक्षुम्"। कैवल्यं स्वरूपत्वेनास्त्यस्य अर्श० अच्। २कैवल्यस्वरूपे त्रि० "ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना। कैवल्या या गतिर्ब्रह्मसदने सा गतिर्भवान्" भा० अनु० १६अ०। "कैवल्या मोक्षाख्या गतिः" नीलक०। केवल एव स्वार्थे ष्यञ्। ४अद्वितीये वस्तुनि न० "धातारमजमव्यक्तं यमाहुः परमव्ययम्। कैवल्यं निर्गुणं विश्वमनादिमजमक्षरम्" भा० अ० ६३अ०

कैशिक न० केशानां समूहः ठक्। १केशसमूहे। २नाटकप्रसिद्धे वृत्तिभेदे स्त्री ङीप् हेमच०। सा० द० सरस्वतीकण्ठाभरणे च कौशिकीत्येव पाठः। अलङ्कारशब्दे ३८८पृ० तल्लक्षणमुक्तम्। ३शृङ्गारे पु० जटा० तस्य केशवेशपूर्वकत्वेन तदधीनत्वात् तथात्वम्। ४नृपभेदे पु० "आकृतिः कैशिकस्यैव भीष्मकस्य नराधिपः" हरिवं० ८६अ०

कैशोर न० किशोरस्य भावः कर्म वा प्राणभृद्वयोवाचित्वात् अञ्। "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि।

**कोजागर** पु० को जागर्त्ति इति लक्ष्म्या उक्तिरत्र काले पृषो०। आश्विनपौर्णमास्याम्। तत्कृत्यव्यवस्थादि ति० त० कल्पतरौ ब्रह्मपुराणम् "आश्वयुज्यां पौर्णमास्यां निकुम्भायालकार्णवात्। आयाति सेनया सार्द्धं कृत्वा युद्धं सुदारुणम्। तत्रागता नरैर्मार्गाः स्वगेहस्य समीपतः। शोधितव्याः प्रयत्नेन भूषितव्याश्च वस्त्रकैः। पुष्पार्घ्यफलमूलाम्बसर्षपप्रकरैस्तथा। वेश्मानि भूषितव्यानि मार्गाश्चैव विशेषतः। स्नातैरनुलिप्तैश्च नरैर्भाव्यं सवास्त्रवैः। दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः। स्त्रीबालमूर्खवृद्धैश्च भोक्तव्यं पूजितैः सुरैः"। पूजितैः सुरैः पूजितसुरैरित्यर्थः। "पूज्याश्च सफलैः पुष्पैस्तथा द्वारोर्द्ध्वभित्तयः। द्वारोपान्ते सुदीप्तस्तु संपूज्योऽहव्ययाहनः। यवाक्षतघृतोपेतैस्तण्डुलैश्च सुतर्पितः। संपूजितव्यः दर्शेन्दुः पयसा पायसेन च। स्कन्दः सभार्य्यः रुद्रश्च तथा नन्दीश्वरोमुनिः। गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः। उरभ्रवद्भिर्वरुणो हस्तिमद्भिर्विनायकः। पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः। ततः पूज्यो निकुम्भोऽपि सुमांसैस्तिलतण्डुलैः। सुगन्धिभिर्घृतोपेतैः क्षयराख्यैश्च भूरिभिः। ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्जितम्। वह्निपार्श्वगतैर्नैर्या द्यूत क्रीड़ाः पृथग्विधाः"। ततश्च द्वारोर्द्ध्वभित्तिहव्यवाहपूर्णेन्दुसभार्य्यरुद्रस्कन्दनन्दीश्वरमुनयः सर्व्वे पूज्याः। द्वारोर्द्ध्वभित्तिशब्दोऽत्र बहुवचनान्तः। नन्दीश्वरो मुनिरेकः। गोमता सुरभिः, छागवता हुताशनः मेषवता वरुणः, हस्तिमता विनायकः, अश्वयता रेवन्तः सर्व्वैरेव निकुम्भः पूज्यः, महार्णवे लिङ्गपुराणम्। "आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि। कौमुदी सा समाख्याता कार्य्या लोकविभूतये। कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावते स्थितम्। सुगन्धिर्निशि सद्वेशो अक्षैर्जागरणं चरेत्"। तथा "निशीथे वरदा लक्ष्मीः कोजागर्त्तीति भाषिणी। तस्मै वित्तं प्रयच्छामि अक्षैः क्रीड़ां करोति यः। नारिकेलैश्चिपिटकैः पितॄन् देवान् समर्च्चयेत्। बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनो भवेत्"। अत्र निशीति निशीथ इति चाभिधानात् रात्रिकृत्यमिदम्। ततश्च "प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा। प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते" इति वत्सवचनात् यद्दिने प्रदोषनिशीथोभयव्यापिनी पौर्णमासी तद्दिने कोजागरकृत्यम् उभयव्याप्त्यनुरोधात्। यदा तु पूर्व्वदिने निशीथव्याप्तिः परदिने प्रदोषव्याप्तिस्तदा परेद्युस्तत्कृत्यम्। प्रधानपूजाकालव्याप्त्यनुरोधात्। यदा तु पूर्व्वदिने निशीथव्याप्तिः परदिने न प्रदोषव्याप्तिस्तदा सुतरां पूर्व्वेद्युस्तत्कृत्यम् "अहःसु तिथयः पुण्याः कर्म्मानुष्ठानतो दिवा। नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते" इति वचनात्"। "नारिकेलोदकं पीत्वा अक्षैर्जागरणं निशि। तस्मै वित्तं प्रयच्छामि कोजागर्त्ति महीतले" कृत्यकौमुदी। तत्राक्षक्रीड़ा कार्य्या। अक्षक्रीडाविशेषश्च चतुरङ्गशब्दे वक्ष्यते। "या तु कोजागरे याते" ति० त० राजमार्त्तण्डः।

**कोट** पु० कुट—घञ्। १कौटिल्ये। आधारे घञ्। दुर्गे (गड) मेदि०। ततः चतुरर्थ्याम् अश्मा० र कोटर कोटसन्निकृष्टदेशादौ त्रि० [ विवृतिः स्त्रियां ङीप्।

**कोटक** पुंस्त्री कुट—ण्वुल् जातिभेदे ब्रह्मवै० जातिशब्दे

**कोटचक्र** न० कोटस्य दुर्गस्य शुभाशुभज्ञापनार्थे अष्टविध चक्रभेदे चक्रशब्दे विवृतिः। "कोटचक्रमष्टविधं चतुरस्रादिभेदतः "इति नरपतिजयचर्य्या

**कोटर** पुंन० कोटं कौटिल्यं राति रा-क। वृक्षस्कन्धादिस्थगह्वरे। "चलत्फणाधरमिव कोटरं तरुः" माघः। "महाहङ्कारविटपश्चेन्द्रियाङ्कुरकोटरः" भा० आश्व० ४७अ०। २ दुर्गसन्निकृष्टदेशादौ त्रि० व्युत्पत्तिः कोटशब्दे दृश्या। कोटरं दुर्गसन्निकृष्टं वनम् तथाभूतस्थाणां वा वनम् कोटरा० पूर्व्वपददीर्घः णत्वञ्च। कोटरावणम् वनभेदे न०।

**कोटरादि** पु० वनशब्दे परे पूर्व्वस्वरदीर्घनिमित्ते पा०ग० सूक्तोक्ते शब्दगणे स च गणः। "कोटर मिश्रक सिध्रक पुरग शारिक"।

**कोटरी** स्त्री कोटं कौटिल्यं रीयति री—वधे गतौ च क्विप् १नग्नायां स्त्रियां २दुर्गायाञ्च अमरटीका।

**कोटवी** स्त्री कोटं कौटिल्यं दुर्गं वा याति वा—गतौ हिंसने क गौरा०ङीष्। १दुर्गायाम् धरणिः। २नग्नायां स्त्रियां अमरटीका।

**कोटि** स्त्री कुट—इञ्। १धनुषोऽग्रभागे अमरः २वस्तुमात्रस्याग्रभागे, ३अस्त्राणां कोणे ४उत्कर्षे ५शतलक्षितसंख्यायां, ६तत्संख्येये च मेदि०। ७पृक्कायाम् (पिड़िङ्गशाक) अमरः ८संशयस्यालम्बने, वादे निर्णयार्थं कृते ९पूर्व्वपक्षे, वा ङीप् कोटीत्यप्यत्र। "धनुष्कोट्यातुद्य कर्णेन वीरम्" भा० आ० १६०। "तेन

दृक्भागमध्या गताः । कक्षाधररेखामध्यस्थतिर्यग्-रेखापदयोरन्तरस्थमर्धज्यापदान्तः कोटिज्या भुजोत्क्रमज्योनत्रिज्यार्धरेखारूपकोटित्वलक्षणत्वात् । तदूर्ध्वचापं भुजांशोनं त्रिभजिनं तस्मात् कोटिज्या । समपदे पदोर्ध्वाधररेखान्तर तिर्यगर्धज्या भुजज्येति तदूर्ध्वं चापं तदोर्ध्वतिर्यग्रेखापदान्तरं तिर्यगर्धज्याकोटित्वलक्षणत्वात् कोटिज्याचापं पदगतमित्युपपन्नं गताद्दिग्यादि" रङ्गनाथः

**कोटितीर्थ** न० कोटिः तीर्थान्यत्र । १अवन्तिदेशस्थमहाकालसन्निधिस्थे तीर्थभेदे । "महाकालं ततोगच्छेत् नियतो नियताशनः । कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्" भा०व० ८२अ० । २पञ्चनदान्तर्गते तीर्थभेदे च । "ततः पञ्चनदं गत्वा नियतोनियताशनः । कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्" भा०८३अ०

**कोटिपात्र** न० कोटिरग्रं पात्यते जलायनेऽस्य । केनिपातके हेमच० तदग्रस्य जले पातनेन नौचालनात्तस्य तथात्वम् । शब्दकल्पद्रुमे पुंस्त्वोक्तिः प्रामादिकी "केनिपातः कोटिपात्रमरित्रोडुपः प्लव" इति हेमचन्द्रे क्लीवत्वनिर्देशात् ।

**कोटिफल** न०६त० । त्रिकोणादिक्षेत्रावयवस्य कोटेः फले । सि०शि०तदानयनप्रकारोदर्शितोयथा । "खेनाहते परिधिना भुजकोटिजीवे भांशैः ३६० हृते च भुजकोटिफलाह्वये-स्तः" सू० । "अत्रोपपत्तिः । यावत् केन्द्रप्रतिमण्डले तावदेव नीचोच्चवृत्ते स्यात् । अतः प्रतिमण्डलदोःकोटिज्ये अनुपातेन नीचोच्चवृत्ते परिणाम्येते यदिभांशवृत्ते ३६०एते दोःकोटिज्ये तदा परिध्यंशवृत्ते किमिति । अथवा त्रिज्याव्यासार्धे एते दोःकोटिज्ये तदान्त्यफलज्याव्यासार्धे किमिति । फलं तुल्यमेव" प्रमि० ।

उक्तस्य सू०सि० रङ्गनाथाख्यां यथा
"तद्गुणे भुजकोटिज्ये भगणांशविभाजिते । तद्भुजज्याफलधनुर्मान्दं लिप्तादिकं फलम्" सू० "भुजकोटिज्ये मन्दशीघ्रान्यतरसम्बन्धेन केन्द्रभुजकोटिज्ये तद्गुणे स्वीयस्फुटपरिधिना गुणिते भगणांशैः षष्ट्यधिकशतत्रयेण भक्ते भुजफलकोटिफले भवतः । मन्दकेन्द्रभुजज्योत्पन्नफलस्य धनुःफलादिकं मान्दं फलं भवति । अत्रोपपत्तिः । कक्षास्थोच्चस्थानस्थितदेवतया स्वकक्षास्थितग्रहपीतं ग्रहबिम्बं स्वाभिमुखाकर्षणेन कक्षास्थमध्यग्रहस्थानात् परमफलज्यान्तरितस्थाने आकर्षणसूत्रमार्गरूपतिर्यक्कर्षमार्गे चाकृष्यते । तेन मध्यग्रहस्थानीयकक्षाप्रदेशाद्व्यक्तफलज्याव्यासार्धेनोत्पन्नवृत्ते भगणांशाङ्किते मूलस्थग्रहस्थाने चापसम्पातं तत्प्रदेशमध्योच्चभावात् केन्द्रान्तरेण कक्षाप्रतिमण्डलमार्गे तद्वृत्तपरिधौ ग्रहो भवति । तन्नीचोच्चवृत्ते ऊर्ध्वरेखाग्रहयोस्तिर्यगन्तरस्थमर्धज्याकारं परमफलज्यानुपातं भुजफलम् । तत्रैव वृत्ते स्वाभिमततिर्यग्रेखाग्रहयोरन्तरमूर्ध्वाधररेखाकारं परमफलज्यानुपातं कोटिफलम् । एते तत्र कक्षास्थभुजज्याकोटिज्यावद्भुजकोटिज्ये इति । कक्षास्थभगणांशप्रमाणेनैते भुजज्याकोटिज्यारूपे भुजकोटी तदा कक्षास्थभागप्रमाणानुरूपप्रागुक्तनीचोच्चपरिधिभागैः केत्यनुपातेन फलवृत्तस्थत्वाद्भुजफलकोटिफले" रङ्गनाथः

**कोटिर** पु० कोटिं राति रा-क । १इन्द्रे, २नकुले, ३इन्द्रगोपकीटे च मेदि०

**कोटि(टी)वर्षा** स्त्री० कोटिभिरग्रैर्वर्षति मधु वृष—अच् । (पिड्ङ्ग) १शाकभेदे । अमरः दीर्घमध्यस्तदर्थे शब्दच० २बाणासुरपुरे न० शब्दर०

**कोटि(टी)श** पु० कोट्या अग्रेण श्यति शो—क । १लोष्टभेदनेऽस्त्रे (मइ)(मुगर)इति वा ख्याते पदार्थे रत्नको०मुक्तलग्न्यः नागविशेषे २नागभेदे पु० "कोटिशोमानसः पूर्णः शलः पालोहलीमकः" भा० आ०५७अ० नागविशेषोक्तौ

**कोटी** स्त्री० कुट—इन् ङीप् । (पिड्ङ्ग)१शाकभेदे शब्दरत्ना० २कोटिशब्दार्थे च "प्रतोदैश्चापि कोटीभिर्हुङ्कारैः साधुवाहितः" भा० द्रो० ८९अ०

**कोटीर** पु० कोटिमीरयति ईर-अण् ।१किरीटे, हेमच० २जटायां त्रिका० "कोटीरबन्धनधनुर्गुणयोगपट्टैरि" नैष०

**कोट्ट** पु० कुट्ट—घञ् नि० गुणः । दुर्गे (गड़) अमरः २पुरभेदे (कोटकाङ्गड़ा) ३राजधानीभेदे च न० हेमच०

**कोट्टवी** स्त्री० कोट्टं वाति वा—क गौरा० ङीष् । १नग्नायां मुक्तकेशायां स्त्रियाम् २दुर्गायाश्च जटा० ३बाणासुरमातरि च तत्र दुर्गायाम् हरिवं० १८५अ०
"कुमाररक्षणार्थाय बिभ्रती सुतनुं तदा । दिग्वासाद्देववचनात् प्रातिष्ठत कोट्टवी । लम्बा नाम महाभागा भागो देव्यास्तथाष्टमः । विद्या कनकशक्तिश्च वा च तस्या स्थितान्तरे । अथान्तरा कुमारस्य देवीं दृष्ट्वा महाभुजः । पराङ्मुखस्ततो वाक्यमुवाच मधुसूदनः । अभयाद्युपाच अपगच्छाशुभस्त्वं धिक् त्वामिति च सोऽब्रवीत् । किमेवं कुरुषे विप्रं निश्चितस्य बभञ्जति । वैशम्पायन उवाच । श्रुत्वैव वचनं तस्य कोट्टवी तु तदा दि-

णोः। नैव यावः कनाभवो कुमारपरिरक्षणात्"। १८॥अ०

बाणबाणारि भाग० १०।६।२८ "तस्माना कोटवी नाम नग्ना मुक्तशिरोरुहा। पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया" अनयत नग्नत्वमुक्तकेशत्वविशेषणं तत्काले तथाभूतत्वसाधनाय कात्यायोऽयदा कग्नत्वमुक्तकेशयुक्तत्वात्तथात्वम्

कोट्टवीपुर न० ६त०। बाणासुरपुरे तस्यास्तत्र प्रधानत्वात् तयैव बाणासुरस्य रक्षणात् तत्पुरस्य तथात्वम्।

कोट्टार पु० कुट्ट—आरक् पृषो०। १कूपे २नागरे ३पुष्करिण्याः पाटके च। (पाड) मेदि०

कोठ पु० कुठि—अच् नि० नलोपः। मण्डलाकारे कुष्ठरोगे। तल्लक्षणम् निदाने "असम्यग्वमनो दीर्णपित्तश्लेष्मान्ननिग्रहैः मण्डलानि" सकण्डूनि रागवन्ति बहूनि च। उत्कोठः सानुबन्धस्तु कोठ इत्यभिधीयते" इति माधवकरः। रक्षितेन चाप्ययोक्तम् "वरटीदष्टसंकाशः कण्डूमान् लोहितोऽसकृत्कफपित्ताम्। क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः" "उद्वर्त्तनस्तु विज्ञेयं कण्डूकोठानिलापहम्" "कण्डूकोठानिलस्तम्भमलरोगापहश्च सः" "उद्वर्त्तनं निर्वाहिकया कण्डूकोठविनाशनम्" इति च सुश्रुतः

कोठर पु० कुठि—अर पृषो०। अङ्कोठवृक्षे राजनि०

कोठरपुष्पी स्त्री कोठरस्य पुष्पमिव पुष्पमस्याः ङीप्। वृद्धदारके राजनि०

कोण पु० कुण—करणे घञ् कर्त्तरि अच् वा। येन वनुराहतिना काष्ठेन वीणादयो वाद्यन्ते तस्मिन् वादनसाधने १काष्ठभेदे २अस्रौ, अमरः। ३गृहादीनामेकदेशे, ४अस्त्रादीनामग्रभागे, ५लगुडे, मेदि० ६मङ्गलग्रहे हेम० ७शनिग्रहे विश्वः। ८दयोर्दिशोर्मध्यभागे इति विदिशि राजनि० "कनककोणैरभिहन्यमानः" कादं० "भेरीमृदङ्गवीणानां कोणसंघटितः पुनः" रामा० "स्वच्छस्फाटिके तेन चत्वारः स्वर्णपूरिताः। कुम्भाश्चतुर्षु कोणेषु निगूढाः स्थापिता भुवि" कथास०। "सुवर्णकोणाभिहतः प्राणदद्धृत्यामृदुम्भुभिः" रामा० "त्रिन्दुत्रिकोणवसुकोणदशारयुग्मम्" तन्त्रसा०। समकोणं विषमकोणम् चेत्यम्

कोणकुण पु० कोणे मत्कैकदेशे कुणति चलति कुण—क। मत्कुणे (छारपोका) हेमच०

कोणाघात पु० "ढक्कायतसहस्राणि भेरीशतशतानि च। एकदा यत्र हन्यन्ते कोणाघातः स उच्यते" इति भरतोक्ते वाद्यसंघाते भर०। काष्ठेन वीणादेवादने च। "कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः" वेणी० [अमरः

कोणि त्रि० कुण—इन्। आदानशक्तिहीनहस्तयुक्ते (कोणा)

कोथ पु० कुथ—पातित्ये घञ्। १नेत्ररोगभेदे (कें चो)। कर्त्तरि अच्। २मथिते त्रि०मेदि०"मूढेन मांसलुब्धेन वर्द्धितास्यास्थिखण्डेन सहाभ्यवहृतं यदाधाविगाढपुरीषोन्मिश्रमपानेनाधः प्रेरितमसम्यगागतं गुदं क्षिणोति तत्र क्षतनिमित्तः कोथ उपजायते" इति सुश्रुतोक्ते गुह्यरोगकारके ३भगन्दररोगोपद्रवभेदे। भावे घञ्। ४गलने "तस्मिन् गते पूयरुधिरावकीर्णे मांसकोथे भूमाविव जलक्लिन्नायां कृमयो जायन्ते" सुश्रुतः "तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः" सुश्रु० "कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम्" (जलम्) सुश्रु० "गोमयात्कोथजा मण्डा, मध्याः काष्ठेष्ट०कोद्भवाः" सुश्रु०

कोदण्ड न० कु—शब्दे विच् कोः शब्दितो दण्डोऽस्य। १धनुषि, "विस्फूर्जयन्त्र कोदण्डः" भाग० १।२१।५१। तस्य दण्डत्वात् २भ्रूलतायां, ३देशभेदे च। अमरः ४धनूराशौ च।

कोदार पु० ईषदुदारः कोः कादेशः। धान्यभेदे "न ग्राह्यं सर्व्वथा माषवरकोदारकोद्रवम्" कात्या० १,६,८, स्मृत भाष्ये कर्कधृतवाक्यम्

कोद्रव पु० कु—विच् कोः सन् द्रवति द्रु—अच् कर्म्म०। (कोदो) धान्यभेदे अमरः "कोद्रवो वातलो ग्राही हिमः पित्तकफापहः" भावप्र० तद्गुणा उक्ताः। "अयज्ञिया वै कोद्रवाः" श्रुतिः। "कृतोऽन्यदपि संग्राह्यं सदा धान्यमात्मकम्। न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम्" कात्या०श्रौ०१,६,८,स्मृ०भा० कर्कधृतवाक्यम्। तस्य वैश्वदेवे अग्राह्यता "पञ्चनाग्निं समुज्ज्वाल्य वैश्वदेवं समाचरेत्। निष्पावान् कोद्रवान् माषान् कलायांश्चणकांस्त्यजेत्" काशी० २५अ०। तस्याश्राद्धीयता भा० अनु० ४२६१ श्लोके उक्ता यथा "अश्राद्धीयानि धान्यानि कोद्रवाः पुलकास्तथा"

कोनालक पु० स्त्री कोने जलेन आलति पर्य्याप्नोति अल—ण्वुल्। संघचारिणि प्लवे जलपक्षिभेदे अमरः। जलचरपक्षिभेदे हंससारसेत्युपक्रमे कोनालकं पठित्वा "प्लवाः संघचारिणः" सुश्रु०। इन् कोनालि अप्यत्र। "कुनालीकोनालिप्रभृतीन् पक्षिणः" सुश्रु० स्त्रियां ङीप्।

कोन्वशिर पु० बाहुलकात् कौशाम्बीनगरनिवासी सुत्ततदासो वलिवर्दभेदे भा० अनु० २५अ०

"सन्ति चाशीविषसमाः सन्ति मन्दास्तथाऽपरे। विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर!। मेकला द्राविडा लाटाः पौण्ड्राः कोन्वशिरास्तथा। शौण्डिका दरदा दार्वाश्चौराः शबरबर्बराः। किराता यवनाश्चैव तास्ताः क्षत्रियजातयः। वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात्"।

**कोप** पु० कुप—भावे घञ्। १क्रोधे कामानाग्निजे चित्तवृत्तिभेदे अमरः। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा०। वधाद्यनुकूलचित्तवृत्तिभेदः कोपः। अमर्षशब्दे विवृतिः। "पादेन प्रहरन् कोपात्" मनुः। "मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः। द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि। प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना" सा० द० उक्ते शृङ्गाररसाङ्गे २प्रणयकोपे च

"अपकारिणि चेत् कोपः कोपे कोपः कथं नहि। धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि" नीतिशा०। "रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः। विवेकिनः कुतः कोपः स्वदेहावयवेष्विवेति" ३धातुवैषम्यकारिदोषाणां विकारभेदे सुश्रु० "तत्र एते स्वभावत एव दोषाणां सञ्चयप्रकोपप्रशमप्रतीकारहेतवः" शारीराणां विकाराणामेष वर्गश्चतुर्विधः। चये कोपे शमे चैव हेतुरुक्तश्चिकित्सने" सुश्रु० "स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः" सुश्रु०

**कोपक्रम** न० उपक्रम्यते कर्म्मणि घञ् ६त०। उपक्रमान्तत्वात् क्लीवता। कस्य ब्रह्मण उपक्रमे—उपक्रम्यमाणे १ब्रह्मणा आदौ ज्ञात्वा उपक्रम्यमाणायां जगतः सृष्टौ अमरः। कोपक्रमण्यत्र न०। ६त०। २कोपस्य क्रमे पु०

**कोपन** त्रि० कुप—ताच्छील्ये युच्। कोपशीले जटाध० "चण्डस्त्वत्यन्तकोपनः" अमरः। "आशीविषविषस्तेन महर्षिः कोपनो भृशम्" भा०आ०४९अ०। "तपस्वी कोपनो भृशम्" भा०व०११०अ० "पादानतः कोपनयाऽवधूतः" कुमा० २असुरभेदे पु० "शरभः शलभश्चैव कुपनः कोपनः क्रथः" हरि० ४२अ० कुप—णिच्—भावे ल्युट्। ३कोपनिष्पादने ४दोषविकारकारकव्यापारभेदे न० "स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्" भा० आनु० १७अ०। "यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागताः" सुश्रु० कुप—णिच् कर्त्तरि ल्यु। ५कोपसाधके त्रि० "कोपनं कफवातानाः दुर्नाम्नां चाविकं दधि" सुश्रुतः

**कोपनक** पु० कोपनः कोपशील इव कायति कै—क। १चोरनामकगन्धद्रव्ये राजनि० स्वार्थे क। २कोपने त्रि०

**कोपनीय** त्रि० कुप—कर्म्मणि अनीयर्। दूषणीये "ते च शब्दादयस्तपस्विनः परस्परेणाभिहन्यमानास्तु पाषाणाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति" सा०त० कौ०

**कोपयिष्णु** त्रि० कुप—णिच् शी०-इष्णुच्। परस्य कोपकारके "वैरायैव तदा व्यक्तं चलितान् कोपयिष्णुभिः" भा० शा० १७९अ०

**कोपलता** स्त्री कोपहेतुर्लता। कर्णस्फोटलतायां राजनि०

**कोपिन्** पुंस्त्री० अयथार्थं कुप्यति णिनि। १जलपारावते २अयथार्थकोपशालिनि त्रि० राजनि० स्त्रियां ङीप्। कोपयति णिजन्तात् णिनि। ३कोपसम्पादके त्रि० "विदाहकः शोणितपित्तकोपी" सुश्रुतः स्त्रियां ङीप्।

**कोमल** न० कु—कलच् मुट् च नि० गुणः। १जले। २मृदौ, अकठिने, च त्रि० मेदि० ३चौरिकायां स्त्री० टाप् शब्दच०। ४मनोहरे त्रि० शब्दर०। "निशा च शय्या च शशाङ्ककोमला" नैष०। शशाङ्कवन्मृदुला शय्या। शशाङ्केन मनोहरा निशा च इत्यर्थः। "अनवरतः कोमलरमराभीन्" माघः।

**कोमलक** त्रि० स्वार्थे क। १कोमलशब्दार्थे। संज्ञायां क। २मृणाले शब्दच०।

**कोमलवल्कली** स्त्री कोमलं वल्कलं यस्याः। लवलीनामायां (नोयाड़) शब्दचिन्ता०।

**कोमलासन** न० आसनशब्ददर्शितमृगादिचर्म्मनिर्म्मिते आसनभेदे "इदानीं शृणु देवेश! रहस्यं कोमलासनम्। योगसिद्धिप्रदानाय सिद्धं चक्रासनं तु तत्" रुद्रया०।

**कोमासिका** स्त्री ईषदुमेव अतसीपुष्पमिव आस्ते आस—ण्वुल् टाप् अत इत्वम्। जालिकायाम् (फलेर जालि) हारावली।

**कोम्य** त्रि० कम—कर्म्मणि यत् पृषो०। काम्ये। "अस्त्री नः सन्तु कोम्या" ऋ० १।१७१।२। "कोम्या काम्यानि" भा०

**कोयष्टि** पु० कं जलं यष्टिरिवास्य पृषो० अत ओत्वम्। जलकुक्कुभे पक्षिणि। "प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्"। मनुः संज्ञायां कन् कोयष्टिक (टिटिर) टिट्टिभपक्षिणि "कपोतपारावतभृङ्गराजपरभृतेत्यादि प्रतुदपक्षिमध्ये कोयष्टिकशब्दात् "कषाया मधुराश्चैव फलाहाराः मरुत्कराः। पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः" सुश्रुते तन्मांसगुणा उक्ताः।

कोर पु० कुल—संस्त्याने अच् लस्य रः । १संस्त्यानयति कोरत्वा कारे सुश्रुतोक्ते देहस्थसन्धिभेदे यथा
"त एते सन्धयोऽष्टविधाः । कोरोदूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्त्ताः । तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः" । "नामभिरेवाकृतयः व्याख्याताः" । कुल—घञ् । २संस्त्याने पु०

कोरक पुंन० कुल-संस्त्याने ण्वुल् लस्य रः । कलिकायाम् । "कलिका कोरकः पुमानित्यमरोक्तेः प्रायिकाभिप्रायात् "कोरकं कुड्मलेऽपि स्यात् कक्कोलकमृणालयोः" विश्वोक्तेः तेन "लतापङ्क्तिम् विचकार कोरकाणि" माघे क्लीब प्रयोगः "कोरकोऽस्त्री कुड्मले स्यात्" मेदि० । २कक्कोले ३मृणाले च विश्वः । ४चोरनामगन्धद्रव्ये जटाध० । ततः तारका० संजातेऽर्थे इतच् । कोरकित जातकुड्मले त्रि०

कोरङ्गी स्त्री० कुर—अङ्गच् गौरा० ङीष् । १सूक्ष्मैलायाम् (छोटएलाइच्) अमरः २पिप्पल्यां राजनि०

कोरदूष पु० कोरं संस्त्यानं दूषयति दूषि अवन्तात् अण् उप० स० । (कोँदो) ख्याते व्रीहिभेदे अमरः । "निष्पावाढक यवगोधूमकोरदूषेत्यादि" सुश्रु० "श्यामाककोरदूषाद्यं तक्रं पिण्याकसक्तुभिः" सुश्रु० । ण्वुल् । कोरदूषकोऽप्यत्रार्थे । "ईदृशोऽभविता लोको युगान्ते पर्य्युपस्थिते । यस्यापां प्रवरा माषी धान्यानां कोरदूषकः" भा०व०१६०अ०

कोल पु० कुल—संस्त्याने अच् । १शूकरे २प्लवे(भेला) अमरः ३क्रोडे ४शनिग्रहे ५चित्रके (चिता) ६अङ्कोठवृक्षे ७आलिङ्गने मेदि०। ८देशभेदे पु०ब०व० शब्दरत्ना०।९म्लेच्छभेदे पु० धर० "मेदान्ध्रचौवरकन्याजाते १०जातिभेदे ब्रह्मवै० पु० । ११नृपभेदे "वरूथामाद्याक्रीडस्तस्य चत्वारस्तस्य चात्मजाः । पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिवः । तेषां जनपदाः ख्याताः पाण्ड्याः कोलाः सकेरलाः" हरिवं०३२अ०। १२मरिचे न० राजनि० १३चव्ये(चइ)वैद्य० । १४तोलक परिमाणे वैद्यकम् । १५कर्कन्धूवृक्षे स्त्री० गौरा० ङीष् । तस्याः फलम् अण् तस्य लुक् ।१६बदरीफले न०। कर्कन्धूशब्दे विवृतिः "बदरीवत्स्याकारोऽस्याः सूक्ष्मफलो भवेत् । अटव्यामेव सा घोण्टा कोलघोण्टेति चोच्यते" सुभूतिः "कोलकोलिर्गोपघोण्टा घोण्टा च बदरीच्छदा । स्वनामकोलिः कर्कन्धूः" रत्नकोषः "श्वाद्यकोलदलितप्रकाशनैः" । "यः कोलतां बलवतीमु बिभ्रत्" माघः । कोलश्च स्तुते मन्वन्तरे ऽङ्कः । तत्र वाक्यं २२२४० दृश्यम्

कोलक पु० कुल—ण्वुल् । १अङ्कोठवृक्षे, राजनि० २कक्-धारकर्षे जटाधरः (कांकला)च ३गन्धद्रव्यभेदे, ४मरिचे, ५कक्कोले च न० अमरः ।

कोलकन्द पु० कोलस्य कन्दोऽस्य । महाकन्दभेदे राजनि० "कोलकन्दः कटूष्णश्च कृमिदोषविनाशनः । वमिच्छर्दिप्रशमनः पित्तदोषानिलापहः" राजनि०

कोलकर्कटिका स्त्री० कोलस्य कर्कटिका । मधुखर्जूरिकायां राजनि०

कोलघोण्टा स्त्री । बदरीभेदे सुभूतिः । [कूर्मे अमरः ।

कोलदल न० कोलं बदरीफलमिव दलमस्य । नखीनामगन्ध-

कोलगिरि पु० दक्षिणदिक्स्थे पर्वतभेदे "ऋषभं कोलगिरिश्चैव सुरभीपट्टनं तथा" भा० स० ३०अ० सहदेवदक्षिणादिग्विजये । कोलाचलादयोऽप्यत्र । कोलाचलनाम्नामापीति तस्य विशेषणं तत्पर्वतस्थितत्वात् [इष्टे हारा०

कोलनासिका स्त्री० कोलस्य शूकरस्य नासिकेव । रक्तपुष्पी-

कोलपुच्छ पु० कोलस्य शूकरस्येव पुच्छोऽस्य । कङ्कपक्षिणि हारा० । [ राजनि०

कोलमूल न० कोलं बदरीफलमिव मूलमस्य । पिप्पलीमूले

कोलम्बक पु० कुल—अम्बच् कोलम्बः संज्ञायां कन् । तन्त्रीभिन्ने अलाबुप्रभृतिसमुदाये वीणायाः अवयवे भरतः

कोलवल्ली स्त्री० कोलोवराह इव वल्ली तल्लोमतुल्यशृङ्गवत्त्वात् । गजपिप्पल्याम् राजनि० । २शूकरपादिकायां राजनि०

कोलशिम्बि स्त्री कोलपादाकारा शिम्बिरस्याः । (आलकषीति) ख्यातायां शूकरपादिकायां लतायाम् । वा ङीप् । "कोलशिम्बी समीरघ्नी गुरूष्णा कफपित्तहृत् । शुक्राग्निसादकृद्रूक्षा रुचिकृत् बद्धविड् गुरुः" इति भावप्र०

कोला स्त्री कुल—ज्वला० ण टाप् ।१पिप्पल्याम्,२चव्ये(चइ) मेदि०३कोलिवृक्षे शब्दरत्ना० । ४कोलापुरे च

कोलाक्ष पु० ब० व० । देशभेदे शब्दरत्ना०

कोलापुर न० दक्षिणदेशप्रसिद्धे लक्ष्मीदेव्याः स्थाने पुरभेदे

कोलाविध्वंसिन् त्रि०कोलां पुरभेदे विध्वंसितुं यस्य शीलमस्य णिच्चेन धातोरन्यार्थपरत्वम् । पर्वतवासिनि म्लेच्छभेदे, "एवं पालयतस्तस्य म्लेच्छाः पर्वतवासिनः । कोलाविध्वंसिनः प्राप्ताः" इति देवीभागवतम् । "कोलाविध्वंसिनस्तथेति" देवीमाहा० । कोलाशब्दः कोलाहलवाचकस्तथा च कोलाहलेनैव राज्यविध्वंसं ये कुर्वन्ति । २तेषु च ।

कोलाहल पु० कुल—घञ् तमाह्वयति ह्वे—ड । बहुविधे दूरगामिन्यव्यक्ते शब्दे अमरः "शीघ्रं भेरीनिनादेन स्फुटकोलाहलेन वै" रामा०

कोलि स्त्री कुल–इन्। बदर्य्याम् पक्षे वा ङीप् अमरः।

कोलिसर्पः पु० धनरेण नदेश्चतां प्रापिते क्षत्रियभेदे। उदा० वैरवशब्दे हरिवं० वाक्यमुक्तम् "कोलिसर्पा माहिषका-श्चाश्लाः क्षत्रियजातयः। वृषलत्वं परिगता ब्राह्मणाना-मदर्शनात्" भा०आनु०६६अ० [राजा अण् कौलूत तद्रूपे

को(कौ)लूत पु० कुलूतशब्दार्थे इ० स० पाठान्तरम्। तस्य

कोल्या स्त्री कोलमर्हति यत्। पिप्पल्यां रत्नमा०

कोल्ल पु० भारतवर्षस्थे पर्वतभेदे "भारतेऽप्यस्मिन् वर्षे सरि च्छैलाः सन्ति बहवः" इत्युपक्रमे "ऋषभः कूटकः कोल्लः सह्यगिरिः" इत्यादि भाग० ५।१६।१०। उक्तम्। स च गिरिः इ०सं०कूर्म्मविभागे "अथ दक्षिणेन लङ्का" इत्युपक्रमे "कर्णाटकमहाटविचित्रकूटनासिककोल्लगिरिचोलाः" इति दक्षिणस्यानुक्तः। कोल्लगिर्य्यादयोऽप्यत्र। तत्र भवः तस्य राजा वा बा० ढक्। कौल्लगिरेय तत्रभवे तद्रूपे च। "अश्वितः प्रययौ भूयो दक्षिणं सलिलार्णवम्। तत्रापि द्राविडैरान्ध्रै रौद्रैर्माहिषकैरपि। तथा कौल्लगिरेयैश्च युद्धमासीत् किरीटिनः" भा० आश्व० ८३अ०।

कोविद पु० कुङ् शब्दे–विच् कौश्शब्दस्तं वेत्ति विद–क। १पण्डिते २विदुषि अमरः "समीक्ष्यकारिणं प्राज्ञं धर्म्म कामार्थकोविदम्" मनुः। "आत्मनेव गुणदोषकोविदः"। "श्रौतमार्गसुखगानकोविदेति च" माघः।

कोविदार पु० कुं भूमिं विदृणाति–वि+दृ–अण् पृषो०। १रक्तकाञ्चनारे (रक्तकाञ्चन)। अमरः। "कोविदार कलिकाऽतिकोमला तक्रसिद्धतिलतैलपाचिता। हिङ्गु-वासकसुवासवासिता वेसवारलुलिताऽतिलोभदा" पाक-राजः। काञ्चनारशब्दे गुणाद्युक्तम्। "कर्णेन कोवि-दारश्च तालकन्दस्तथा विषम्" । श्राद्धदेयकथने वायुपु०। "श्वेतकाञ्चनसदृशः कोविदारः" इति श्राद्धविवेकः। २पा-रिजाते च। हरिवं० १२६अ० तस्योत्पत्तिर्दर्शिता यथा "कोऽप्ययं दारिताङ्कुरजामन्नोयतोजनाः। कोवि-दार इति ख्यातस्त्वतः स महातरुः। मन्दारः कोवि-दारश्च पारिजातश्च नामभिः। स इह्यो जायते दिव्यो यस्यैतत् कुसुमोत्तमम्" पारिजातहरणे। "पारि-जातान् कोविदारान् मन्दारद्रुमांस्तथा" भा०व० १५५अ०। अत्र पारिजाताद्भिन्नत्वेन निर्देशात् रक्तकाञ्चनपरता ज्ञार्थेयं क। रक्तकाञ्चनार्थे "अमन्दैः पिचुमर्दैश्च मन्दारैः कोविदारकैः" काशी०।

कोश(ष) पुंन० अर्द्धर्चादि कुश(ष)–आधारादौ घञ् कर्त्तरि अच् वा। १अण्डे शब्दर०। कृताकृतयोः २हेमरूप्ययोः अमरः। ३कुड्मले मुकुले ४खड्गपिधाने। (खाप) ५समूहे ६दिव्यभेदे अमरः। मूर्द्धन्यमध्यस्तु अभिधानरूपे ७शब्दपर्य्यायज्ञापकग्रन्थे मेदि० ८धना-द्यागारे ९पानपात्रे चषके १०पिण्याकायां हेमच०। पनसादिमध्यस्थे (कोषा) ख्याते ११पदार्थे धर०। शब्दान्तरपूर्व्वस्तु गोलकाकारे १२पदार्थे यथा "नेत्र-कोषः" क्षीरस्वामी। तत्र खड्गपिधाने "वैयाघ्रकोषे निहितो हेमचित्रत्सरुर्महान्" । "पृथुशुक्लकोषश्च" तस्य हेममये कोषे सुतप्ते पावकप्रभे" भा०वि० ४२अ०। बहुशः प्रयोगः। धनागारे "निःशेषविश्राणितकोषजातम्" मुकुले "मामक्षिणोद् यत्र विभिन्नकोषैः" "भिन्नाद्रिगैरिक-तटा इव दन्तकोषाः" रघुः १३त्वगाद्यावरणे कोषवदाव-रकत्वात् "शरीरकोषाद्यत्तस्याः पार्वत्या निःसृताम्बिका। कौशिकीति समाख्याता ततो लोकेषु गीयते" देवीमा०। १४पिधानमात्रे "सुजातयोः पङ्कजकोषयोः श्रियम्" रघु०। "कोषमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्" सुश्रु० "यो वा अयं द्वीपः कुवलयकमलकोषाभ्यन्तरकोषः" भाग० ५।१६।६। कोश(ष)पानदिव्यञ्च वीरमि० दर्शितो यथा "अथ कोश(ष)विधिः। तत्र "अतः परं प्रवक्ष्यामि कोश(ष)स्य विधिमुत्तमम्। शास्त्रविद्भिर्यथा प्रोक्तं सर्वकाला-विरोधिनम्। पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च। सशूकस्याऽव्यसनिनः कोषपानं विधीयते। इत्यतः अद्धाप्रत्ययस्य देवब्राह्मणवर्गवधाविति"। सशूकस्य अवश्येन दिव्यकरणेऽनिष्टशङ्कायुक्तस्य कोषपानम्। उग्रदेवता-स्नानोदकपानं देवतास्नानोदकस्य प्रसृतित्रयं पाययित्वा इह विष्णुः "उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात्प्रसृ-तित्रयं पिबेदिदमया न कृतमिति व्याहरन् देवताभिमुखः" इति। याज्ञवल्क्योऽपि "देवानुग्रान् समभ्यर्च्य तत्स्ना-नोदकमाहरेत्। संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रय-मिति"। उग्रान्देवान्दुर्गादित्यादीन्। तेषामन्यतमं देवं प्राङ्विवाकः सोपवासो गन्धपुष्पादिभिः समभ्यर्च्य स्नापयि-त्वा तत्स्नानोदकं दिव्यदेशमानयेदित्यर्थः। नीत्वा च तत्र निधाय धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्व-दिव्यसाधारणविधिं विधाय देवतायतनसमीपे मण्डलञ्च विधाय तत्र शोध्यं प्राङ्मुखं स्थापयित्वा तत्सत्ये नैतद्दि-व्यकरणेऽनिष्टं संश्राव्य जलविधानोक्तेन "तोय! त्वं प्राणिनां प्राणः" इत्यादिना मन्त्रेणाभिमन्त्र्य पूर्वनिहितोदकात् प्र-

प्रसृतित्रयं पाययेत् । कोष्यस्य जलविधानोक्तेन "सत्यानृतविभागस्य" इत्यादिना मन्त्रेणाभिमन्त्र्य पिबेत् । तथा च नारदः "तमाहूयाभिशस्तन्तु मण्डलाभ्यन्तरे स्थितम् । आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयमिति" । पितामहोऽपि "प्राङ्मुखं कारिणं कृत्वा पाययेत् प्रसृतित्रयम् । पूर्व्वोक्तेन विधानेन स्नानमार्द्रोपवासिनं शुचिमिति" । कारिणं दिव्यकारिणं शोध्यमिति यावत् । पूर्व्वोक्तेन सकलदिव्यसाधारणतया प्रागुक्तेनेत्यर्थः । नारदोऽपि "अर्च्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु । एनश्च श्रावयित्वा तु पाययेत् प्रसृतित्रयमिति" । एनः पापम् । तच्च तत्प्रलापाभिधानसूत्रेण तेनैव दर्शितम् । "स्वेच्छया यः पिबेत्कोषमत्र कश्चिद्दूषितो नरः । न सन्देहपरो लोभात् पापी भवति दुर्म्मतिः । जानानः कामकारेण कोषमस्मीत्वा विसंवदेत् । दरिद्रो व्याधितो मूर्खः सप्तजन्मानि जायते" इति । सचिरस्थोऽभियोगे अभियोक्तुः श्राव्यमनिष्टमप्याह स एव "बलात्कोषं हि यो दत्त्वा हितमिच्छेत चात्मनः । स विनाशो भवेत्तस्य तत्र कार्य्यं न सिध्यतीति" । एवं यस्य कस्यचिदुपदेवस्य स्नानोदकमाहृत्य कोषानुष्ठाने प्राप्ते नियमार्थमाह पितामहः "भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् । समभावे तु देवानामादित्यस्य तु पाययेत् । दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः । भास्करस्य तु यत्तोयं ब्राह्मणं तत्र पाययेदिति" । उग्रदेवतायुधानि स्नापयित्वा तदुदकं स्वल्पेऽपराधे पाययेत् । तथा च कात्यायनः "स्वल्पेऽपराधे देवानां पाययित्वाऽऽयुधोदकम् । पाय्योऽविकारे चायुक्तो नियम्यः शुचिरप्येति । पाय्यः पाययितव्यः । नियम्यो दण्ड्यः । आयुधग्रहणं ताम्रादिनिर्म्मितादित्यमण्डलस्याप्युपलक्षणम् अत एव बृहस्पतिः "यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् । प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयमिति" अत्र विशेषमाह पितामहः "दुर्गायाः पाययेच्छूलमादित्यस्य तु मण्डलम् । अन्येषामपि देवानां स्नापयेदायुधानि त्विति" । कृतकोषपानस्य किं तत्कालमेव शुद्धिर्न्नेत्याह कात्यायनः "अथ दैवविसंवादस्त्रिसप्ताहात्तु दापयेत् । अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव चेति" । दैवविसंवादः दैविकव्याध्युद्भवः । दैविकव्याध्यादीनपि स एव दर्शयति "ज्वरातिसारविस्फोटाः गात्रास्थिपरिपीडनम् । नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते । शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणामिति" । शुद्धिकालावधिं विष्णुराह "यस्य पश्येद्द्विसप्ताहात् त्रिसप्ताहादथापि वा । रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा । तमशुद्धं विजानीयात् तथा शुद्धं विपर्य्ययेत् । दिव्ये च शुद्धं पुरुषं सत्कुर्य्याद्धार्म्मिको नृपः" इति । पितामहोऽपि "त्रिरात्रात् सप्तरात्राद्वा द्विसप्ताहादथापि वा । वैकृतं यस्य दृश्येत पापकृत्स तु मानवः । तस्यैकस्य न सर्व्वस्य जनस्य यदि तद्भवेत् । रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावनेति" । तद्रोगवैकृतं कृतकोषपानस्यैकस्य यदि भवेत् तदैव स पापकृदिति न, किन्तु तद्ग्रामसर्व्वस्य जनस्य मध्येऽपि यदि कस्यचिद्भवेत् तदापीत्यर्थः । अतएव बृहस्पतिः "सप्ताहाद्वा द्विसप्ताहाद्यस्यार्त्तिर्न्न प्रजायते । पुत्त्रदारधनानाञ्च स शुद्धः स्यान्न संशयः" इति । याज्ञवल्क्योऽपि "अर्व्वाक् चतुर्द्दशादह्नो यस्य नो राजदैविकम् । व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः" इति । एतेषाञ्च त्रिरात्रादीनां पक्षाणाम् अभियोगाल्पत्वमहत्त्वाभ्यां व्यवस्था ज्ञातव्या । अवधेरूर्द्ध्वन्तु रोगाद्युद्भवेऽपि न पराजयः तथा च नारदः "ऊर्द्ध्वं यस्य द्विसप्ताहाद्वैकृतन्तु महद्भवेत् । नाभियोज्यः स विदुषा कृतकालव्यतिक्रमादिति" । अत्र द्विसप्ताह इत्यवधिकालमात्रोपलक्षणम् कृतकालव्यतिक्रमहेतोरभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाश्रयणे चतुर्द्दशरात्रादूर्द्ध्वमपि वैकृतोत्पत्तौ पराजयः एवं त्रिरात्रसप्तरात्रात् प्रागपि वैकृतोत्पत्तौ पराजय इति सिद्धम्

१५ कोषवदावरकेषु वेदान्तप्रसिद्धेषु अन्नमयादिषु पञ्चसु पदार्थेषु । अन्नमय प्राणमयः मनोमयः विज्ञानमयः आनन्दमयः इत्येते पञ्च पदार्था अनात्मकाः तेषामात्मतोऽविवेकार्थं वेदान्तिभिः कल्पिताः । तत्र पञ्चकोषपद्धतिः विवेकचूडामणौ "देहोऽयमन्नभवनोऽन्नमयस्तु कोषश्चान्नेन जीवति विनश्यति तद्विहीनः । त्वक्चर्म्ममांसरुधिरास्थिपुरीषराशिर्नायं स्वयं भवितुमर्हति नित्यशुद्धः । पूर्व्वं जनेरपि मृतेरधुनायमस्ति जातक्षणः क्षणगुणोऽनियतस्वभावः । नैको जडश्च घटवत्परिदृश्यमानः स्वात्मा कथं भवति भावविकारवेत्ता । पाणिपादादिमान् देहो नात्मा व्यङ्गेऽपि जीवनात् । तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः । देहतद्धर्म्मतत्कर्म्म तदवस्थादिसाक्षिणः । स्वतएव स्वतःसिद्धं तद्वैलक्षण्यमात्मनः । मांसराशिर्मलिप्तो मलपूर्णोऽतिकश्मलः । कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः । त्वङ्मांसमेदोऽस्थिपुरीषराशावहंमतिं मूढजनः करोति ।

विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम्। देहोऽहमित्येव जडस्य बुद्धिर्देहे च जीवेऽविदुषस्त्वहंधीः। विवेकविज्ञानवतो महात्मनो ब्रह्माहमित्येव मतिः सदात्मनि। अत्रात्मबुद्धिं त्यज मूढबुद्धे! त्वङ्मांसमेदोऽस्थिपुरीषराशौ। सर्व्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शान्तिं परमां भजस्व। देहेन्द्रियादावसति भ्रमोदितां विद्वानहन्तां न जहाति यावत्। तावन्न तस्यास्ति विमुक्तिवार्त्ताप्यस्त्वेष वेदान्तनयान्तदर्शी। छायाशरीरे प्रतिबिम्बगात्रे यत् स्वप्नदेहे हृदि कल्पिताङ्गे। यथात्मबुद्धिस्तव नास्ति काचित् जीवच्छरीरे च तथैव मास्तु। देहात्मधीरेव नृणामसद्धियां जन्मादिदुःखप्रभवस्य बीजम्। यतस्ततस्त्वं जहि तां प्रयत्नात् त्यक्ते तु चित्ते न पुनर्भवाशा। कर्म्मेन्द्रियैः पञ्चभिरञ्चितोऽयं प्राणो भवेत् प्राणमयस्तु कोषः। येनात्मवानन्नमयोऽन्नपूर्णः प्रवर्त्ततेऽसौ सकलक्रियासु। नैवात्मापि प्राणमयो वायुविकारो गन्ता गन्ता वायुवदन्तर्बहिरेषः। यस्मात् किञ्चित् क्वापि न वेत्तीष्टमनिष्टं स्वं वान्यं वा किञ्चन नित्यं परतन्त्रः। ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात् कोषो ममाहमिति वस्तुविकल्पहेतुः। संज्ञादिभेदकलनाकलितो बलीयांस्तत्पूर्व्वकोषमभिपूर्य्य विजृम्भते यः। पञ्चेन्द्रियैः पञ्चभिरेव होतृभिः प्रचीयमानो विषयाज्यधारया। जाज्वल्यमानो बहुवासनेन्धनैर्मनोमयाग्निर्दहति प्रपञ्चम्। न ह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबन्धहेतुः। तस्मिन् विनष्टे सकलं विनष्टं विजृम्भितेऽस्मिन् सकलं विजृम्भते। स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या भोक्त्रादि विश्वं मन एव सर्व्वम्। तथैव जाग्रत्यपि नो विशेषस्तत्सर्व्वमेतन्मनसो विजृम्भणम्। सुषुप्तिकाले मनसि प्रलीने नैवास्ति किञ्चित् सकलप्रसिद्धेः। अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुतोऽस्ति। वायुना नीयते मेघः पुनस्तेनैव नीयते। मनसा कल्प्यते बन्धो मोक्षस्तेनैव कल्प्यते। देहादिसर्व्वविषये परिकल्प्य रागं बध्नाति तेन पुरुषं पशुवद्गुणेन। वैरस्यमत्र विषवत् सुविधाय पश्चादेनं विमोचयति तन्मन एव बन्धात्। तस्मान्मनः कारणमस्य जन्तोर्बन्धस्य मोक्षस्य च वा विधाने। बन्धस्य हेतुर्मलिनं रजोगुणैर्मोक्षस्य शुद्धं विरजस्तमस्कम्। विवेकवैराग्यगुणातिरेकाच्छुद्धत्वमासाद्य मनो विमुक्त्यै। भवत्यतो बुद्धिमतो मुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे। मनो नाम महाव्याघ्रो विषयारण्यभूमिषु। चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः। मनः प्रसूते विषयानशेषान् स्थूलात्मना सूक्ष्मतया च भोक्तुः। शरीरवर्णाश्रमजातिभेदान् गुणक्रियाहेतुफलानि नित्यम्। असङ्गचिद्रूपममुं विमोह्य देहेन्द्रियप्राणगुणैर्निबध्य। अहंममेति भ्रमयत्यजस्रं मनः स्वकृत्येषु फलोपभुक्तिषु। अध्यासदोषात् पुरुषस्य संसृतिरध्यासबन्धस्त्वमुनैव कल्पितः। रजस्तमोदोषवतोऽविवेकिनो जन्मादिदुःखस्य निदानमेतत्। अतः प्राहुर्मनोऽविद्यां पण्डितास्तत्त्वदर्शिनः। येनैव भ्राम्यते विश्वं वायुनेवाभ्रमण्डलम्। तन्मनःशोधनं कार्य्यं प्रयत्नेन मुमुक्षुणा। विशुद्धे सति चैतस्मिन् मुक्तिः करफलायते। मोक्षैकसक्त्या विषयेषु रागं निर्म्मूल्य संन्यस्य च सर्व्वकर्म्म। सच्छ्रद्धया यः श्रवणादिनिष्ठो रजःस्वभावं स धुनोति बुद्धेः। मनोमयो नापि भवेत् परात्मा ह्याद्यन्तवत्त्वात् परिणामिभावात्। दुःखात्मकत्वाद्विषयत्वहेतोर्द्रष्टा हि दृश्यात्मतया न दृष्टः। बुद्धिर्बुद्धीन्द्रियैः सार्द्धं सवृत्तिः कर्त्तृलक्षणः। विज्ञानमयकोषः स्यात् पुंसः संसारकारणम्। अनुव्रजच्चित्प्रतिबिम्बशक्तिर्विज्ञानसंज्ञः प्रकृतेर्विकारः। ज्ञानक्रियावानहमित्यजस्रं देहेन्द्रियादिष्वभिमन्यते भृशम्। अनादिकालोऽयमहंस्वभावो जीवः समस्तव्यवहारवोढा। करोति कर्म्माण्यपि पूर्ववासनः पुण्यान्यपुण्यानि च तत्फलानि। भुङ्क्ते विचित्रास्वपि योनिषु व्रजन्नायाति निर्यात्यध ऊर्द्ध्वमेषः। अस्यैव विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्थासुखदुःखभोगाः। देहादिनिष्ठाश्रमधर्म्मकर्म्मगुणाभिमानः सततं ममेति। विज्ञानकोषोऽयमतिप्रकाशः प्रकृष्टसान्निध्यवशात् परात्मनः। अतो भवत्येष उपाधिरस्य यदात्मधीः संसरति भ्रमेण। योऽयं विज्ञानमयः प्राणेषु हृदि स्फुरत्ययं ज्योतिः। कूटस्थः सन्नात्मा कर्त्ता भोक्ता भवत्युपाधिस्थः। स्वयं परिच्छेदमुपेत्य बुद्धेस्तादात्म्यदोषेण परं मृषात्मनः। सर्व्वात्मकः सन्नपि वीक्षते स्वयं स्वतः पृथक्त्वेन मृदो घटानिव। उपाधिसम्बन्धवशात् परात्मा ह्युपाधिधर्म्माननुयाति तद्गुणः। अयोविकारानविकारिवह्निवत् सदैकरूपोऽपि परः स्वभावात्। शिष्य उवाच। भ्रमेणाप्यन्यथा वाऽस्तु जीवभावः परात्मनः। तदुपाधेरनादित्वान्नानादेर्नाश इष्यते। अतोऽस्य जीवभावोऽपि नित्या भवति संसृतिः। न निवर्त्तेत, तन्मोक्षः कथं? मे श्रीगुरो! वद।

श्रीगुरुरुवाच । सम्यक् पृष्टं त्वया विद्वन् ! सावधानेन तत् शृणु । प्रामाणिकी न भवति भ्रान्त्या मोहितकल्पना । भ्रान्तिं विना त्वसङ्गस्य निष्क्रियस्य निराकृतेः । न घटेतार्थसम्बन्धो नभसो नीलतादिवत् । स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य प्रत्यग्बोधानन्दरूपस्य बुद्धेः । भ्रान्त्या प्राप्तो जीवभावो न सत्यो मोहापाये नास्त्ययं वस्तुस्वभावः । यावद्भ्रान्तिस्तावदेवास्य सत्ता मिथ्याज्ञानोज्जृम्भितस्य प्रमादात् । रज्ज्वां सर्पो भ्रान्तिकालीन एव भ्रान्तेर्नाशे नैव सर्पोऽपि तद्वत् । अनादित्वमविद्यायाः कार्य्यस्यापि तथेष्यते । उत्पन्नायान्तु विद्यायामाविद्यकमनाद्यपि । प्रबोधे स्वप्नवत् सर्व्वं सहमूलं विनश्यति । अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटम् । अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः । यद्बुद्ध्युपाधिसम्बन्धात् परिकल्पितमात्मनि । जीवत्वं न ततोऽन्यस्तु स्वरूपेण विलक्षणः । सम्बन्धः स्वात्मनो बुद्ध्या मिथ्याज्ञानपुरःसरः । विनिवृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा । ब्रह्मात्मैकत्वविज्ञानं सम्यक् ज्ञानं श्रुतेर्मतम् । तदात्मानात्मनोः सम्यग्विवेकेनैव सिध्यति । ततो विवेकः कर्त्तव्यः प्रत्यगात्मसदात्मनोः । जलं पङ्कवदत्यन्तं पङ्कापाये जलं स्फुटम् । यथा भाति, तथात्मापि दोषाभावे स्फुटप्रभः । असन्निवृत्तौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत् प्रतीचः । ततो निरासः करणीय एव सदात्मनः साध्वहमादिवस्तुनः । अतो नायं परात्मा स्याद्विज्ञानमयशब्दभाक् । विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुतः । दृश्यत्वात् व्यभिचारित्वात् नानित्यो नित्य इष्यते"।

आनन्दमयकोषस्तु आनन्दमयकोषशब्दे ७२६पृ० उक्तः धननिचयात्मककोषस्य राज्याङ्गतामाह "स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा । सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते । सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् । पूर्व्वं पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत्" मनुः "स्वामी राजा अमात्यो मन्त्र्यादिः । पुरं राज्ञः कृतदुर्गनिवासनगरं, राष्ट्रं देशः, कोषो वित्तनिचयः, दण्डो हस्त्यश्वरथपादातं, मित्रं त्रिविधं सप्तमाध्यायोक्तं ते सप्त प्रकृतयोऽङ्गानि सप्ताङ्गमिदं राज्यमित्युच्यते । ततः किमत आह सप्तानामिति । आसां राज्यस्य प्रकृतीनां सप्तानां क्रमिकोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्व्वस्याविनाशरूपं व्यसनं गरीयो जानीयात् । तथाहि मित्रव्यसनात् स्वबलव्यसनं गरीयः सम्पन्नबलस्यैव मित्राद्युपग्रहे सामर्थ्यात् । एवं बलात् कोषो गरीयान् कोषनाशे बलस्यापि नाशात् । कोषाद्राष्ट्रं गरीयः राष्ट्रनाशे कुतः कोषोत्पत्तिः । एवं राष्ट्राद्दुर्गं गरीयो दुर्गस्थस्यैव धनादिसम्पदा राज्यरक्षासिद्धेः । दुर्गादमात्यो गरीयान् प्रधानामात्यनाशे सर्व्वाङ्गवैकल्यात् । अमात्यादपि आत्मा सर्व्वस्यात्मार्थत्वात्" कुल्लू०

कोषसञ्चयस्यावश्यकता युक्तिकल्पतरौ दर्शिता यथा "कोषो महीपतेर्जीवो न तु प्राणाः कथञ्चन । द्रव्यं हि देहो भूपस्य न शरीरमिति स्थितिः । धर्म्महेतोः सुखार्थाय भृत्यानां भरणाय च । आपदर्थञ्च संरक्ष्यः कोषः कोषवता सदा । धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्त्तते । नाधनस्य भवेद्धर्म्मः कामश्चैव कथञ्चन । अधर्म्मोपार्जनं कुर्य्यान्नद्धनं रक्ष्यते परैः । स्वयं पापस्य पात्रं स्यात्सिंहो भूमिलवादिव । तादात्विको मूलहरः कदर्य्यस्त्रिविधोऽर्थकः । उत्पन्नार्थव्ययकरो यो भविष्यन्नाशया । स तादात्विक आख्यातः कल्याणी तस्य नायतिः । यः पित्राद्यर्ज्जितं वित्तमन्यायेन तु भक्षयेत् । स मूलहर आख्यातस्तदर्कोऽपि चाशुभः । स कदर्य्यस्तु यस्त्वात्मपीडनैरर्थसञ्चयी । तद्धनं राजदायादतस्कराणां निधिर्भवेत् । किञ्च च राजकोषस्य स्तोकस्तोकेन वर्द्धते । अञ्जनस्य धनस्यैव स्तोकस्तोकेन क्षीयते । कोषस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् । स्वगुणैर्वर्द्धते राष्ट्रं तद्वृद्धिर्न प्रवृत्तता । राज्ञोपायेन संरक्ष्या ग्रामे ग्रामे कृषीवलाः । तेभ्यः कणस्तथार्था वर्द्धेभ्यः सर्वसम्पदः । शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा । तथा वर्षेषु वर्षेषु कर्षणात् भूगुणक्षयः । एकस्यां गुणहीनायां हलमन्यत्र कारयेत्" ।

तत्सञ्चयोपायाश्च भा० शा० ८८अ० दर्शिताः यथा "यदा राजा समर्थोऽपि कोषार्थे स्यान्महामते! ।" इत्यादि युधिष्ठिरप्रश्ने भीष्मोक्तिः "यथादेशं यथाकालं यथाबुद्धि यथाबलम् । अनुशिष्यात् प्रजा राजा धर्म्मार्थी तद्धिते रतः । यथा तासाञ्च मन्येत श्रेय आत्मन एव च । तथा कर्म्माणि सर्व्वाणि राजा राष्ट्रेषु वर्त्तयेत्" इत्युपक्रमे "मधुदोहमित्याद्युक्तं" तच्च करशब्दे १६८७पृ० दर्शितम् । तत्र ८०अ० इत्युक्तिः प्रामादिकी ८८अ० इत्येव साधु । ततः परं कियदन्ते

"प्रयोगं कारयेत्तस्मात् यथा बलिकरांस्तथा । कर्षगोरक्षवाणिज्यं यच्चान्यत् किञ्चिदीदृशम् । पुरुषैः कारयेत्

कर्म्म बहुभिः कर्म्मभेदतः । भरवेत् कृषिगोरक्षावाणिज्यञ्चाप्यनुष्ठितौ । संशयं लभते किञ्चित्तेन राजा विगर्ह्यते । धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः । वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै । अङ्गमेतन्महद्राज्ञो धनिनो नाम भारत ! । ककुदं सर्वभूतानां धनस्थो नात्र संशयः । प्राज्ञः शूरो धनस्थश्च स्वामी धार्म्मिक एव च । तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति । तस्मात् सर्वेषु भूतेषु प्रीतिमान् भव पार्थिव ! । सत्यमार्ज्जवमक्रोधमानृशंस्यञ्च पालय । एवं दण्डञ्च कोषञ्च मित्रं भूमिञ्च लप्स्यसे । सत्यार्ज्जवपरो राजन्मित्रकोषबलान्वितः" । ६तदाधारे गृहे जटा० (खाजाञ्चर) "तस्मात् द्विजेभ्यो दत्त्वार्थमर्थं कोषे निवेशयेत्" मनुः । १७मेघे निघ० ।

कोश(ष)कार पु० कोशं(षं)करोति कृ—ण्वुल् उप०स० । १खड्गाद्यावरणकारके स्त्रियां टाप् वि०स्त्री० तस्य पत्नी ङीप् । मुग्धबोधमते ईप् । "भेकत्यै कोषकारीम्" यजु० ३०।१४। "खड्गावरणकोश(ष)कारिणीम् स्त्रियम्" वेददी०। २इक्षुभेदे शब्दरत्ना० । कोषं स्ववेष्टनं तन्तुभिः करोति कृ—अण् । ३कीटभेदे (गुटिपोका) । "संवेष्टमानं बहुभिः मोहात्तन्तुभिरात्मजैः । कोषकारवदात्मानं वेष्टयन्नाववुध्यते" भा०शा० ३३१अ० ।

कोश(ष)कृत् त्रि० कोषं खड्गाद्यावरणं वेष्टनं वा करोति कृ—क्विप् ६त० । १कोषकारार्थे । २इक्षुभेदे सुश्रुतः "नेपालो दीर्घपत्रश्च नीलपोरोऽथ कोषकृत्" सुश्रु० इक्षुभेदोक्तौ

कोश(ष)चञ्चु पु०कोष इव चञ्चुर्यस्य । सारसपक्षिणि शब्दच०

कोश(ष)पाल पु० कोषं राज्याङ्गधनसंचयं पालयति पालि—अण् उप०स० । कोषरक्षके तल्लक्षणादिकं हेमा० परि०ख० लक्षणसमुच्चये । "धातुवस्त्राजिनादीनां रत्नानां प्रविभागवित् । विज्ञाता फल्गुसाराणामसंहार्य्यः शुचिः सदा । निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः । आयद्वारेषु सर्व्वेषु धनाध्यक्षसमा नराः । व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवीक्षिता । आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः । कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादर्थरक्षकः" । "निर्यान्तु कोश(ष)शालाश्च कृत्स्नास्ताश्रमं प्रति" भा० आश्र० २२अ० । ण्वुल् कोश(ष)पालकोऽप्यत्र ।

कोश(ष)फल न० कोषं(शे)फलमस्य । कक्कोले अमरः २जटाकोषातक्याम् स्त्री अजा० टाप् । ३नपुष्यां च स्त्री इत्यमि० गौरा० ङीष् ।

कोशयी पु० कुश—णि० अयी । खड्गादिपृष्ठे । "कोशयीर्देश वाजिनोऽदात्" ऋ० ६।४७।२२ । छान्दसः प्रयोगः

कोश(स)ला स्त्री कुश(स) वृषा० कल नि० गुणः । १सरयूतटस्थायामयोध्यायां पुर्य्यां २तद्युक्ते देशे पु०ब०व०। "कुन्तलाः काशिकोश(स)लाः" भा० भी०६अ० जनपदकथने । पूर्व्वदिक्स्थदेशभेदेषु प्राच्यकोशलेषु पु०ब०व० ते च कोशलकाश्च मानवः" इ०व० कर्म्मविभागे पूर्व्वस्यामुक्ताः। कचिदेकत्वमपि । "कोश(स)लोनाम मुदितः स्फीतोजनपदो महान् । निविष्टः सरयूतीरे प्रभूतधनधान्यवान्" रामा० १।५।५ । कोशलदेशोद्विविधः प्राच्योत्तरभेदात् तत्र अयोध्यायुक्तदेशस्योत्तरकोशलत्वम् "पितुरनन्तरमुत्तरकोशलान्" "तस्य जित्वोत्तरकोश(स)लानाम्" "प्रियासखोद्धुत्तरकोशलेश्वरः" रघुः प्राच्यकोशलास्तु कोसलशब्दे वक्ष्यते । तद्देशस्य राजा अण् । कौस(श)ल्य कोशलदेशनृपे "कौ(शा)सल्यइत्युत्तरको(शा)सलानाम्" रघुः स्त्रियां टाप् कौसल्या । "कौसल्यानन्दवर्द्धनोरामः" रामा०

कोश(स)लात्मजा स्त्री कोश(स)लाः पूर्व्वकोश(स)लदेशः तत्रत्यया तदधिपः तस्यात्मजा । प्राच्यकोसलाधिपस्य सुतायाम् रामजातरि शब्दर०

कोशलिक न० कुशलाय कर्म्मणे दीयते ठक् हेमो० कोषम् । निजकार्य्यसाधनार्थं राजादिकार्य्यकरेभ्योदीयमाने उत्कोचे (घुस) हेम० कौशलिकमिति पाठान्तरं साधु

कोश(ष)वत् त्रि०कोषः(शः)अस्त्यस्य मतुप् मस्य वः। १कोश(ष)युक्ते । "धर्म्मात्मा कोषवांश्चापि देवराज इवापरः" भा० आनु० २अ० । स्त्रियां ङीप् कोष(श)वती सा च २कोषातकीटके "दन्तीयुतं वा मणबोद्भवानां कल्कं पिबेत् कोषवतीरसेन" "मुकाख्याकोषवत्योश्च मूलं मदन एव च" "जीमूतकैः कोषवतीफलैश्च दन्तीद्रवन्तीत्रिवृताश्च चैव" इति च सुश्रु०

कोश(ष)वासिन् पु० कोषे(शे)वसति वस—णिनि ७त० । कोषाभ्यन्तरस्थे जन्तुभेदे "कोषवासिनां पादिनां च तद्वेव" (अनुपानम्) सुश्रु० कोषस्थशब्दे विवृतिः

कोश(ष)वृद्धि पु० कोषस्य मुष्कस्य वृद्धिर्यत्र ।१कुरण्डक इक्षे। ६त०। २अण्डकोषवृद्धौ रोगभेदे ३धनवृद्धयवृद्धौ च स्त्री

कोश(ष)शायिका स्त्री कोषे(शे) पिधानमध्ये शेते शी ण्वुल् ७त० अतइत्वम् । क्षुरिकायां जटाधरः

कोश(ष)स्कृत् पु० कोषं(शं)करोति कृ—क्विप् नि० सुट् । कोषकारके जन्तुभेदे (गुटिपोका) "लभेत् कोश(ष)कारवदात्

नान:" भाग० ७।४।११ "कोश(ष)कृत् कोशकारः" श्रीधरः

**कोश(ष)स्थ** पु० कोशे(षे) तिष्ठति स्था—क ७त० । सुश्रुतोक्ते शङ्खादिके जन्तुभेदे । "आनूपवर्गस्तु पञ्चविधः" इत्युपक्रम्य कोशस्था इत्युद्दिश्य "शङ्ख शङ्खनख शुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः" पादिनश्च" इत्युक्त्वा कूर्मादींश्चोक्त्वा तन्मांसगुणा उक्ता यथा "शङ्खकूर्मादयः स्वादुरसपाका मरुन्नुदः । शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः"

**कोशा(षा)गार** न० ६त० । धनागारे (खाजनाघर) "कोशागारमायुधागारमश्वशालां हस्तिशालाञ्च कुरुः" भा० व० १६७ कोश(ष)पट्टादयोऽप्यत्र न० [कड़ि] गुणभेदे शब्दार्थ०

**कोशा(षा)ङ्क** न० कोशः(षः) इवाङ्कमस्य । नखमूले इत्यमरटीका(भर०)

**कोशा(षा)तक** पु० कोश(ष)मतति अत—क्वुन् । १कठवेदशाखाभेदे २घटोत्कचासुरे चामके (नइइ) (भीडा) ख्याते शाकभेदे स्त्री मेदि० गौरा० ङीष् । भाव० इयं राजसेव्यत्वात् महत्त्वाद्वा राजोपपदा निर्दिष्टा "धामार्गवः पीतपुष्पा जालिनी कृतवेधना । राजकोशातकी चेति तथोक्ता राजिमत्फला । राजकोशातकी शीता मधुरा कफवातला । पित्तघ्नी दीपनी श्वासज्वरकासकृमिप्रणुत्" "कोशातकीर्वाप्यथवाऽप्यपक्वा शाक्ते च युक्ताः सुष्टेन संस्कृताः । सम्यक् जीताः वैश्वर्याहिकृबाधिते तैलेऽतिकृष्णा वक्तपुष्टिदायकाः" तस्याः फलम् अण् हरीतक्या० लुप् । तत्फले स्त्री "कोशातकीपुष्पगुलुच्छकान्तिभिः" नैष०

**कोशा(षा)म्र** पु० को(शो)षे आम्र इव । १फलप्रधानवृक्षभेदे (कोशाम) "कोशाम्रः कुष्ठशोफास्रपित्तव्रणकफापहः । तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम् । पक्वं तु दीपनं रुच्यं लघूष्णं कफवातहृत्" भावप्र० । (कैकोड) २फलवृक्षे राजवल्लभः

**कोशि(षि)न्** त्रि० कोश(ष)+अस्त्यर्थे इनि । १कोश(ष)युक्ते आमोपपदकोषी तु सुश्रुतोक्ते कर्णवन्धनजे रोगभेदे "बद्धमात्रस्तु यः कर्णः सहसैवाभिवर्द्धयेत् । आमकोषी समाख्यातः क्षिप्रमेव विसर्प्यते" । २आम्रवृक्षे पु० शब्दमाला ।

**कोशि(षि)ला** स्त्री कोश+अस्त्यर्थे पिच्छादित्वात् इलच् । सहपर्ण्याम् राजनि०

**कोशी(षी)** स्त्री कुश—(कुष) अच् गौरा० ङीष् । १चर्मपादुकायाम् २धान्याद्यग्रभागे च (शुङ्गा) हेम०

**कोश्य(ष्य)** त्रि० कोषे हृदयान्तर्गते(षे)भवः यत् । हृदयकोषे मांसपिण्डे "विक्रानि कोश्याभ्याम्" यजु० २५।८ "कोश्याभ्यां हृदयस्य मांसपिण्डाभ्याम्" वेददी०

**कोष** पु० न० । कुष—पचादि० अच् । १कोशशब्दार्थे कोशशब्दे विवृतिः । २ऋषिभेदे । "अथोऽह कोषा भावयन्तः शत० ब्रा० १०।५।५।८ "कोषानाम ऋषयः" भा० ।

**कोषक** पु० कोष—स्वार्थे क । अण्डकोषे शब्दर०

**कोषला** स्त्री० कोष—अलच् । अयोध्यायां पुर्यां शब्दरत्ना०

**कोष्ठ** पु० कुष—थन् । १गृहमध्ये, २उदरमध्ये, ३धान्यादिस्थापने ४कुशूले च (कुठी) ५आत्मीये त्रि० मेदि० "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" इति सुश्रुतोक्ते आमाग्निपक्वमूत्ररुधिरस्थाने "प्रवाहिका शिरः शूलं कोष्ठशूलञ्च दारुणम्" "चले दोषे मृदौ कोष्ठे नेष्टेतात्र बलं त्वपाम्" सुश्रु० "भुक्तं भुक्तवतः कोष्ठे कथमन्नं विपच्यते" भा० आश्व० ७अ० "पतिं भार्य्योपतिष्ठेत ध्यायेत् कोष्ठगतं यथा" भा० भी० ६।१८।५२ । अकथहादिचक्रचतुःपार्श्वस्थरेखाचतुष्कान्विते ७स्थानभेदे अकथहशब्दे ४८पृ० उदा० । ८पदे स्थानमात्रे "पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् । यत् पञ्चविषयम् चेत्यं पञ्चप्रकृतिसञ्चिधरम् । पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो! । तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः । ० विषयास्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया" भाग० ४।२८।५१।५२।५३। कुशूले "शरत्कोष्ठात्कुशोष्ठकैराभिर्भ्यामाहरति" कौषीतकिब्रा०

**कोष्ठागार** न० कोष्ठमगारमिव । धान्यधनादेःस्थापने गृहे (कुठी) "कोष्ठागारायुधागारदेवतागारभेदकान्" मनुः "कोष्ठागारं तु ते नित्यं स्फीतं धान्यैः सुसंहतम् । सदास्तु सत्सु संन्यस्तं धनधान्यपरोभव" भा० आ० ११९अ०

**कोष्ठागारिक** त्रि० कोष्ठागारे भवः तत्र नियुक्तो वा वा० ठन् । १कोष्ठागारभवे । "अत्यर्थं स्रवति रक्तं कोष्ठागारिककृत्पित्तेत्यादि" सुश्रु० २कोष्ठागारे नियुक्ते च ।

**कोष्ठागारिन्** पु० कोष्ठरूपमगारमिवाश्रयत्वेनास्त्यस्य इनि । कीटभेदे "कोष्ठागारी क्रमिकरश्च मण्डलपुच्छकः" सुश्रुते प्राणनाशककीटोक्तौ

**कोष्ण** न० ईषदुष्णम् कोः कादेशः । १ईषदुष्णस्पर्शे २तद्वति त्रि० अमरः । "भुवं कोष्णेन पीनोष्ठी मेध्येनाश्वत्थार्दिप" रघुः "हतेन सा शान्तिमुपैति जिह्वा कोष्णेन यष्टीमधुकान्वितेन" "शोथं सतोदं कोष्णेन सर्पिषा परिषेचयेत्" सुश्रु०

कौसल पु० ब०व०। कुश--कलच्। देशभेदे। तेऽभिजनोऽस्य तेषां राजा वा ष्यञ्। कौसल्य पित्रादिक्रमेण तद्देशवासिनि बहुषु तस्य लुक् कोसलाः। कोसलशब्दे विवृतिः। कोसलदेशश्च द्विविधः पूर्व्वोत्तरभेदात् "कोसलाधिपतिं चैव तथा वेत्रातटाधिपम्। कान्तारकांश्च समरे तथा प्राक्कोसलान् नृपान्" भा० स० ३०अ० "दक्षिणाये च पाञ्चालाः पूर्व्वाः कुन्तिषु कोसलाः" १२अ० उत्तरकोसलास्तु कोसलशब्दे दर्शिताः

कौहल पु० कौ कुत्सितं हलति स्पर्द्धते अच् पृषो०। १वाद्यभेदे मेदि० २मद्यभेदे च हेम० ३नाटकशास्त्रकर्तृमुनिभेदे तस्यापत्यम् शिवा० अण्। कौहल तदपत्ये पुंस्त्री० उभयोरैक्यात् कोहलोऽप्यत्र

कौहलीय पु० ऋषिभेदे "उपयातायाघ्यमिति कौहलीयाः" गोभि० गृ०सू०। उपयातायाचार्य्यसमीपं गतायार्घ्यं देयमिति कौहलीया आचार्य्या आहुः" सं०त०रघुनन्दनः

कौहित पु०। ऋषिभेदे। ततोऽपत्ये शिवा० अण्। कौहित तदपत्ये पुंस्त्री०

कौकिली स्त्री कोकिलेन दृष्टा अण्। कोकिलदिष्टायां सौत्रामण्याम्। "द्वे सौत्रामण्यौ कौकिली चरकसौत्रामणी च" ला०श्रौ०सू०।

कौक्कुटक पु० ब०व०। देशभेदे स च दक्षिणस्थः। "अथापरे जनपदा दक्षिणा भरतर्षभ!" इत्युपक्रमे "कौक्कुटकास्तथा चोलाः कौङ्कणा मालवानराः" भा० भी० ९अ०।

कौक्कनक पु० ब० व०। जनपदभेदे।

कौकुर पु० ब० व०। कुकुराणां देशः अण्। १देशभेदे। "अम्बष्ठाः कौकुरास्तार्क्ष्या वस्त्रपाः पह्नवैः सह" भा० सभा० ५१अ०। कुकुराः यादवभेदाएव स्वार्थे अण्। कुकुरवंश्ये २नृपभेदे। "श्रुत्वा विनष्टान् वार्ष्णेयान् सभोजान्धककौकुरान्" भा० मौ० ५अ०।

कौकृत्य न० कुत्सितं कृत्यं स्वार्थे अण्। १अयुक्तकरणे २अनुतापविषये च मेदि०

कौक्कुटिक पु० कुक्कुटीं मायां, पादपतनदेशस्य पश्यति ठक्। १दाम्भिके,कीटादिवधभीत्या पादक्षेपस्थानमात्रदर्शिनि संन्यासिनि च मेदि०। सन्यासी हि हिंसाभयात् पादन्यास प्रदेशपर्य्यन्तमेव पश्यन् दूरात् चक्षुः संयम्य यातीति तथात्वम्।

कौक्कुटिकन्दल पुंस्त्री कक्कुटस्यापत्यम् इञ् कौक्कुटिः स इव कन्दलः। (बेङ्गासाप) सर्पभेदे त्रिका० स्त्रियां ङीप्।

कौक्ष त्रि० कुक्षौ भवः असिभेदः। कुक्षिस्थे अलङ्करादौ

कौक्षक त्रि० कुक्षौ देशभेदे भवः धूमा० वुञ्। कुक्षिदेशभवे

कौक्षेय त्रि० कुक्षौ भवः "दृतिकुक्ष्यादिना" पा०ढञ्। कुक्षौ भवे। "असिं कौक्षेयकमुद्यम्य चकारापनसं मुखम्" भट्टिः

कौक्षेयक पु० कुक्षौ बद्धः असिः ढकञ्। कुक्षिबद्धे खड्गे "कौक्षेयकेण सर्वाङ्कितविषधरेणेव चन्दनलता" काद०। "बद्धतीक्ष्णकौक्षेयक." दशकुमा०।

कौङ्क पु० कोङ्कएव स्वार्थे अण्। कोङ्कणदेशे शब्दरत्ना०

कौङ्कण पु० ब० व०। कोङ्कण+स्वार्थे अण्। १कोङ्कणदेशे "कौङ्कणाः मालवानराः" भा०भी० ९अ०। तस्य राजा अण् २तद्देशनृपे च।

कौङ्किण न० ब०व०। कोङ्कण+पृषो०। कोङ्कणदेशे शब्दर०।

कौञ्च पु० क्रुञ्चएव स्वार्थे अण् पृषो०। क्रौञ्चपर्व्वते त्रिका०।

कौञ्जायन्य पु० कुञ्जा० गोत्रापत्ये चफञ् ततः स्वार्थे ञ्य। १कुञ्जर्षिगोत्रापत्ये स्त्रियान्तु न ञ्य किन्तु गोत्रप्रत्ययान्तत्वात् ङीप् कौञ्जायिनी सा च २ब्राह्मण्याम् जटाधरः।

कौञ्जि पुंस्त्री० कुञ्जस्यर्षेरनन्तरापत्यम् अतइञ्। कुञ्जर्षेरनन्तरापत्ये स्त्रियां वा ङीप्।

कौट त्रि० कूटे अद्रिशृङ्गे भवः उत्सा० अञ्। १कुटजवृक्षे (कुरची) भावप्र० कुट्यां प्रायभवः अण्। २स्वतन्त्रे त्रि० कूटस्य भावः अण्। ३मिथ्याकथने ४मिथ्यासाक्ष्ये च

कौटकिक त्रि० कूटमेव कूटकं मांसकूटं तत्पण्यमस्य ठञ्। मांसविक्रेतरि शब्दरत्ना०

कौटज पु० कुटमेव कौटं तत्र जातः। कुटजवृक्षे रायमुकुटः

कौटजभारिक त्रि० कुटजस्य भारं हरति वहत्यावहति वा वंशा०ठञ्। १कुटजभारहारिणि २तद्वाहके ३तदावहके च

कौटजिक त्रि० कुटजं भारभूतं हरति वहति आवहति वा ठञ्। भारभूतकुटजस्य १हारके २वाहके ३आवाहके च

कौटतक्ष पु० कौटः स्वतन्त्रः तक्षा टच् समा०। स्वतन्त्रे तक्षणि

कौटल्य न० कुट कलच् स्वार्थे ष्यञ्। कौटिल्यशब्दार्थे हेमच०

कौटसाक्ष्य न० कूटसाक्षिणोभावः कर्म्म वा ष्यञ्। मिथ्यासाक्ष्ये "कौटसाक्ष्यं सुहृद्वधः" मनुना सुरापानसमानतोक्त्या तस्यानुपातकता। कौटसाक्ष्यदण्डश्च मनुना दर्शितो यथा

"यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्तत् कार्य्यं निवर्त्तेत कृतञ्चाप्यकृतं भवेत्। लोभान्मोहाद्भयान्मैत्रात् कामात् क्रोधात्तथैव च। अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते। एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांस्तु प्रवक्ष्याम्य-

सुपूर्वं मः। क्रोधात् सहस्रं दण्डस्तु लोभात् पूर्वन्तु साहसम्। भयाद्द्वौ मध्यमं दण्डौ मैत्रात् पूर्वं चतुर्गुणम्। कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु। एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान्मनीषिभिः। धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च। कौटसाक्ष्यन्तु कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः। प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्"।

**कौटि** पुंस्त्री कूटस्यापत्यम् इञ्। कूटस्य मिथ्यार्थत्वेनोऽपत्ये स्त्रियां तु क्रौड्यादि॰ ष्यङ्। कौट्या

**कौटिक** त्रि॰ कूटेन वागवञ्चनयन्त्रेण चरति ठक्। १मांसविक्रयोपजीविनि अमरः। कूट+चतुरर्थ्यां कुमु॰ ठक्। कूटसन्निकृष्टदेशादौ त्रि॰।

**कौटिलिक** त्रि॰ कुटिलिका व्याधानां गतिभेदः कर्म्मारोपकरणभूतं लौहञ्च तया हरति मृगान् अङ्गारान् वा। "अण् कुटिलिकायाः" पा॰ अण्। १व्याधे २कर्म्मकारे च सि॰ कौ॰।

**कौटिल्य** न॰ कुटिलस्य भावः ष्यञ्। १वक्रीभावे "नित्यं कौटिल्ये गतौ" पा॰। "कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते" काव्यप्र॰ तच्चोपपातकम् "कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्" या॰ स्मृतेः। उपपातकशब्दे विवृतिः। स्वार्थे ष्यञ्। २चाणक्यमुनौ पु॰ राजनि॰ "आकर्ण्य आःश्रातम्। कौटिल्यः—कुटिलमतिः स एव येन क्रोधाग्नौ प्रसभमदाहि नन्दवंशः" मुद्राराक्षसम्

**कौटीगव्य** पुंस्त्री कुटीगोः ऋषिभेदस्य गोत्रापत्यम् गर्गा॰ यञ्। कुटीगोर्यूनि गोत्रापत्ये। तस्य छात्रः कण्वादि॰ अण् यलोपः। कौटीगव, तच्छात्रे। [देशादौ

**कौटीय** त्रि॰ कूट+चतुरर्थ्यां कशाश्वा॰ छण्। कूटसन्निकृष्ट-

**कौटीर्य्य** त्रि॰ कुटीरः केवल एव स्वार्थे ष्यञ्। केवले अवच्छाये। कोटिरीर्यौ यस्याः। २दुर्गायाम् स्त्री "कौटीर्य्यां मदिरां चण्डामिडां मलयवासिनीम्" हरिवं॰ १७८अ॰

**कौटुम्ब** त्रि॰ कुटम्बं तद्भरणं प्रयोजनमस्य अण्। कुटुम्बभरणोपयोगिद्रव्ये। आहरेदित्यनुवृत्तौ "अन्यथा कौटुम्बम्" आश्व॰ श्रौ॰ सू॰ २,६,१०,

**कौटुम्बिक** त्रि॰ कुटम्बे तद्भरणे प्रसृतः ठक्। कुटुम्बभरणे व्यापृते "कौटुम्बिकः क्रुध्यति वै जनाय" भाग॰ ५,५, १२,८,। कुटुम्बे भवः ठक्। २कुटुम्बमध्यपातिनि। "यत्र कौटुम्बिका दारापत्यादयो नाम्ना, कर्म्मणा दस्युकारगाला एव" भाग॰ ५,१४,५,

**कौट्या** स्त्री कूटस्यापत्यम् इञ् स्त्री कौटिः सैव क्रौड्या॰ ष्यङ्। १कूटापत्यस्त्रियाम् कूट+चतुरर्थ्याम्। संकाशा॰ ण्य। २कौट्य कूटसन्निकृष्टदेशादौ त्रि॰

**कौठारिकेय** त्रि॰ स्वल्पा कुठारी कुठारिका तस्याः इदम् शुभ्रा॰ ढक्। स्वल्पकुठारसम्बन्धिनि

**कौडविक** त्रि॰ कुडवस्य वापः ठञ्। कुडववापयोग्ये क्षेत्रादौ कुडवं तत्परिमितमन्नं सम्भवति पचति अवहरति वा ठञ्। २स्वस्मिन् कुडवमितान्नसम्भावके कटाहादौ ३तत्पाचके सूदादौ ४तदवहारके च स्त्रियां ङीप्। कुडवः परिमाणमस्य ठञ्। ५कुडवपरिमिते। संख्यापूर्व्वकस्य पूर्व्वपदस्य न वृद्धिः द्विकौडविकः। अर्द्धपूर्व्वकस्य तु वा वृद्धिः आ(अ)र्द्धकौडविकः। असंज्ञायान्तु ठञोलुक्। द्विकुडवम् अर्द्धकुडवम् इत्यादि।

**कौड्यक** त्रि॰ कुड्य—काकण्ठे यलोपः संयोगादिलोपः कुड्या तत्र जातादि कन्था॰ ढकञ् "कुड्याया यलोपश्च" पा॰ ग॰ यलोपः। कार्कण्ठकरयाह्वायां भूमौ जातादौ

**कौणकुत्स्य** पु॰ ऋषिभेदे। "भरद्वाजः कौणकुत्स्य आर्ष्टिषेणोऽथ गौतमः" भा॰ आ॰ ८८अ॰।

**कौणप** पु॰ कुणपः शवः भक्ष्यत्वेन विद्यतेऽस्य, अण्, कुणपस्तद्भक्षणं शीलमस्य वा। राक्षसे अमरः "न कौणपाः स्युः प्रभवो वा न देवा मच" भा॰आ॰१७०अ॰ मातुपाः" स्त्रियां ङीप्

**कौणपदन्त** पु॰ कौणपस्य दन्ताइव दन्ता अस्य। भीष्मे त्रिका॰

**कौणपाशन** पु॰ कौणपानामशनमिवाशनमस्य। सर्पभेदे "हरितः पिठरकः सुमुखः कौणपाशनः" भा॰ आ॰ ३५अ॰ नागनामोक्तौ

**कौण्डपायिन्** पु॰ ब॰व॰ कुण्डमेव कौण्डं तेन पिबन्ति सोमं पा—णिनि। सोमयागकारियजमानभेदेषु।

**कौण्डपायिन** न॰ कुण्डपायिनामिदम् अण् नि॰ प्रकृतिभावः। कुण्डपायिनां (कुण्डेन सोमपायिनाम्) सम्बन्धिनि अयनरूपे सत्रभेदे कुण्डपायिनामयनशब्दे विवृतिः।

**कौण्डल** त्रि॰ कुण्डलमस्त्यस्य ज्योत्स्ना॰ अण्। कुण्डलयुक्ते त्रि॰ स्त्रियां ङीप्। [सन्निकृष्टदेशादौ

**कौण्डलिक** त्रि॰ कुण्डल+चतुरर्थ्यां कुमु॰ ठक्। कुण्डल-

**कौण्डाग्नक** त्रि॰ कुण्डस्येदमण् कौण्डः अग्नौ भवः इद्धाद्यन्युत्तरपदत्वात् वुञ्। कुण्डसम्बन्ध्यग्निभवे

**कौण्डायन** त्रि॰ कुण्डगत्वादूरदेशादि पक्षा॰ चतुरर्थ्यां फक्। कुण्डसन्निकृष्टदेशादौ [कुण्डिननगरजातादौ

**कौण्डिनेयक** त्रि॰ कुण्डिने जातादि कन्था॰ ढकञ्।

**कौण्डिन्य** पुंस्त्री कुण्डिनस्यर्षेर्गोत्रापत्यं गर्गा० यञ्। कुण्डिनस्य गोत्रापत्ये। "कौण्डिन्यात् कौण्डिन्य" शत० ब्रा० १४।५।५।२०। स्त्रियां तु ङीपि यलोपः "पाराशरीकौण्डिनीपुत्रात् पाराशरीकौण्डिनीपुत्रः" शत० ब्रा० १४।८।४।३० वंशब्राह्मणे। कुण्डिनस्य युवापत्यम् गर्गा० यञि यञन्तात् फक्। कौण्डिन्यायन कुण्डिनस्य युवापत्ये पुंस्त्री "कौण्डिन्यायनाच्च कौण्डिन्यायनः" शत० ब्रा० १४।५।५।२०। कौण्डिन्यस्य छात्राः कण्वा० अण् यलोपश्च। कौण्डिन कौण्डिन्यच्छात्रे। बहुषु अस्त्रीलुक् कुण्डिनादेशश्च कुण्डिनाः। स्त्रियां तु न लुक् किन्तु गोत्रत्वात् ङीप्यलोपौ कौण्डिनी।

**कौण्डिल्यक** पु० १सुश्रुतोक्ते मशकभेदे विषजन्तुभेदे विषशब्दे विवृतिः। २तन्त्रोक्ते कीटभेदे च कीटशब्दे विवृतिः

**कौण्डोपरथ** पु०। आयुधजातिसंघे ततः स्वार्थे क। कौण्डोपरथीय तदर्थे। "आखुर्जरगर्त्तयस्तु कौण्डोपरथदाण्डकिः क्रौष्टुकिजालमानिः ब्रह्मगुप्तोऽथ जानकिः" सि० कौ०। [ तस्य गोत्रे।

**कौतस्कुत** त्रि० कुतः कुतोभवः अण् टिलोपः कस्का०। कु-

**कौतस्त** त्रि० कुतस्त्ये भवः अण् नि० वेदे यलोपः। कुतस्त्यभवे। "कौतस्तावध्वर्यू अरिमेजयश्च जनमेजयश्च" पार० ब्राह्म०।

**कौतुक** न० कुतुकस्य भावः युवादि० अण् प्रज्ञा० स्वार्थे अण् वा। १कुतूहले अमरः। तच्च अद्भुतालोकनाभिलाषातिशयः। "कौतुकागारमागात्" कुमा०। २मङ्गलार्थहस्तसूत्रे माघस्य "वैवाहिकैः कौतुकसंविधानैः" कुमा०। ३उत्सवे ४अभिलाषे ५नर्म्मणि ६हर्षे ७परम्परायातमङ्गले ८गीतादिभोगे ९भोगकाले च हेम०।

**कौतूहल** न० कुतूहलस्य तद्वितस्य भावः कर्म्म वा युवा० अण् प्रज्ञादि० स्वार्थे अण् वा। कुतूहले "विस्तरश्रवणे जातं कौतूहलमतीव मे" भा० आ० ६२अ०। "महत् कौतूहलं मेऽस्ति हरिश्चन्द्रकथां प्रति" मार्क० ८।१।

**कौतूहल्य** न० कुतूहल+ब्राह्मणा० स्वार्थे ष्यञ्। कुतूहले

**कौतोमत** पु० कुतोमतस्यापत्यम् ऋष्यण्। ऋषिभेदे। "कहुक्कयाकुर्गौपल इति कौतोमतेन" गोपथब्राह्मणम्।

**कौत्स** पुंस्त्री कुत्सस्य ऋषेरपत्यम् ऋष्यण्। कुत्सापत्ये "भूर्भुवः स्वरिति जपित्वा कौत्सोऽचिकुरोति" आश्व० श्रौ० सू० १।२।५। "कौत्साय दत्त्वा कन्यान्तु हंसीं नाम यशस्विनीम्" भा० आनु० १२७अ०। "कौत्सः प्रभेदे वरतन्तुशिष्यः" रघुः। बहुषु तस्य लुक्। कुत्साः तदपत्येषु। कुत्सेन दृष्टं साम अण्। कुत्सर्षिदृष्टे विकृतिगाने गेये सामभेदे। तच्च साम वेगाने १६प्र० २अर्द्धे १०गानम्। "कौत्सं भवति कामं भवति" श्रुतिः।

**कौथुम** त्रि० कुथुमं वेदशाखाभेदमधीते वेद वा अण्। १कुथुमशाखाध्यायिनि तद्वेत्तरि च। तस्य कार्त्तकौजपादित्वात् द्वन्द्वे पूर्वपदं प्रकृत्या। कठकौथुमाः इत्यादि। "अनुवादे चरणानाम्" पा० द्वन्द्वे एकवत् प्रयत्नात् कठकौथुमम्। "स्थेणोर्लुङि" वार्त्ति० स्थाधातोरिणधातोश्च लुङ्प्रयोग एव तस्य तथात्वं नियमितम्। [ ब्रह्मवै० जातिशब्दे विवृतिः

**कौद्दालीक** पुंस्त्री० रजक्यां तीवरजाते संकीर्णवर्णभेदे

**कौद्रविक** न० कोद्रवो निमित्तमस्य ठञ्। सौवर्च्चललवणे राजनि० [ धान्यभवनयोग्ये क्षेत्रे अमरः

**कौद्रवीण** न० कोद्रवस्य भवनं क्षेत्रं कोद्रव+खञ्। कोद्रव

**कौद्रा(न्द्रा)यण** पुंस्त्री० कुद्र(न्द्र)स्य ऋषेर्युवापत्यम् इञ् कौद्रिः(न्द्रिः) इञन्तत्वात् यून्यपत्ये फक्। कुद्रि(न्द्रि) नामर्षेर्युवापत्ये ततः अरीह० चतुरर्थ्यां वुञ्। कौन्द्रायणक तत्सन्निकृष्टदेशादौ त्रि०

**कौनख्य** न० कुनखिनोभावः ष्यञ् टिलोपः। कुत्सितनखरूपे रोगभेदे तच्च सुवर्णस्तेयमहापातकजचिह्नम् "सुवर्णचौरः कौनख्यम्" मनूक्तेः। [ निष्टसादौ

**कौन्तायनि** त्रि० कुन्ती+चतुरर्थ्यां कर्णा० फिञ्। कुन्ती-

**कौन्तिक** कुन्तः प्रहरणमस्य ठक्। कुन्तास्त्रेण युद्धकारके अमरः। [पधौ अमरः

**कौन्ती** स्त्री कुन्तिषु देशेषु भवा अण् ङीप्। भक्षगन्धिन्यो-

**कौन्तेय** पु० कुन्त्या अपत्यम् ढक्। १युधिष्ठिरादिषु त्रिषु। "कौन्तेय ! प्रतिजानीहि न मे कर्म्मफले स्पृहा" गीता २अर्जुनवृक्षे राजनि० तस्य तत्तुल्यनामत्वात्तथात्वम्।

**कौप** त्रि० कूपस्येदम् अण्। कूपसम्बन्धिनि जलादौ "क्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु" सुश्रुते तद्गुणा उक्ताः। "वसन्ते कौपं प्रास्रवणं वा पौष्णे एवम्" सुश्रुतोक्तकाले तस्य सेव्यता। स्त्रियां ङीप्।

**कौपीन** न० कूपे पतनमर्हति खञ् अकार्य्ये नि०। १अकार्य्ये २पापे ३गुह्यप्रदेशे अमरः ४चीरे त्रिका० ५मेखलाबद्धे वस्त्रखण्डे (कप्नी) मेदि० तत्कारणेन कूपे पतनात् तस्य तथात्वम्। अकार्य्यं यदाच्छादयत्यात् ६पुरुषलिङ्गे तद्वत्त्वि०। तदावरकतया वस्त्रखण्डस्य कौपीनत्वम्। "कौपीनवन्तः खलु भाग्यवन्तः" पुरा० "कौपीनाच्छादनं यावत्तावदिच्छेच्च

चीवरम्" भा० आ० ८१अ० । "अवज्ञातस्तकौपीनाः सुहृदः सव्यजिष्णवः" भा०अनु०४६अ० । [रूपकोषः ।

**कौपोदकी** स्त्री कौमोदकी पृषो० । विष्णुगदायां हि-

**कौमार** पु० अपूर्वपतिकां कुमारीमुपपन्नः पतिः "कौमारापूर्ववचने" पा० नि० । अपूर्वपतिकायाः कुमार्याः १वोढरि । कुमारस्य भावः "प्राणभृज्जातिवयोवचनत्वात् अञ् । "जातः कुं पृथिवीं पश्चात् मारयेत् स कुमारकः । इति प्रधानतो विद्धि कौमारं प्राग्भवावदतः"" इत्युक्तायधिके "कौमारं पञ्चमावधि" इत्युक्ते २वयोवस्थाभेदे न० । "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा" गीता । "पिता रक्षति कौमारे भर्त्ता रक्षति यौवने" मनुः । कुमार एव स्वार्थे अण् । ३कुमारे शब्दचिन्ता० । कुमारस्य सनत्कुमारस्येदम् अण् । ४सर्गभेदे पु० स च सर्गः सनत्कुमारादिसृष्ट्यनपूर्वकत्वात् तन्नामकः । "कौमार आर्षः प्राजापत्योमानव इत्यादि सर्गनामानि" श्रीधरः । "स एव प्रथमं देवः कौमारं सर्गमाश्रितः । चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्" भाग० १,३,७, "वैकारिकस्तु यः प्रोक्तः "कौमारस्तूभयात्मकः" भाग० ३,१०,२०,५, ५कुमारसम्बन्धिनि त्रि० "तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः" भा० व० ८५अ०

**कौमारायण** पुंस्त्री० कुमारस्य गोत्रापत्यं नड़ा० फक् । कुमारनामकर्षिगोत्रापत्ये । [ कानीने

**कौमारिकेय** पुंस्त्री० कुमारिकाया अपत्यं शुभ्रा० ढक् ।

**कौमारी** स्त्री अपत्नीकं कुमारं पतिमुपपन्ना स्त्री "कौमारापूर्ववचने" पा०नि०ङीप् । १अगृहीतदारान्तरस्य पत्युः १भार्य्यायाम् । कुमारस्येयमण् ङीप् । २कुमार सम्बन्धि-चेष्टादौ "कौमारीं दर्शयंश्चेष्टाम्" भाग०२,२,२८, कुमारस्य कार्त्तिकेयस्येयम् अण् ङीप् । ३कार्त्तिकेयशक्तौ । "कौमारी शक्तिहस्ता च मयूरवरवाहना । योद्धुमभ्याययौ क्रुद्धं रक्तबीजं महासुरम्" कौमारीशक्ति निर्भिन्नाः केचिन्नेशुर्महासुराः" देवीमाहात्म्यम्

**कौमुद** पु०"कौ मोदन्ते जनायस्मिन् कौमुदस्तेन कीर्त्तितः" इत्युक्तलक्षणे १कार्त्तिकमासे । "एतैरन्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम् । शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुयुः । कौमुदं तु विशेषेण शुक्लपक्षं नराधिप ! । वर्ज्जयेत् सर्वमांसानि धर्म्मोऽत्र विधीयते" म०त०भार०

**कौमुदी** स्त्री कुमुदस्येवं प्रकाशकत्वात् प्रिया अण् ङीप् । १ज्योत्स्नायाम् अमरः । "शशिना सह याति कौमुदी" कुमा० । तद्वत्प्रकाशिकायाम् "तमसां लोकस्य च नेत्रकौमुदी" कुमा० कौमुदस्येयम् अण् ङीप् । "कुमुदेन मही यस्मात् मुद हर्षे० ततो हयम् । धातुश्नैर्यमेवैव तेन सा कौमुदी स्मृता" इत्युक्तायां २कार्त्तिकपौर्णमास्यां "कौ मोदन्ते जनायस्यां नानाभावैः परस्परम् । हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता" इत्युक्तायाम् ३आश्विन पौर्णमास्याम् "आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि कौमुदी सा समाख्याता कार्य्या लोकविभूतये" ति० त० लैङ्गोक्तेः । ४दीपोत्सवतिथौ दीपोत्सवतिथिं प्रक्रम्य भविष्योत्तरे "कौ मोदन्ते जनायस्यां तेन सा कौमुदी मता" "सखीजनोद्वीक्षणकौमुदीमुखम्" रघुः कौमुदी दीपोत्सवतिथिः"इति मल्लि०"५उत्सवे धरणिः" ६कार्त्तिकोत्सवे त्रिका० । स्वार्थे क । स्वल्पे कौमुदिका ज्योत्स्नायाम् । संज्ञायां कन् । ७नायकाभेदे शब्दरत्ना० कुमुद+चतुरर्थ्यां कुमुदा० ठक् । कौमुदिक कुमुदसन्निकृष्टदेशादौ त्रि०

**कौमुदीचार** पुंन० कौमुद्या ज्योत्स्नाया चारः प्रायश्चमत्कारे । आश्विनपौर्णमास्याम् त्रिका०

**कौमुदीपति** पु० ६त० । चन्द्रे हारा०कौमुदीनायादयोऽप्यत्र

**कौमुदीवृक्ष** पु० कौमुद्याः प्रकाशिकायाः दीपशिखाया इव वृक्ष इवाधारः । दीपवृक्षे (पिलशुज) हारा०

**कौमोदकी** स्त्री कोः पृथिव्याः पालकत्वात् मोदकः कुमोदको विष्णुः तस्येयम् अण् । विष्णुगदायाम् अमरः "कौमोदकी मोदयति स्म चेतः"माघः । "दैत्येन्द्रादिवीर्य्यस्य गदा तस्यापरे करे । निक्षिप्ता कुमुदाख्येन नाम्ना कौमुदकीति सा" हरि० ८२अ०

**कौमोदी** स्त्री कुं मोदयति अच् कुमोदः विष्णुस्तस्येयमण् ङीप् । विष्णुगदायाम् शब्दरत्ना०

**कौम्भकारि** पुंस्त्री० कुम्भकारस्यापत्यं शिल्पित्वात् पक्षे इञ् । कुम्भकारापत्ये स्त्रियां वा ङीप् । पक्षे अञ् । कौम्भकार्य्य तत्रार्थे ।

**कौम्भायन** त्रि० कुम्भस्य सन्निकृष्टदेशादि पक्षा० फक् । कुम्भसन्निकृष्टदेशादौ [ष्टदेशादौ

**कौम्भायनि** त्रि० कुम्भ+चतुरर्थ्यां कर्णा०फिञ् । तत्सन्निक-

**कौम्भेयक** त्रि० कुम्भ्यां जातादि कत्र्या० ढकञ् । कुम्भीजातादौ [ष्टदेशादौ

**कौम्भ्र** त्रि० कुम्भ+चतुरर्थ्यां सङ्काशा० ण्य । कुम्भसन्नि-

**कौरयाण** पु० कुरयाणस्य (शत्रुं प्रति कृतयानस्य)अयम् अण् वेदे पृषो० । शत्रुं प्रति कृतयानस्य सम्बन्धिनि तत्पुत्रादौ

"पाकस्य मा कौरयाचः" ऋ० ८।१।२१ मन्त्रार्थे तथार्थोक्तेः

**कौरव** पुंस्त्री० कुरोरपत्यादि उत्सा० अञ् तद्देशस्य रा जा अण् तेषु भवो वा अण्। १कुरुवंश्ये "तस्यान्ववायः सुमहान् यस्य नाम्ना स्म कौरवाः। कुरोस्तु पुत्राश्चत्वारः" हरिवं ३२अ०। २तद्देशनृपे पु० ३कुरुसम्बन्धिनि ४तद्देशभवे च त्रि०। स्त्रियां ङीप्। "द्रुपदः कौरवान् दृष्ट्वा प्राधावत समन्ततः। शरजालेन महता मोहयन् कौरवीं चमूम्" भा० आ० १३८अ० "क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः" मेघदूतम्।

**कौरवक** त्रि० कुरौ तद्वंशे जातादि "विभाषा कुरुयुगन्धराभ्याम्" पा० वा वुञ्। १कुरुवंशोद्भवे। कुरवकस्येदमण्। २कुरवकसम्बन्धिनि

**कौरवायणि** पुंस्त्री कुरोरपत्यम् तिका० फिञ्। कुरुवंश्ये

**कौरवेय** पुंस्त्री कुरोरपत्यं बा० ढक्। कुरुवंश्ये। "यथा हि कौरवेयाणां वयं ते चैव पुत्रक!" भा० आ० १४२अ०। "निमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत!" भा० व० ८अ०।

**कौरव्य** पुंस्त्री० कुरोरपत्यम् कुर्वादि० ण्य। १कुरुवंश्ये। "कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलम्" वेणीसं०। तस्यापत्यं तिका० फिञ्। कौरव्यायणि कुरुकुलोत्पन्ने ब्राह्मणादापत्ये पुंस्त्री कुरूणां राजा ण्य। २कौरव्य कुरुदेशराजे। स्त्रियां ङीप् कौरवी स्त्री। यञन्तत्वात् यून्यपत्ये फिञो लुक्। कौरव्यः पिता पुत्रश्च सि० कौ०।

**कौरुकत्य** पुंस्त्री कुरुकतस्यर्षेरपत्यम् गर्गा० यञ्। कुरुकतस्यर्षेरपत्ये युवापत्ये फिञ्। कौरुकत्यायनि तदीय युवापत्ये पुंस्त्री

**कौरुज(जा)ङ्गल** त्रि० कुरुजङ्गले जातादि अण् उत्तरपदस्य वा वृद्धिः। कुरुजङ्गलभवे

**कौरुपाञ्चाल** त्रि० कुरुपञ्चालदेशे प्रसिद्धः अण् उभयपद वृद्धिः। कुरुषु पञ्चालेषु च प्रसिद्धे। "प्रज्ञातं कौरुपाञ्चालं यद्वत्तुरवत्तम्" शत०ब्रा० १,७,२,८, कौरुपाञ्चालो वा अयं ब्रह्मा ११।४।१।२।

**कौर्प्य** पु० "क्रियतावुरिजितमकुलीरवेथपाथेययूककौर्पाख्याः। तौषिकआकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्" दीपिकोक्ते वृश्चिकराशौ।

**कौर्म** न० कूर्ममधिकृत्य कृतो ग्रन्थः अण्, कूर्मस्येदम् अण् वा। १कूर्मपुराणे २कूर्मसम्बन्धिनि त्रि०।

**कौल** त्रि० कुले भवः शिवा० अण्। सत्कुलभवे १कुलीने गुणि तु कौलेयक इत्येव। कुले कुलाचारे रतः तं वेत्ति वा अण्। २तन्त्रोक्तकुलाचाररते ३तदाचारवेदिनि च। "दिव्यभावरतः कौलः सर्वत्र समदर्शनः" कुलार्णवः। "पशोर्वक्त्राद्ब्रह्मपन्नः पशुरेव न संशयः। वीराद्ब्रह्ममनुर्वीरः कौलाद्ब्रह्मविद्भवेत्" महानीलतन्त्रम्। कुलं कुलाचारमधिकृत्य कृतो ग्रन्थः अण्। ४कुलाचारप्रवर्त्तके ग्रन्थे कौलोपनिषदादौ।

**कौलक** त्रि० कुले भवः सौवीरः धूमा० वुञ्। कुलभवे सौवीरे

**कौलकेय** त्रि० कुले सत्कुले भवः बा० ढक् कुक् च। १सत्कुलोद्भवे। कौलटेय+पृषो०। २असतीपुत्रे पुंस्त्री शब्दरत्ना०।

**कौलटिनेय** पुंस्त्री भिक्षुक्याः सत्या अपत्यम् ढक् इनादेशश्च। सत्या भिक्षुक्याः अपत्ये अमरः स्त्रियां ङीप्

**कौलटेय** पुंस्त्री कुलटायाः सत्याः असत्या वा अपत्यम् ढक्। सत्याः असत्याश्च भिक्षुक्याः अपत्ये अमरः। स्त्रियां ङीप्।

**कौलटेर** पुंस्त्री कुलटायाः असत्या अपत्यम् आचारेण क्षुद्रत्वात् ("क्षुद्राभ्यः") पा० द्रक्। बन्धक्याः अपत्ये अमरः।

**कौलत्थ** त्रि० कुलत्थेन संस्कृतम् अण्। कुलत्थसंस्कृते "पायवैश्चाम्लकौलत्थसुरासौवीरकादिभिः" सुश्रु०।

**कौलत्थीन** न० कुलत्थस्य भवनं क्षेत्रम् खञ्। कुलत्थोत्पत्तियोग्ये क्षेत्रे

**कौलपुत्रक** न० कुलपुत्रस्य भावः मनोज्ञा० वुञ्। कुलपुत्रभावे

**कौलव** पु० ववादिषु तृतीये तिथ्यर्द्धरूपे करणभेदे। करणशब्दे १६६० पृ० विवृतिः

**कौलालक** त्रि० कुलालेन कृतं संज्ञायां वुञ्। कुलालकृते शरावादौ असंज्ञायान्तु अण् कौलाल तत्कृते। तस्येदमण् कौलाल तत्सम्बन्धिनि त्रि० "रथचक्रं वा कौलालचक्रं वा" शत० ब्रा० ११।८।४।१

**कौलिक** त्रि० कुलादागतः ठक्। १कुलपरम्परागते आचारादौ। कुले कुलागमे सिद्धः ठक्। तन्त्रोक्ते २कुलाचारे। कौलं कुलधर्मं प्रवर्त्तयति ठक्। ३कुलधर्मप्रवर्त्तके शिवे। शब्दमा०। ४पाषण्डे त्रिका०। कुलं तदाचारः प्रयोजनमस्य ठक्। ५कौले ब्रह्मविदि "शक्तः कौलिकः" श्रुतिः

**कौलितर** पु० कुलितरस्यापत्यम् ऋष्यण्। शम्बरासुरे "उत दासं कौलितरं बृहतः पर्वतादधि। अवाहन्निन्द्र शम्बरम्" ऋ० ४।३०।१४ कुलितरनाम्नोऽपत्यं शम्बरमसुरम्" भा०

**कौलिशायनि** त्रि० कुलिश+चतुरर्थ्यां कर्णा० फिञ्। कुलिश सन्निकृष्टदेशादौ

**कौलिशिक** त्रि० कुलिश+अङ्गुल्या० इवार्थे ठक्। कुलिशसदृशे

**कौलीन** त्रि० कौ पृथिव्यां लीनः ७त० अलुक् स०। १भूमिलग्ने। कुलादागतः खञ्। २कुलक्रमागते "सद्भिः इयमर्यादां कौलीनां नातिवर्त्तते" रामा० अ० ८१ अ०। ली-भावे क्त कौ लीनं लयो यस्य तत्, कुलीनं भूमिलग्नमर्हति अण् वा। भूमिलग्नतासाधने ३अपवादे "कौलीनमात्माश्रयमाचचक्षे" "कौलीनभीतेन गृहान्निरस्ता" रघुः "मा कौलीनाद्दसितनयने! मय्यविश्वासिनी भूः" मेघः अपवादे हि भूमिलग्नस्येव लोकोऽभवतीति तस्य तथात्वम्। ४गुह्ये ५जन्ये (युद्धे) ६कुकार्ये ७पशुसर्पाणां युद्धे च न० मेदि०। तेषां भूमिलग्नताभावनत्वात्तथात्वम्।

**कौलीरा** स्त्री कुलीरः तत्क्रुङ्गाकारोऽस्त्यस्याः अच्। कर्कटशृङ्ग्याम् (काँकडाशिङ्गा) राजनि०

**कौलेय** त्रि० कुले+भवः ना० ढक्। सत्कुलोत्पन्ने भरतः

**कौलेयक** पु० कुले भवः श्वा ढकञ्। १कुलागते कुक्कुरे। अमरः २सत्कुलीने मेदि०।

**कौलेशभैरवी** स्त्री त्रिपुराभैरवीभेदे। "सम्पत्प्रदाभैरवीशत् विद्धि कौलेशभैरवीम्। हसाद्याः सैव देवेशि! त्रिषु बीजेषु पार्वति!" ज्ञानार्णवः। "त्रिकूटे हसाद्याश्चेत् तदा कौलेशभैरवी भवति" तन्त्रसारः

**कौल्माषिक** त्रि० कुल्माषे साधु ठञ्। कुल्मापसाधने

**कौल्माषीण** न० कुल्माषाणां भवनं क्षेत्रम् खञ्। कुल्माषधान्योत्पत्तियोग्ये क्षेत्रे

**कौल्य** त्रि० कुले भवः ष्यञ्। सत्कुलीने हिकूपकोषः।

**कौवल** न० कुवलमेव प्रज्ञा० स्वार्थे अण्। कोलिफले हिकूपको०।

**कौविदार्य** त्रि० कोविदार+चतुरर्थ्याम् प्रगद्या० ञ्य। कोविदारसन्निकृष्टदेशादौ।

**कौवेर** त्रि० कुवेरस्येदम्, कुवेरो देवताऽस्य वा अण्। १कुवेरसंवन्धिनि २तद्देवताके च "कौवेरमथ वाव्यञ्च चक्राते वरुणस्य च" देवीमा०। "यानं सस्मार कौवेरम्" रघुः। "कौवेरदिग्भागमपास्य मार्गम्" माघः। स्त्रियां ङीप्। "दिग्विभागे तु कौवेरी दिक् शिवापोऽतिदायिनी" ति०त० पु०। "ततः प्रतस्थे कौवेरीम्" रघुः। ३कुष्ठके (कुड़) न० शब्दरत्ना०। [रिकाया अपत्ये।

**कौवेरिकेय** पुंस्त्री० कुवेरिकाया अपत्यम् शुभ्रा० ढक्। कुवे-

**कौश** न० कुशाः भूम्ना सन्त्यत्र अण्। १कान्यकुब्जदेशे हेमच०। स्वार्थेऽण्। २कुशद्वीपे "शाकं ततः शाल्मलमत्र कौशम्" सि० शि०। कुशशब्दे २१४५पृ० विवृतिः। कुशस्येदं तद्विकारो वा अण्। ३कुशसम्बन्धिनि ४तन्मये पवित्रादौ। "तत्र वासाय शयने कौशे सुखसुवास ह" भा० अनु० १८अ०। स्त्रियां ङीप्। "कौश्यां बृस्यां समासीनम्" भा० अनु० ५४अ०

**कौशल** न० कुशलस्य भावः युवा० अण्। दक्षतायाम् "सौमेव प्रज्ञासनकौशलस्य" भट्टिः। "आन्वीक्षिकी कौशलानाम्" "योगः कर्म्मसु कौशलम्" गीता। "हारहारि हसितं वचनानां कौशलं दृशि विकारविशेषः" माघः।

**कौशलि** पुंस्त्री० कुशलाया अपत्यं बाह्वा० इञ्। कुशलाया अपत्ये स्त्रियां वा ङीप्। यूनि अपत्ये फञ्। कौशलायन तदीययुवापत्ये पुंस्त्री

**कौशलिका** स्त्री कुशलस्य पृच्छा ठक्। १कुशलप्रश्ने। कुशलाय मङ्गलाय दीयते ठक्। २उपायने उपढौकने। त्रिका०। [ढौकने २कुशलप्रश्ने च त्रिका०।

**कौशली** स्त्री कुशलाय दीयते तस्य पृच्छा वा अण्। १उप-

**कौश(स)लेय** स्त्री कौश(स)ल्याया अपत्यं ढक् यलोपः। श्रीरामे दशरथपुत्रे

**कौशल्य** न० कुशलमेव ब्राह्म० ष्यञ्। १कुशले। भावे ब्राह्म० ष्यञ्। २दक्षतायाम्। "दृष्ट्वा कौशल्यमन्योन्यं रथस्येवावर्त्तास्थिरे" भा० व० २४४अ०

**कौश(स)ल्या** स्त्री कोश(स)लदेशे भवा ञ्य। कोश(स)लदेशभवायां श्रीरामधात्रि दशरथपत्नीभेदे। [दयोऽप्यत्र।

**कौश(स)ल्यातनय** पु० ६त०। श्रीतापतौ श्रीरामे तत्सुता-

**कौश(स)ल्यायनि** पु० कौश(स)ल्याया अपत्यम् फिञ्। श्रीरामे त्रिका०। "अयामहेन गच्छामः कौश(स)ल्यायनिवल्लभाम्" भट्टिः। कौश(स)ल्यया पत्या एकता अयमकृतयःशुका।

**कौशाम्ब** त्रि० कुशाम्बेन निर्वृत्तः अण्। १कौशाम्बराजकृते २तत्कृते पुरीभेदे स्त्री ङीप्। "कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम्" रामा०। सा च पुरी गौडदेशान्तर्गतवत्सभूमिगता। "अस्ति वत्स इति ख्यातो देश उपक्रमे" कौशाम्बी नाम तत्रास्ति मध्यभागे महापुरी" कथासरित्सागरः। "अस्ति गौडविषये कौशाम्बी नाम नगरी" हितो०। "निःकौशाम्बिः" सि० कौ०

**कौशाम्बेय** पुंस्त्री कुशाम्बस्य गोत्रापत्यम् शुभ्रा० ढक्। कुशाम्बनृपवंश्ये

**कौशिक** न० कुशिकस्यापत्यं अपत्यम् कुशेन कृतः अध्या० ठञ्। कुशिके तद्वंशे भवः अण् वा। १इन्द्रे २पेचके पुंस्त्री० उभयत्र "अगाद् गत् सोढुमभीरशोचनः सहस्रनेत्र इव

यस्य दर्शनम्। प्रविश्य हैमाद्रिगुहाम्बुद्धान्तरं निनाय विश्वद्रुहमिन कौशिकः" माघः। इन्द्रस्य कुशिकपुत्रत्वप्राप्तिकथा "कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमप्रभम्। लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान्। स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्" हरिवं० १अ०। "कुशिकस्तु तपस्तेपे" इत्युपक्रम्य "अत्युग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः। समर्थः पुत्रजनने स्वमेवांशमथावयत्। पुत्रत्वं कल्पयामास स देवेन्द्रः सुरोत्तमः। स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्" हरिवं० २७अ०। कुशौ तस्माद्वा कौशिकत्वमस्य यथाह तत्रैव "जात बालस्तु भगवानदित्यां स(शक्रः)कुशैर्वृतः। तदा प्रभृति देवेशः कौशिकत्वमुपागतः" हरि० २२७अ०। ३गुग्गुलौ ४व्यालग्राहिणि (सापुड़े) अमरः। ६नकुले ७कोषाध्यक्षे मेदि०। ८कोषकारे शब्दरत्ना० ९शृङ्गाररसे त्रिका० १०मज्जनि हेम० ११अश्वकर्णवृक्षे राजनि०। कुशिकस्य गोत्रापत्यम् विदा० अञ्। १२विश्वामित्रमुनौ स हि कुशिकपुत्रस्य गाधेरपत्यम्। कुशिकशब्दे तन्मूलं दृश्यम्। "अपिबच्च ततः सोममिन्द्रेण सह कौशिकः" भा० आ० १७५अ०। १३पौरववंश्ये नृपभेदे। "पारीक्षितस्य द्वौ पुत्रौ" इत्युपक्रमे "प्रतिष्ठायाश्च द्वौ पुत्रौ पैप्पलादिश्च कौशिकः" हरिव ९८अ०। जरासन्धनृपस्य हंसनामके १४सेनापतिभेदे "स तु (जरासन्धः) सेनापती! राजा चकार भरतर्षभ!। कौशिकं चित्रसेनञ्च तस्मिन् युद्धे उपस्थिते। ययोस्ते नामनी राजन् हंसेति डिम्भकेति च" भा० स० २१अ०। तस्य च कौशिकवंश्यत्वात् तथात्वम्। १५असुरभेदे "स्वरूपः शाम्बदनः करालः कौशिकः शरः" हरिवं० ४२अ०। कुशिकवंशोद्भवत्वात् १६नदीभेदे स्त्री तस्या उत्पत्तिकथा रामा० आ० ३४अ० "कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन!। पूर्वजा भगिनी चापि मम राघव! सुव्रता। नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता। सशरीरा गता स्वर्गं भर्त्तारमनुवर्त्तिनी। कौशिकी परमोदारा प्रवृत्ता च महानदी। दिव्यपुण्योदका रम्या हिमवन्तमुपाश्रिता। लोकस्य हितकार्य्यार्थं प्रवृत्ता भगिनी मम। ततोऽहं हिमवत्पार्श्वे वसामि निरतः सुखम्। भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन!। सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता। पतिव्रता महाभागा कौशिकी सरितां वरा"

"तत्र मासं वसेद्वीर! कौशिक्यां भरतर्षभ!। अश्वमेधस्य यत् पुण्यं तन्मासेनाधिगच्छति" भा०व०८४अ०। "कौशिकस्याश्रमं गच्छेत् सर्वपापप्रमोचनम्। कौशिकीं तत्र गच्छेत महापापप्रणाशिनीम्। राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः" तत्रैवाध्याये। "इयञ्च नदी हिमवतः निःसृता चम्पानगरसन्निकृष्टे उत्तरपारे गङ्गायां सङ्गता। "ततो गच्छेत राजेन्द्र! चम्पकारण्यमुत्तमम्" ततस्तस्यास्तत्सन्निकृष्टत्वम्। १८यशोदाकन्यात्वेनोत्पन्नायां योगमायायाम्। कौशिकेन्द्रेण भगिनीत्वेन कल्पनेन विष्णुना तस्यास्तन्नामकरणात्तथात्वं यथोक्तम् "तत्र त्वां शतदृक् शक्रो मत्प्रदिष्टेन कर्म्मणा। अभिषेक्ष्यति दिव्येन दैवतैः सह योक्ष्यते। तत्रैव त्वां भगिन्यर्थे ग्रहीष्यति स वासवः। कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि" हरिवं०५८अ० योगमायां प्रति विष्णूक्तिः। "आर्य्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी" भा० हरि०५९अ०। पार्वत्याः शरीरकोष(षा)न्निःसृते १९देवीमूर्त्तिभेदे तस्य च मूर्त्त्यन्तरध्यानादीति भेदः तन्मूलं देवीमाहात्म्यवाक्यं तत्र कोषशब्दे दर्शितं माठरे २०वृत्तिभेदे चक्रकारशब्दे लक्षणादिकं दृश्यम् [ तथात्वम्

**कौशिकप्रिय** पु० ६त०। श्रीरामे विश्वामित्रप्रियाचरणात्तस्य

**कौशिकफल** कौशिकं कोषस्थं फलमस्य। नारिकेले शब्दरत्ना०

**कौशिका** स्त्री कोष एव स्वार्थे क ततष्टाप्। पानपात्रे चषके हेम० [ शब्दमाला ३विश्वामित्रपुत्रे च

**कौशिकात्मज** पु० ६त०। १इन्द्रपुत्रे जयन्ते २अर्जुने च

**कौशिकायनि** पु० कुशिकस्यापत्यम् बा० फिञ्। यजुर्वेदवंशब्राह्मणस्थे ऋषिभेदे "कौशिकायनेः कौशिकायनिः" शत० ब्रा० १४।५।५।२१

**कौशिकायुध** न० ६य०। इन्द्रचापे शब्दरत्ना०

**कौशिकाराति** पु०६त०। १काके राजनि० तस्य पेचकारातित्वं च तेन सह नित्यविरोधित्वात्। तत्कथा काकोलूकशब्दे दृश्या कौशिकारिरप्यत्र पु०

**कौशिकिन्** पु० ब० व० कौशिकेन प्रोक्तमधीयते णिनि। विश्वामित्रप्रोक्ताध्यायिषु

**कौशिकीज** पु० कौशिक्या इव कोजोयस्य पृषो० सलोपः। शाखोटवृक्षे (सिंहोड़ा) राजनि०

मनन्तरः" । "ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात् । प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः । श्रीरनन्तरमुत्पन्ना घृतात् पाण्डुरवासिनी । सुरा देवी समुत्पन्ना तुरगः पाण्डुरस्तथा । कौस्तुभस्तु मणिर्दिव्य उत्पन्नो घृतसम्भवः । मरीचिविकचः श्रीमान् नारायण उरोगतः" भा०आ०१८अ० "उच्चैःश्रवाश्चयमणिर्मणिरत्नञ्च कौस्तुभम्" रामा० उक्तेः क्लीवत्वमपि "कौस्तुभाख्यमपांसारं बिभ्राणां बृहतोरसा" "सकौस्तुभं ह्रेपयतीव कृष्णम्" रघुः । २तैलभेदे न० "तैलार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् । आजं वा तदभावे तु साक्षात्तैलं प्रगृह्यते । तैलाभावे ग्रहीतव्यं तैलं जर्त्तिलसम्भवम् । तदभावेऽतसीस्नेहः कौस्तुभः सर्षपोद्भवम् । वृक्षस्नेहोऽथवा ग्राह्यः पूर्वाभावे परःपरः" कर्मप्रदीपं मसानवाक्यम् । कौस्तुभमत्र कौसुम्भमिति पाठस्तु सम्यक् । ३तन्त्रोक्ते मुद्राभेदे "अनामाङ्गुष्ठसंलग्ना दक्षिणस्य कनिष्ठिका । कनिष्ठयान्यया बद्धा तर्ज्जन्या दक्षया तथा । वामानामाञ्च बध्नीयात् दक्षिणाङ्गुष्ठमूलके । अङ्गुष्ठमध्यमे भूयः संयोज्य सरलाः पराः । चतस्रोऽप्यत्र संलग्ना मुद्रा कौस्तुभसंज्ञिका" तन्त्रसारः ।

कौस्तुभवक्षस् पु० कौस्तुभो वक्षसि यस्य । विष्णौ हारा० कौस्तुभहृदयादयोऽप्यत्र पु० । एवं कौस्तुभलक्षणादयोऽप्यत्र ।

क्नथ वधे वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट् घटादि । क्नथयति-ते क्नथति अचिक्नथत्-त अक्नथीत्-अक्नाथीत् । क्नथयां-बभूव आस चकार-चक्नथ-चक्नाथ ।

क्नस दीप्तौ कौटिल्ये च दिवा० पर० अक० सेट् । क्नस्यति अक्नसीत्-अक्नासीत् चक्नास । घटा० क्नसयति-ते । अचिक्नसत् उदित् क्नसित्वा-क्नस्त्वा ।

क्नस दीप्तौ वा० चु० उभ० पक्षे भ्वा० अक० सेट् घटादि क्नसयति-ते । क्नसति । अचिक्नसत्-त अक्नसीत्-अक्नासीत् क्नसयां बभूव आस चकार चक्ने चक्नास उदित् क्नसित्वा-क्नस्त्वा । "ध्यु कृ तौ क्नस कुसि कि च भासने कुस इत्यपि" वोपदेवव्याख्याने "परोऽनुबन्धः पूर्वासमिस्याक्यस्य ग्रहातृ" इति तदर्थक्नसामित्य भ्रान्त्या दुर्गादासेन क्नस इदित्त्वमुक्तम् तच्चिन्त्यम् । पा० धातुपाठे चुरादिषु "कृषिवि कुसि टति क्नसी आदिना क्नसेरेवाप्युक्तेः दिवादिषु च क्नसु ह्वरणदीप्त्योरित्युक्तेः घटादौ च जनीजृष् क्नस रञ्ज इत पाठात् इदित् तस्य तोरदर्शनात् । अतः परानुबन्धत्वे तो सर्वस्य प्राप्तिः ... वा चुरादित्वम् अन्यथा कुर्वीयत् क्नसीरेय मूलकृत् पठेत् । न च तथाऽपाठि अनवस्थ नेदित्त्वम् ।

क्नूय दुर्गन्धे आर्द्रीभावे शब्दे च भ्वा० आत्म० अक० सेट् । क्नूयते अक्नूयिष्ट चुक्नूये । णिचि क्नोपयति ते । अस्य चेलार्थककर्म्मण्युपपदे णमुल् चेलक्नोपम् वस्त्रक्नोपम् । "भूमि गाढपरिरम्भिणि वस्त्रक्नोपमभ्यवृषे मदनेन" माघः । 'वस्त्रं क्नोपयित्वा परिषिच्येत्यर्थः' मल्लि० । अभि+अतिव्याप्तया आर्द्रीभावकरणे प्रतीभावकरणे च सक० "आपो वै सर्वमन्नं ताभिरेवैनमभिक्नूयमिवाद्न्ति" शत० ब्रा० १४।२।१।१४। यान्तत्वात् नास्तीत्थं नासीयुच् किन्तु त्वं । क्नूयिता इत्येव । [रीत् चक्मार ।

क्मर कौटिल्ये भ्वा० पर० अक० सेट् । क्मरति अक्मा(क्म)-

क्य त्रि० कः प्रजापतिस्तस्मै हितः यत् । प्रजापतिहिते । "चत्वारि क्यानि क्यानीति प्रश्ने "एतान्येव चत्वारि क्यानि क्यानि" शत० ब्रा० १०।२।४।२४। भा०तद्यार्थतोक्ता

क्याम्बू स्त्री कं प्रजापतिमम्बूयत ऊङ् । दूर्वाभेदे "क्याम्बूरवरोहतु पाकदूर्वा व्यल्कशा" ऋग्०१८।३।६।

क्रंश प्रकाशने भ्वा० सक० सेट् क्रंशति अक्रंशीत् चक्रंश । "क्रंशतेर्यां प्रकाशयतिकर्म्मणः । निरुक्तकारः २।२५।

क्रकच पु० क्र इति कषति शब्दायते कच-शब्दे अच् । १दन्त्यलाङ्गले(?) उक्ते मेदि० । २दारुदारणास्त्रे करपत्रे (करात) पु० न० अमरः । ज्योतिषोक्ते ३योगभेदे च । तल्लक्षणञ्च "षष्ठ्यादितिथयो मन्दात् विलोमं क्रकचः स्मृतः" इति "यथा शनौ षष्ठी, शुक्रे सप्तमी, गुरावष्टमी, बुधे नवमी, भौमे दशमी, सोमे एकादशी, रवौ द्वादशी, एते योगाः क्रकचाख्या ज्ञेयाः पीयू०धा० यदाह नारदः "त्रयोदश स्युर्मिलने संख्ययोस्तिथिवारयोः" क्रकचो नाम योगोऽयं मङ्गलेष्वतिगर्हितः" [क्रकचच्छदादयोऽप्यत्र

क्रकचच्छद पु० क्रकच इव छदो यस्य । केतकीवृक्षे त्रिका०

क्रकचपत्र पु० क्रकच इव पत्रमस्य । १शाकवृक्षभेदे राजनि० २केतकीवृक्षे च ।

क्रकचपाद्(द) पु० क्रकचमिव पादो यस्य वा अन्त्यलोपः । कृकलासे हारा० [वृक्षभेदे । त्रिका० ।

क्रकचपृष्ठी स्त्री क्रकच इव पृष्ठं यस्याः ङीप् । (कइ) मत्स्य-

क्रकचव्यवहार पु० लीलावत्युक्ते क्रकचच्छेद्यवस्तुनोवेतनज्ञानार्थे तत्फलज्ञापके गणितभेदे यथा "क्रकचव्यवहारे करणसूत्रं वृत्तम् । पिण्डयोगदलमग्रमूलयोर्दैर्घ्यसङ्गुणितमङ्गुलात्मकम् । दारुदारणपथैः

समाहतं षट्स्वरैर्विहृतं करात्मकम् । उदाहरणम् । मूले नखा(२०)ङ्गुलमितोऽथ नृपा(१६)ङ्गुलोऽग्रे पिण्डः शताङ्गुलमितं किल यस्य दैर्घ्यम् । तद्दारुदारणपथेषु चतुर्षु किं स्यात् हस्तात्मकं वद सखे ! गणितं द्रुतं मे । (तदाकारदर्शनाचित्रम्)




न्यासः

पिण्डयोगश्ह्रदलं । १८ । दैर्घ्येण १०० सङ्गुणितं १८०० । दारुदारणपथैश्चतुर्भिर्गुणितं ७२०० । षट्स्वरेषु ५७६ विहृतं जातं करात्मकं गणितं २५/२ । क्रकचान्तरे करणसूत्रं वार्द्धवृत्तम् । छिद्यते तु यदि तिर्य्यगुक्तवत्पिण्डविस्तृतिहतेः फलं तदा । इष्टिकाचितिदृषच्चितिखातक्राकचव्यवहृतौ खलु मूल्यम् । कर्म्मकारजनसम्प्रतिपत्त्या तन्मृदुत्वकठिनत्ववशेन । उदाहरणम् । यद्विस्तृतिर्द्दन्त ३२ मिताङ्गुलानि पिण्डस्तथा षोडश यत्र काष्ठे । छेदेषु तिर्य्यङ्नवसु प्रचक्ष्व किं स्यात् फलं तत्र करात्मकं मे ॥

न्यासः विस्तारः ३२ पिण्डः ।१६। पिण्डविस्तृतिहतिः (तदाकारचित्रम् ।)




५१२ । दारुदारणमार्गैर्नवभिर्हता ४६०८ । षट्स्वरेषु ५७६ विहृता जातं फलं हस्ताः । ८ ।"

क्राकचा स्त्री क्रकचस्तदाकारोऽस्त्यस्याः अर्श० अच् टाप् । केतकीवृक्षे रत्नमा० ।

क्राकण पु० क्र इति कणति शब्दायते कण–अच् । (कयार) पक्षिभेदे अमरः स्त्रियां जातित्वात् ङीप् ।

क्राकर पु० क्र इति शब्दं कर्त्तुं शीलमस्य ताच्छील्ये ट ।

क्रकणे (कयार) १पक्षिभेदे अमरः स्त्रियां ङीष् । २करीरवृक्षे ३करपत्राख्ये च पु० ४दोने लि० हेमच० "धारयित्वा तु पत्रोर्णं क्रकरत्वं नियच्छति" भा० अनु० १११अ० । "चकोरकलविङ्कमयूरक्रकरेत्याद्युपक्रमे "विष्करालघवः शीतमधुराः कषाया दोषशमनाश्च" इति सामान्यत उक्त्वा "वातपित्तहरा हृद्या मेधाग्निबलवर्द्धनाः । लघवः क्रकराः हृद्यास्तथा चैवोपचक्रकाः" सुश्रु० तन्मांसगुणा उक्ताः ।

क्रतु पु० कृ-कतु । १यूपसहिते, सोमसाध्ये यज्ञे, २संकल्पे, ब्रह्मणोमानसे पुत्रे ३ऋषिभेदे, ४विश्वदेवभेदे, ५इन्द्रियेषु च । ६विष्णौ तस्य सर्व्वयज्ञमयत्वेन सयूपयज्ञरूपत्वमपीष्टं यथाह "यज्ञइज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः" विष्णु स० । "सर्व्वयज्ञस्वरूपत्वात् यज्ञः यूपसहितोयज्ञः क्रतुरिति" भाष्यम् । तेन क्रतुशब्दस्य यूपसहितयज्ञबोधकता । अतएव तत्प्रयोगे यूपविधेयाः शतपथब्राह्मणादौ उक्ताः । तत्र सोमसाध्ययागाश्च त्रय क्रतवः "त्रीन् क्रतून्न्याहाग्नेयक्रतुश्चाग्निम्" इत्यादौ "इत्यग्नेयः क्रतुः अग्नोषद्यः" "यथाग्निः" आश्व०श्रौ० ४।११।८।१४।१।१५।२। सूत्रेषु दर्शिताः । अन्येऽपि क्रतवोवेदेषु दर्शितास्तत एव वगन्तव्याः । संकल्पश्च कामनाधीनः चित्तवृत्तिभेदः यथोक्तम् "कामः क्रतुः कर्म्म जन्मान्येषां क्रमोभवेत् । पुंसोया विषयापेक्षा स काम इति भण्यते । स एव वर्द्धमानस्तु क्रतुत्वं प्रतिपद्यते" । "इच्छेवनिश्चयः कार्य्ये विषये क्रतुरीर्य्यते" इत्युक्ते ७अध्यवसाये च । ८प्रज्ञायां निघ० । ९कर्म्मादिकर्म्मणि च । "पुरुहूत ! क्रत्वा नः शग्धि" ऋ० ४।२१।१०। "क्रत्वा कर्म्मणा स्तुत्यादिरूपेण" भा० । क्रतुनामा ऋषिश्च "ब्रह्मणोमानसाः पुत्रा विदिताः षण्महर्षयः । मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः" भा० आ० ६५अ० उक्तः । "क्रतोरपि क्रियाभार्य्या वालखिल्यानसूयत । ऋषीन् षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा" भाग० ४।१।३८। तद्वंशाद्युक्तम् "सस्रुजे सृष्टिं तद्रूपां स्रष्टुमिच्छन् प्रजापतीन् मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । वसिष्ठञ्च महातेजाः सोऽसृजत् सप्त मानसान्" हरिवं० १अ० । विश्वदेवाश्च तथोदृग यथा "आत्मार्थं चासृजत् पुत्रान् लोककर्त्ता पितामहः । विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः । विश्वेशं प्रथमं नाम महातपसमात्मजम् । सर्व्वाश्रमपदं पुण्यं नाम्ना

श्रुतिभूषणः। आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान्। सत्यधर्म्ममयः श्रीमान् क्रमविक्रमसत्कृतः। प्रायश्चित्तमहाघोणः पशुजानुर्मखाकृतिः। उद्गात्रन्त्रो होमलिङ्गो बीजौषधिमहाफलः। वाय्वन्तरात्मा सत्रास्थिविकृतः सोमशोणितः। वेदिस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान्। प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरन्वितः। दक्षिणाहृदयो योगी महासत्रमयो महान्। उपाकर्म्मौष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः। नानाछन्दोगतिपथो गुह्योपनिषदासनः। छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः। भूत्वा यज्ञवराहोऽसौ ब्रागधः प.वियष्ठ ह:"।

"रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव! यदध्वरात्मकम्। छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम्। स्रुक्तुण्ड आसीत् स्रुव ईश! नासयोरिडो दरे चमसाः कर्णरन्ध्रे। प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणन्ते भगवन्नग्निहोत्रम्। दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्र!। जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते। सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव! धातवः!। सत्राणि सर्वाणि शरीरसन्धयस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः"। भाग० ३।१३अ०।

"यज्ञात्मतां प्रपञ्चयन्तः स्तुवन्ति रूपमित्यादि चतुर्भिः छन्दांसि गायत्र्यादीनि यज्ञाङ्गभूतछन्दआद्यनुवादेन भगवदवयवता विधीयते बर्हिःशब्दे दीर्घस्तत्र आर्षः इषि चतुर्षु चातुर्होत्रं होत्रादिचतुष्टयं कर्म्म। स्रुक् जुहूः। तुण्डे मुखाग्रे। स्रुवो नासिकयोः। इडा भक्षणपात्रं चमसा ग्रहाश्च सोमपात्राणि। प्राशित्रं ब्रह्मभागपात्रं ग्रस्यतेऽनेनेति ग्रसनं मुखान्तर्वर्त्ति छिद्रं चर्वणं भक्षणम्। दीक्षा दीक्षणीयेष्टिः। अनुजन्म वारं वारम् अभिव्याप्तिः। उपसदस्तिस्र इष्टयः शिरोधरं ग्रीवा। प्रायणीया दीक्षानन्तरेष्टिः उदयनीया समाप्तीष्टिः ते यत्र दंष्ट्रे यस्य। प्रवर्ग्यो महावीरः प्रत्युपसदः पूर्व्वं क्रियते। सभ्यो होमरहितोऽग्निः आवसथ्यः औपासनाग्निः ततो द्वन्द्वैक्यं तव क्रतुरूपस्य शीर्षकं शिरः। चितयः इष्टकाचयनानि पञ्च असवः प्राणाः। प्रातःसवनादीनि अवस्थितिरासनं बाल्याद्यवस्था वा। अग्निष्टोमोऽत्यग्निष्टोमः उक्थः षोडशी वाजपेयोऽतिरात्रः आप्तोर्यामः इति सप्त संस्थाविभेदाः सप्त त्वङ्मांसादिधातवः। सत्राणि द्वादशाहादीनि बहुयागसङ्घातरूपाणि, अशोमा—यज्ञाः ससोमाः क्रतवस्तद्रूपस्त्वं इष्टिर्यजनं अनुष्ठानञ्च तदेव बन्धनं यस्य सः" श्रीधरः। [प्राधान्यात् तथात्वम्।

क्रतुपशु पु० क्रतोरङ्गं पशुः। अश्वे हारा० तस्य अश्वमेधे

क्रतुप्रा पु० क्रतून् कर्म्माणि प्राति प्रा-पूर्त्तौ क्विप्। कर्म्मपूरके "मरुद्भिर्ऋग्मियैः क्रतुप्राः" ऋ० ४।२९।२। "क्रतुप्राः कर्म्मणां पूरकः" भा०।

क्रतुभुज् पु० क्रतुं क्रतुदेयं हविर्भुङ्क्ते भुज—क्विप्। देवे क्रतुदेयद्रव्यत्यागोद्देश्यत्वात् यागचेतनत्वेऽपि तद्भोगित्वं बोध्यम् चेतनत्वे तु तेषां मनुष्यादीनामिव भोगो नास्ति किन्तु दृष्टिमात्रेण यथाह "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति" छा० उ०।

क्रतुराज् पु० क्रतुषु राजते राज—क्विप्। १अश्वमेधे यज्ञे तस्य सर्व्वयज्ञानां श्रेष्ठत्वात् तथात्वम्। "यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः" मनुः २राजसूये च शब्दचि०

क्रतुविक्रयिन् त्रि० क्रतुं तत्फलं विक्रीणाति वि+क्री-णिनि। स्वकीयक्रतुफलस्य अन्यदीयत्वख्यापनेन ततो धनग्राहके। "पितुनाप्ततिनोऽपि क्रतुविक्रयिणस्तथा" मनुः। [चाप्सरसौ" यजु० १५।१५।

क्रतुस्थला स्त्री अप्सरोभेदे "पुञ्जिकस्थला च क्रतुस्थला

क्रतुस्पृश् त्रि० क्रतुमिन्द्रियं स्पृशति क्विन्। इन्द्रियस्पर्शिनि "अपघ्नन् हृदिस्पृक् क्रतुस्पृक्" आश्व० श्रौ० ५।१०,५

क्रतूत्तम पु० क्रतुषूत्तमः। राजसूययज्ञे त्रिका०।

क्रत्वर्थ पु० क्रतवेऽयम् अर्थेन सह नित्यस० विशेष्यलिङ्गता च, क्रतुरर्थोऽस्य वा। क्रतूपकारके। तल्लक्षणादिकञ्च जै० सू० भाष्ययोर्दर्शितं यथा

"अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" सू०। "तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिः शेषविनियोगलक्षणमुक्तम्। इह इदानीं क्रत्वर्थपुरुषार्थौ जिज्ञास्येते, —कः क्रत्वर्थः? कः पुरुषार्थः? इति, यापि प्रयोजकाप्रयोजकफलविध्यर्थवादाङ्गप्रधानचिन्ता, सापि क्रत्वर्थपुरुषार्थजिज्ञासैव। कथम्?। अङ्गं क्रत्वर्थः, प्रधानं पुरुषार्थः, फलविधिः पुरुषार्थः, अर्थवादः क्रत्वर्थः, प्रयोजकः कश्चित् पुरुषार्थो, ऽप्रयोजकः क्रत्वर्थः। तस्मात् "क्रत्वर्थपुरुषार्थयोर्जिज्ञासा"—इति सूत्रितम्। नन्व अथातःशब्दौ प्रथमे एवाध्याये प्रथमसूत्रे वर्णितौ। अथेति प्रकृतं शेषविनियोगलक्षणमपेक्ष्यते। अतः—इति क्रत्वर्थपुरुषार्थजिज्ञासाविशेषं प्रकुरुते। क्रतवे यः, क

प्रोक्षणादावपि। अयं मुख्यक्रमः अनेन क्रमेण यद्यङ्गान्यनुष्ठीयन्ते तदाङ्गानां नियता प्रधानप्रत्यासत्तिरनुगृहीता भवति एवं च अङ्गप्रधानवीर्य्यादनुष्ठानमेव व्यवधानं भवति इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथमाङ्गं क्रियमाणं प्रधानेनात्यन्तं व्यवहितं स्यात्।

अथ प्रवृत्तिक्रम उच्यते यत्र बहूनि हवींषि भवन्ति समानदैवतानि यथा वाजपेये पशवः तत्र प्रोक्षणादयः संनिपातिनः प्रतिपश्वावर्त्तनीयाः। तेषां चावृत्तिरेकस्य पशोः कार्त्स्न्येन कृत्वा परस्यापि तथैव क्रियन्त इत्येवम्। किं तर्हि? सर्व्वेषामुपाकरणं यतः कुतश्चित् पशोरारभ्य कृत्वा ततः सर्व्वेषां नियोजनमित्युक्तम्। तत्र प्रथमे पदार्थे उपाकरणे अनियम एव यतः कुतश्चित् पशोरारभ्य कर्त्तव्यः। द्वितीयस्तु पदार्थो नियोजनरूपः किं प्रथमो यत आरब्धः तत एवारम्भणीयः? उत तत्राप्यनियम एवेति? तत्र क्रमनियमकारणानां श्रुत्यर्थपाठानामभावादनियमे प्राप्ते उच्यते प्रवृत्त्यैव नियमः। प्रथमः पदार्थो येन क्रमेण कृतः स एव क्रम उत्तरेष्वपि नियोजनादिषु नियम्यते। कुतः? पदार्थैः सह प्रधानं कर्त्तव्यमिति वचनात् सर्व्वे पदार्थाः प्रधानकालान्न विप्रकृष्टव्याः कथं? पदार्थैः सह प्रधानस्य वचनम् यावता "दर्शपूर्णमासाभ्यां यजेत प्राजापत्यैश्चरन्त" इत्यादिषु प्रधानमात्रं श्रूयते उच्यते, समीहितं भावयेद्यागेनेत्ययमिति हि यजेतेत्यस्यार्थः। तत्र यस्यामेव वेलायां स्वर्गो भावने कर्त्तृत्वं प्रतिपद्यते तस्मिन् क्षणे करणेतिकर्त्तव्यते अपि व्याप्रियेते। अयमर्थः नात्र प्रधानं कर्त्तव्यं श्रूयते किन्तु प्रधानेन स्वर्गः कार्य्य इति करणविभक्तिनिर्द्दिष्टयागेनेष्टं कार्य्यमस्मिन्काले कुर्य्यादिति तेन स्वकार्य्यं सेतिकर्त्तव्यताकेन कर्त्तुं शक्यते नान्यथा। तस्मात्त्रितयस्य फलकरणेतिकर्त्तव्यत्वस्य युगपद्यजेतेत्यनेन कर्त्तव्यतोच्यते। ततोऽन्यथा करणेतिकर्त्तव्यताकत्वमेव न स्यात् न हि पश्चाद्भावि करणं भवति। तथा भविष्यति भाव्ये भूते च करणे व्यवधानेन दोषः न हि विनष्टं करणं भवतीति। तथा करणेतिकर्त्तव्यतयोरपि मिथो विप्रकर्षे अयमेव दोषः। न हि विनष्टमनागतं वानुग्राहकं भवति। तेन यद्वस्तुस्थ्यामेकक्षणतैषां त्रयाणाम्। ततः प्रधाने सेतिकर्त्तव्यताके एकस्मिन् क्षणे सह कर्त्तव्ये प्राप्ते सति एकः कर्त्ता बहूनि प्रधानानि इतिकर्त्तव्यतां वा असमर्थः कर्त्तुं, यौगपद्येनेत्यवश्यम्भावी क्रियाणामपि विप्रकर्षः। ईदृशेनापि विप्रकर्षेण सहैव पदार्थाः कृता भवन्ति। प्रयोगवचनो हि यावतः पदार्थाननुष्ठापयति तावद्भिरवर्जनीयतया यावान् कालो व्याप्यते तावानेकः कालः तावति च काले सर्वेषां कालो विधीयते न त्वेकस्मिन् क्षणे अशक्यार्थविधिप्रसङ्गात्। तेन प्रत्यासत्तिरेतेषां साहित्यम् नैकक्षणवर्त्तित्वम्। यद्येवम् प्रयोगवचनेनैव क्रमस्य सिद्धत्वात् श्रुत्यादिभिः किं क्रियते? अनियतक्रमेणानुष्ठानं प्राप्नोतीति क्रमनियमे तेषां व्यापारः। यस्मात् योगविधिर्नैकक्षणवर्त्तित्वं विधत्ते प्रत्यासत्तिमात्रम्। तस्मात् प्रधानं चिकीर्षितमनागतं कृतं वा तेषां प्रधानार्थानामनुष्ठापकम्। करिष्यमाणेन कृतेन वा प्रधानेन प्रत्यासत्तिमात्रमङ्गानां तत्साहित्यम् नैकक्षणवर्त्तित्वम्। तत्रान्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम् स्विष्टकृदादीनां तु कृतम्। तेनैवमवश्यम्भाविनि विप्रकर्षे केचित्पदार्थाः क्षणव्यवहिताः प्रधानेनापेक्ष्यन्ते केचिद्द्वाभ्यां क्षणाभ्यां व्यवहिताः केचिद्बहुभिरिति। एवं वाजपेयपशुष्वपि अन्वाधानादि प्रागुपाकरणात् साधारणं सर्वपशूनां सह अनुष्ठितम्। उपाकरणादयोऽपि संनिपत्योपकारकास्तन्त्रेणाविभवादावर्त्तयितव्या अपि साहित्येनैव पशुभिरनुभवितव्याः। यदैकस्योपाकरणम् तदैवेतरेषामपि कुतः? सहचोदितत्वात्पशूनां साङ्गानाम्। तत्रैवं सहानुभवितव्ये सति यस्य पशोः प्रथममुपाकरणं क्रियते तस्य प्राकृतेन पाठेन यद्यपि द्वितीयः पदार्थो नियोजनरूपः स्थाप्यते तथापि सहवचनादेव एकविंशतिक्षणव्यवहितः द्वितीयं पदार्थमाकाङ्क्षति। द्वितीयस्तु पशुर्विंशत्योपाकरणक्षणैर्व्यवहितस्तथैकेन प्रथमस्य पशोर्नियोजनक्षणेन च व्यवहितं स्वीयं द्वितीयं पदार्थमाकाङ्क्षति। एवं तृतीयादयोऽपि पशवः सजातीयविजातीयव्यवहितानात्मीयान् पदार्थानपेक्षन्ते। अन्त्यस्तु विजातीयैः पूर्व्वोपाकृतानामेकविंशतेः पशूनां नियोजनक्षणैर्व्यवहितमेव द्वितीयं पदार्थमपेक्षते। तदेवं संनिपत्योपकारकाणामालोच्य ईदृशी एकविंशतिक्षणव्यवधानापेक्षा प्रधानानां भवति। तत्र यावद्भिर्न्यूनैर्व्यवहितः शक्यः पदार्थः कर्त्तुं तावद्भिर्व्यवधानमगत्यावश्यं कर्त्तव्यम्, ततोऽप्यधिकैस्तु न व्यवधातव्यम्। यद्येकं पदार्थमेकस्य कृत्वा द्वितीयोऽपि पदार्थस्तस्यैव क्रियते ततः सहवचनं नोपपद्येत। एवं सर्वत्र तृतीयादिष्वपि पदार्थेषु योज्यम्। प्रथमपदार्थक्रम एव द्वितीयादिष्वपि समाश्रयितव्यः इतरथा केषां चन व-

द्रव्यधर्मैरपि चर्योर्व्यवहितानि स्युः। न च तदनुक्रम। न चैवं केषाञ्चिद्धर्मैर्व्यवधानं गुणो भविष्यतीति वाच्यम् यथाधिकैर्व्यवधानेऽनुष्ठानम् एवं न्यूनैरपि व्यवधाने अनुष्ठानमेव। तस्मादेकविंशतेः पशूनां साहित्यसम्पत्तये पर्यग्निकरणाभिप्रायं क्रमः पदार्थानां मिथ एकविंशतिसंख्यानामकोऽपेक्षितः। स न्यूनैरधिकैर्वा व्यवधाने बाध्येत। अतः सर्वेषां तुल्यप्रयासत्वसिद्धये प्रथमपदार्थक्रम एव द्वितीयादिष्वप्यनुसरणीय इति सिद्धम्। प्रधानाङ्गानां मिथः प्रवृत्तिर्नियमकारणम्, मुख्यक्रमे तु अङ्गानां प्रधानप्रत्यासत्तिरिति विशेषः। मुख्यक्रमप्रवृत्तिक्रमयोर्विरोधे च मुख्यक्रमो बलीयान्। तद्यथा दर्शपूर्णमासयोः सांनाय्यधर्माः शाखाच्छेदनादयः पूर्वं प्रवर्त्तन्ते पश्चादाग्नेयधर्माः, प्रदानं त्वाग्नेयस्य प्रथमम् पश्चात् सांनाय्यस्य ततः स्विष्टकृदवदानं प्रयाजशेषाभिघारणं प्राशित्रावदानं वेदाङ्गावदानादिकं च किं प्रवृत्तिक्रमात् सांनाय्यस्य पूर्वं भवति? उत मुख्यक्रमादाग्नेयस्येति? संदेहादनियमे प्राप्ते मुख्यक्रमो बलीयानित्युच्यते। अस्मिन् हि आग्नेयभागे अवदीयमाने प्रथमपदार्थाः प्रधानादिप्रत्यासन्ने आस्ये सर्वे संनिकृष्टा भवन्ति प्रवृत्तिक्रमे तु बहूनां विप्रकर्षः। एवं तु कण्डूप्रवृत्त्यां बलीयसा पाठक्रमेण मुख्यक्रमो बाध्यते प्रयाजादिषु पाठक्रमाभावात् प्रवृत्तिक्रमो मुख्यक्रमेण बाध्यते। अथ स्थानक्रम उच्यते। साद्यस्के "सह पशूनालभेते"ति(प्र०२२.२.२८,)श्रूयते साहित्यं च सवनीयस्य स्थाने। तत्र किमुपाकरणादौ अनियमः? उत यथाग्नीषोमीयस्य प्रथममुपाकरणम्? अथवा सवनीयस्येति?। तत्र नियमकारणाभावादनियमे प्राप्ते प्रकृतिवदग्नीषोमीयस्य प्राथम्ये प्राप्ते उच्यते सवनीयस्यैव प्रथममुपाकरणम्। अग्नीषोमप्रणयनानन्तरमग्नीषोमीयस्योपस्थानम्। स तेनोपस्थितोऽपि सहालम्भवचनेन तत्स्थानादुत्कृष्टत्वादननुष्ठितो ऽत्र तु न तस्य किंचिदुपस्थापकमस्ति। सवनीयस्तु स्वस्थानादप्रचलितः सन्नाश्विनग्रहणादुपस्थितत्वात्तदनन्तरमुपाक्रियते। ततः साहित्यवचनादितरोपाकरणम्। अतः सवनीयस्यैव प्राथम्यम्। इतरयोस्तु कथं क्रमः? अनियम एव, तयोरुपस्थाने विशेषाभावात्। अथवा प्रकृतिदृष्टं पौर्वापर्यमस्ति ताभ्यामनुपकृतत्वमित्यग्नीषोमीयमुपाकृत्यानूबन्ध्योपाकरणमिति। तदेवं श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिसंज्ञानि षट् प्रमाणानि क्रमनियमकारीण्युक्तानि

तेषां परस्परविरोधे च पूर्वं-पूर्वं बलवत् उत्तरमुत्तरं च दुर्बलमिति। तदुक्तम् "श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिभिः। एकाङ्गानामङ्गीनानां नियमः कर्मणां क्रमः। विरोधे पारदौर्बल्यमेतेषामपि पूर्ववदिति" भा० (पूर्ववत् श्रुतिलिङ्गादिवत्)

क्रमस्य विनियोगसाधनता जै० सू० भाष्ययोर्दर्शिता यथा "क्रमश्च देशसामान्यात्" ३।३।१२ सू०

"अथ किमेतावन्त्येव विनियोगकारणानि?। न,—इत्युच्यते। किं च क्रमश्च देशसामान्यात्, क्रमवतामानुपूर्व्येणोपदिश्यमानानां यस्य पर्याये यं धर्ममामनन्ति तस्य तं प्रति आकाङ्क्षा अनुमीयते, तस्यामाकाङ्क्षायामेकवाक्यभावः, तस्मात् ततो विनियोगः—इति। किमिहोदाहरणम्? किं च प्रयोजनम्?। आनुपूर्व्यवतां यागानामनुमन्त्रणेष्वाम्नातेषु उपांशुयाजस्य क्रमे "दब्धिर्नामासी"ति समाम्नातः, तस्य आकाङ्क्षातत्त्वात् तेन एकवाक्यतां यात्वा तत्र एव विनियोगमर्हति—इति, तथा च ऐन्द्राग्नं कर्म पित्र्यातसज्जातस्य अस्ति आम्नातः, तस्य याज्यानुवाक्यायुगलमप्याम्नायते ऐन्द्राग्नम्, "इन्द्राग्नी रोचनादिवः प्रवर्षणिभ्यः"—इत्येकम्, अपरं "इन्द्राग्नी नवतिं पुरः श्नथद्गतम्"—इति। तत्र लिङ्गाद्विनियोगे सिद्धे विशेषविनियोगो भवति, पूर्वं युगलं पूर्वस्य ऐन्द्राग्नस्य, उत्तरमुत्तरस्य—इति, एतत् उदाहरणम् प्रयोजनञ्च" भा०

क्रमप्रकरणयोरेकत्र समवाये प्रकरणं बलीयः। क्रमसमाख्ययोस्तु क्रमो बलीयान् "श्रुति-लिङ्ग-वाक्य प्रकरण स्थान समाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" सू०। "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया सा० कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या" पार्थसारथिमिश्रैर्विनियोगसाधकानां श्रुत्यादीनां लक्षणोक्त्या स्थानपदस्य क्रमवाचकतावगतेः। विवृतमेतत् तत्त्वबोधिन्यां यथा

"योगबलं प्रसिद्धावयवार्थ—समाख्या यौगार्थेन प्रवृत्तं पदम्। यथा हौत्रमाध्वर्यवमौद्गात्रमिति। दर्शपौर्णमासादिषु याज्यायाजकपाठादयो धर्मा ऋग्वेदोक्ता होतृसंज्ञकाः, दोहननिर्वापादयो यजुर्वेदोक्ता, आध्वर्यवसंज्ञकाः, स्तोत्रपाठादयः सामवेदोक्ता औद्गात्रसंज्ञकाः पदार्था उक्ताः। तत्रास्यैते धर्मा इति नियामकाभावात् केनचित् सर्वेषां सर्वकरणप्रसक्तौ होतृ-

रिदं हौत्रमिति प्रकृतिप्रत्ययरूपावयवशक्तिलभ्यार्थयोगरूढरूपसमाख्यया हौत्रादिकर्त्तव्यत्वं प्रतीयते । एवं, हौत्रं जुहोति औद्गात्रं जुहोतीत्यादौ" होत्रादेर्होमकर्त्तृत्वं प्रतीयते। होता ऋग्वेदी अध्वर्युर्यजुर्वेदी उद्गाता सामवेदी "अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमादिति" कोषात् । न च तत्तद्भावे शक्तिः प्रमाणाभावात् अतएवोक्तं भट्टपादैः "पाकन्तु पचिरेवाह कर्त्तारं प्रत्ययोऽष्टकः । पाकयुक्तः पुनः कर्त्ता वाच्यो नान्यस्य कस्यचित्" । पाकयुक्तः पाकविशिष्टः" ।

शबरभाष्ये तदा० यथा "अथ प्रकरणस्य क्रमस्य च विरोधे किमुदाहरणम् ! । राजसूयप्रकरणेऽभिषेचनीयक्रमे शौनःशेपाख्यानादि आम्नातं, यदि प्रकरणं बलवत् सर्वेषां, तदङ्गम्, यदि क्रमः, अभिषेचनीयस्यैव । किं तावत्प्राप्तम्?—तुल्यबले एते कारणे—इति । कुतः? । न तावत् विशेषमुपलभामहे, नावगच्छाम इदं बलीयः-इति । तस्मात् तुल्यबले एते कारणे—इति । अपि च प्रकरणं वाक्येन बाधितं, तस्मात् बाध्येत क्रमेणापि—इति" । "एवं प्राप्ते ब्रूमः,—प्रकरणं क्रमात् बलीयः । कुतः! । अर्थविप्रकर्षात् । कोऽस्यार्थविप्रकर्षः ! । प्रकरणवतः आकाङ्क्षत्वात् तत्सन्निधानाम्नातेन परिपूर्णेनाप्यवकल्प्येत एकवाक्यत्वम्, न तु क्रमवतः, क्रमेण आम्नातेन, अनेकस्याम्नायमानस्य सन्निधिविशेषाम्नानमात्रं हि क्रमः तत्र सन्निधिविशेषाम्नानसामर्थ्यात् क्रमवतः सन्निधावाम्नातस्यानुपलभ्यमानमेव आकाङ्क्षावचनमस्ति—इत्यवगन्तव्यम् । प्रकरणे तु प्रकरणवतः प्रत्यक्षम्, न च प्रकरणवता क्रमवता च यौगपद्येन एकवाक्यता सम्भवत्याम्नातस्य—इति विरोधः । तत्र प्रकरणे प्रत्यक्षं साकाङ्क्षत्वं, क्रमस्यानुमानिको बाधितुमर्हति । साकाङ्क्षत्वात् एकवाक्यत्वम्, एकवाक्यत्वाद्विभागसामर्थ्यं, सामर्थ्यात् श्रुत्यर्थः—इति सन्निकृष्टः प्रकरणस्य श्रुत्यर्थो, विप्रकृष्टः क्रमस्य । तस्मात् क्रमप्रकरणयोः प्रकरणं बलवत्तरम्—इति" ।

"अथ यदुक्तं,—वाक्येनापि हि तत् बाधितम्, अतोऽन्येनापि तत् बाधितव्यम्—इति, नैतत्, बाधितस्यानुग्रहो न्याय्यो, न बाधितं बाधितव्यम्—इति" ।

"अथ क्रमसमाख्ययोर्विरोधे किमुदाहरणम् ! किं बलवत्तरम् !—इति । पौरोडाशिकम्—इति समाख्याते काण्डे सान्नाय्यक्रमे "शुन्धध्वं दैव्याय कर्मणे"—इति शुन्धनार्थो मन्त्रः समाम्नातः । तत्र सन्दिह्यते, किं समाख्यानस्य बलीयस्त्वात् पुरोडाशपात्राणां शुन्धने विनियोक्तव्यः,(मन्त्रः) उत क्रमस्य बलीयस्त्वात् सान्नाय्यपात्राणाम् ?—इति । किं तावत्प्राप्तम् ?—तुल्यबले एते कारणे स्याताम् । कुतः? अविशेषात्, यदि वा समाख्यैव बलीयसी, बाधितो हि क्रमः प्रकरणेनापि इति" । "एवं प्राप्ते ब्रूमः,—क्रमो बलीयान् । कुतः? । अर्थविप्रकर्षात् । कः पुनरत्रार्थविप्रकर्षः ? । निर्ज्ञाते प्रकरणेन केनापि सहैकवाक्यत्वे यत् सन्निधावाम्नायते, तत्र आकाङ्क्षा परिकल्प्यते, नैकवाक्यतेत्यवगम्यते, लौकिकश्च शब्दः समाख्या, न च, लोक एवंविधेषु अर्थेषु प्रमाणम् । तस्मात् क्रमो बलीयान्"

विवृतमेतत् तत्त्वबोधिन्यां यथा

"स्थानप्रकरणयोर्यथा । पश्विष्टिसोमयागा बहवः परस्परनिरपेक्षाश्चापि प्रत्येकं फलवन्तः समप्राधान्याः । ते च मिलिता राजसूयः । तन्मध्येऽभिषेचनीयाख्यः कश्चित् सोमयागविशेषः तत्सन्निधौ अक्षदेवनादिकं श्रूयते । यथा "अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेपमाख्यापयतीति" जिनाति जयति । शौनःशेपं बह्वृच ब्राह्मणे आम्नातं शुनःशेपकर्तृकविषयकमुपाख्यानमिति माधवाचार्य्यः । एतेन शुनःशेपस्य नेश्वरितं पुराणप्रसिद्धमित्युदीच्यव्याख्यानं निरस्तं, वैदिके कर्म्मणि वैदिकोपाख्यानस्यैवोचितत्वाच्च "शौनःशेपं जुहोतीति" पाठकल्पनमपि कल्पनमेव माधवाचार्य्यादिभिर्वेदमाख्यापयतीत्यस्य लिखितत्वात् । तत्र च सन्निधिरूपस्थानबलात् अक्षदेवनादेरभिषेचनीयाङ्गत्वं लभ्यते प्रकरणात्तु सर्व्वयागात्मकराजसूयस्य इति कर्त्तव्यताकाङ्क्षया अक्षदेवनादयो विहिता इति। प्रकरणबलात् राजसूयाङ्गत्वमक्षदेवनादेः राजसूयश्च बहुयागात्मक इति तत्र सर्व्वयागाङ्गत्वं, सर्व्वाङ्गत्वञ्च राजसूयघटकीभूतसर्व्वयागजन्यफलापूर्व्वोपकारद्वारा सर्व्वोपकारकत्वम् । तत्र चाकाङ्क्षायाः क्लृप्तत्वाद्वाक्यलिङ्गश्रुतिरूपनियतप्रमाणं अयमानम् अभिषेचनीयस्याक्षदेवनादेराकाङ्क्षा नास्ति तस्य ज्योतिष्टोमविकृतित्वेन प्रकृतिवद्विकृतिन्यायात् अतिदिष्टैः प्राकृतैः ज्योतिष्टोमाङ्गैरेवेतिकर्त्तव्यताकाङ्क्षानिवृत्तेरिति सन्निधिपाठबलात् आकाङ्क्षामुत्थाप्य तद्द्वारा वाक्यलिङ्गश्रुतीनां कल्पनीयतया चतुर्भिर्व्यवहितत्वात्स्थानमिति प्रकरणाद्दुर्बलत्वेन स्थानं दुर्बलमिति । तस्मात्

समनन्तरमेवोत्पन्ने । अत्रोपपत्तिः । समायां भूमौ वृत्तं भगणकलाङ्कितं तिर्यगूर्ध्वाधरव्यासमितरेखाभ्यां चतुर्भागं कार्यं तत्रोर्द्ध्वरेखाचक्रपरिधिप्रदेशाद्भवत्र समविभागं विगणय्य तदग्रयोर्बद्धं सूत्रं वृत्ते द्विगुणविभागमितस्य पूर्णचापस्य सम्पूर्णज्या । अत्र गणिते ऊर्द्ध्वरेखातोऽर्द्धज्याया एव प्रयोजनात् तदर्द्धचापस्यज्यार्द्धमर्द्धज्या । एवं वृत्तचतुर्थांशे ऊर्द्ध्वरेखातोऽभीष्टांशानां चापार्द्धकार्द्धानामर्द्धज्या अभीष्टा गण्याः । तत्र भगवता स्वेच्छया वृत्तचतुर्थांशे त्रिराशिमिते चतुर्विंशत्याः कल्पितास्तज्ज्यानां तु वृत्ते चक्रकलानामङ्कितत्वात् तत्परिधिव्यासार्द्धं त्रिराशिज्यान्तिमा ३४३८ । यदा भगन्दाग्निमितपरिधौ ३९२७खयाणसूर्यं १२५०मितो व्यासस्तदा चक्रकलापरिधौ क इत्यनुपातेन व्यासानयनम् । यथा चक्रकलाः २१६०० खयाणसूर्यं १२५०गुणाः २७०००००० भगन्दाग्नि ३९२७ भक्ता व्यासः ६८७६ एतदर्द्धमन्तिमा ज्या ३४३८ । अथ वृत्ते चापज्ययोर्विवेके तयोस्तुल्यत्वमपि भगवता कोऽपि वृत्तभागः समोऽस्त्यन्यथामलकादौ सम्पाद्यस्थानं न स्यादिति मत्वा तद्भागस्य ज्या तत्तुल्यैवेत्युक्तम् । "वृत्तस्य षण्णवत्यंशो दण्डवद्दृश्यते तु सः" इति शाकल्योक्तेः प्रथमज्या चक्रकलाद्वादशांशरूपैकराशिकलानामष्टमोऽंशस्तत्त्वाश्विमितः २२५ एतन्मितमेव प्रथमचापकं एतदन्तरेणाभीष्टा ज्यास्तु यैतात् । अथ चतुर्विंशतिज्यानां यथोत्तरमुपचयात् तदन्तररूपखण्डानां यथोत्तरमपचयस्य वृत्ते ज्याङ्कनेन प्रत्यक्षत्वात्तत्प्रान्तरखण्डानामन्तरं यथोत्तरमुपचतन्ति द्वाविंशतित्रयोविंशतिचतुर्विंशतिज्यानामन्तरयोरन्तरमिदं परमं खण्डान्तरं सूर्यज्योत्पत्तिप्रकारेणावगतं १५।१६ ।४८ । अथ यदि त्रिज्यभेदं खण्डकान्तरं तदा प्रथमज्यया किमित्य नुपातेन फलप्रमाणयोः फलेनापवर्त्य प्रमाणस्थाने तत्त्वाश्विनोऽनेन भक्तः प्रथमज्या फलं पूर्वद्वितीयखण्डयोरन्तरम् । अनेन पूर्वखण्डं हीनं द्वितीयं खण्डं भवति । तत्र पूर्वखण्डं प्रथमज्यातुल्यमेव । द्वितीयखण्डं प्रथमज्यायां युतं द्वितीयज्या । एवमस्मात्तत्त्वाश्विभागलब्धं द्वितीयतृतीयखण्डकयोरन्तरमनेन द्वितीयखण्डमूनं तृतीयखण्डमित्यनेन द्वितीयज्या युता तृतीयज्या ; एवं चतुर्थाद्याः । तत्र पूर्वमधोऽध्यधिकप्रकर्षणोत्तरत्वाधिकान्तरपातसम्भावनया क्वचित् क्वचिदधोऽधिकाययस्यैकाधिक्येन यद्दृश्यम् इत्युपपन्नं शाक-

ह्वयम्" रङ्गना० । उत्क्रमज्याह्वास्तु ज्याशब्दे वक्ष्यन्ते

**क्रमण** पु० क्रामत्यनेन करणे ल्युट् । १चरणे हेम० । २यदुवंश्ये नृपभेदे "ततश्च क्रमणश्चैव कृष्णाः शूरः पुरञ्जयः" हरिवं० ३८अ० । भावे ल्युट् । ३पादन्यासे न० । "पृष्ठे स्वधर्म्यं क्रमणेषु यत्तम्" भाग० ८,१०,२१. "पदैश्चतुर्भिः क्रमणेऽपि तस्य नः" नैष० । [भेदे ।

**क्रमजटा** स्त्री ऋग्वेदशब्दे १ ११पृ० दर्शिते वेदपाठप्रकार-

**क्रमदण्डक** पु० ऋग्वेदशब्दे १४११पृ०दर्शिते वेदपाठप्रकारभेदे

**क्रमदीश्वर** पु० संक्षिप्तसारव्याकरणकारके विद्वद्भेदे "संक्षिप्तसारमाचष्टे पण्डितः क्रमदीश्वरः" संक्षिप्तसारव्या० ।

**क्रमपद** पु० ऋग्वेदशब्दे १४११पृ० दर्शिते "क्रमपारः क्रमपदः क्रमजटा क्रमदण्डकश्चेति चतुष्पारायणमित्युक्ते वेदपाठप्रकारभेदे ।

**क्रमपार** पु० ऋग्वेदशब्दे १४११पृ० दर्शिते वेदपाठप्रकारभेदे

**क्रमपूरक** पु० क्रमेण पूरयति बीजम् पूरि-ण्वुल् । वकवृक्षे राजनि० तस्य पुष्पस्तने क्रमेण बीजपूरकत्वात्तथात्वम् ।

**क्रमशस्** अव्य० कारकार्थवृत्तेः क्रमात्+वीप्सायां शस् । क्रमं क्रमम्, क्रमेण क्रमेणेत्यादिकेऽर्थे "कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोवराः" मनुः ।

**क्रमसंग्रह** पु० ओलण्यतबोलद्वारकृते दायाधिकारिक्रमज्ञापके ग्रन्थभेदे ।

**क्रमसन्दर्भ** पु० अनुष्ठानक्रमज्ञापके ग्रन्थभेदे ।

**क्रमागत** त्रि० क्रमेणागतः । १कुलादिपरम्परया आगते "तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः" मनुः "स्वस्तन्त्राः स्त्रियः सर्वाः पुत्रदासपरिग्रहाः । अस्वतन्त्रस्तत्र गृही यस्य तस्य क्रमागतमिति" व्यव०त० नारदः । २पित्रादिक्रमेण प्राप्ते च "आगमोऽप्यधिको भोगाद्विना पूर्वक्रमागतात्" स्मृतिः । क्रमायातादयोऽप्यत्र

**क्रमादि** पु० वेत्त्यधीते वेत्त्यर्थे वुन् प्रत्ययप्रकृतिभूते पा० उक्ते शब्दगणभेदे स च गणः "क्रम पद शिक्षा मीमांसा"

**क्रमि** पु० क्रम-इन् । कृमिपदार्थे । द्विरूपको० "आमाटोपापचीश्लेष्मशूलक्रमिविकारिणाम्" सुश्रु०

**क्रमिक** त्रि० क्रमादागतः ठन् । कुलक्रमागते । "आप्तैरनुक्तैः क्रमिकैश्च (कर्मान्ताः) कारिदद्दर्शिताः" भा० स०५अ० । क्रमोविद्यतेऽस्य ठन् । २क्रमवर्त्तिनि । "क्रमिकं यत्ताविदेषमेकार्थेऽप्यर्थबोधकम्" शब्दश० प्र०

**क्रमिकण्टक** न० कृमौ कण्टकमिव तन्नाशकत्वात् । त्रि०क्रमे १चित्राङ्गे (चिता) २उदुम्बरे च मेदि०

**क्रमिघ्न** न० कृमिं हन्ति हन–ट १विडङ्गे रत्नमा० । २कृमिनाशकमात्रे त्रि० स्त्रियां ङीप् ।

**क्रमिज** न० कृमिभ्यो जायते जन–ड १अगुरुचन्दने अमरः २लाक्षायां स्त्री रत्नमाला०.

**क्रमिशत्रु** पु० कृमेः शत्रुरिव । विडङ्गे रत्नमाला

**क्रमु** पु० क्रम उन् । गुवाके हिरूपकोषः

**क्रमुक** पु० क्रम–उन् संज्ञायां कन् । १पट्टिकालोध्रे २गुवाकवृक्षे ३भद्रमुस्तके च अमरः ४भद्रमुस्तके ५कार्पासिकाफले न० मेदि० अयं सालसारादिगणे सुश्रुते उक्तः "सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्ज्जक्रमे "सालसारादिरित्येषः कुष्ठकुष्ठविनाशनः । मेहपाण्डुमयहरः कफमेदोविशोषणः" सुश्रु० तद्गुणा उक्ताः "ध्यास्वादितार्द्रक्रमुकाः समुद्रात्" माघः गौरा० ङीष् । ६गुवाके स्त्री शब्दरत्नावली

**क्रमेतर** त्रि० ५त० । क्रमात् वेदपाठप्रकारभेदात् भिन्ने । ततः उक्था० तद्वेत्त्यधीते वा ठक् । क्रामेतरक तद्वेत्तरि तदध्येतरि च त्रि०

**क्रमेल** पुंस्त्री० क्रामति क्रम–विच् एलति अच् कर्म० । उष्ट्रे स्वार्थे क । तत्रार्थे । उभयत्र जातित्वात् ङीष् ।

**क्रय** पु० क्री–भावे अच् । पणपूरणादिमूल्यदानेन विक्रेतुः स्वत्वापनयनेन स्वत्वापादनव्यापारे (केना) । प्रतिरूपद्रव्यदानेन तथाचरणे तु न क्रयव्यवहारः इत्यतः द्रव्यपदमनुक्त्वा पणपूरणेत्युक्तम् । क्रयस्य स्वत्वहेतुत्वञ्च पूर्व्वस्वामिस्वत्वनाशादेव भवति सति तत्स्वत्वे सजातीयस्वत्वं प्रति सजातीयस्वत्वस्य प्रतिबन्धकत्वेन क्रेतुः स्वत्वोत्पत्त्यभावात् अतो मूल्यदानेन तत्स्वत्वापाकरणम् । तस्य च स्वत्वहेतुत्वम् "सप्त वित्तागमा धर्म्याः दायो लाभः क्रयो जयः । विभागः संप्रयोगश्च सत्प्रतिग्रह एव च" स्मृतेः "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" गौतमस्मरणाच्च । क्रयादिरूपागमसहितभोगस्यैव स्वत्वे प्रामाण्यं वीरमि० व्यवस्थापितं यथा "सप्त स्वायरागमोपायान् प्रदर्श्य तत्र भुक्तेः प्रामाण्यमाह बृहस्पतिः । विद्यया क्रयबन्धेन शौर्य्यभार्य्यान्वयागतम् । सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा मतम् । विद्यालब्धक्रयाधाने रिक्थशौर्य्यप्रवेदनात् । प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात्" ।

विद्यया प्रतिग्रहादिकमयोजकया, स्वत्वोपायःक्रयःप्रसिद्धः । बन्धो बन्धकं सोपाधिकस्वत्वहेतुर्नञ्चायधौ चात्यन्तिकस्वत्वहेतुस्तदप्युक्तरत्र विवेचनीयम् । क्रयबन्धेनेति समाहारद्वन्द्व एकत्वम् । शौर्य्यागतं युद्धार्जितम् । भार्य्यागतं विवाहकाले प्राप्तम् । अन्वयागतं पित्रादिक्रमोपात्तम् । अप्रजस्य सपिण्डस्यांशं रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तम् । पित्र्यत्वादिना प्रागुक्तानेव सप्तस्थावरागमोपायाननूद्य तत्र भोगस्य प्रामाण्यं विधीयते । तत्र प्रवेदनं विवाहः । स एव "क्रमागतः शासनिकः क्रयाधानागमान्वितः । एवं विधस्तु यो भोगः स तु सिद्धिमवाप्नुयात् । संविभागक्रयप्राप्तं पितृलब्धञ्च राजतः । स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया । प्राप्तमात्रं येन भुक्तं स्तोकस्यापरिपन्थिनम् । तस्य तत्सिद्धिमाप्नोति हानिश्चोपेक्षया तथा । अध्यासनात् समारभ्य भुक्तिर्य्यस्याविघातिनी । त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत्" ।

मूल्यं दास्यामीति नियमं कृत्वाऽपि पश्चादपि क्रयसिद्धिः यथाह विवादचि० कात्या० "पण्यं गृहीत्वा योमूल्यमदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात्" अत्र विषये लेख्यपत्रकरणमाह बृहस्पतिः "गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् । पत्रं कार्यते यत्तु क्रयलेख्यं तदुच्यते" । तस्यानुशयकालश्च अनुशयशब्दे दर्शितः" । वैदिककर्म्माङ्गपरिक्रयादौ प्रायेण यजमानस्यैवाधिकारः यथाह क्रयाधिकरणे जै०सू०भा०

"स्वामिकर्म परिक्रयः कर्म्मणस्तदर्थत्वात्" ३।८।१ सू० ।

"अस्ति परिक्रयः ज्योतिष्टोमे "द्वादशशतं दक्षिणा" पौर्णमासयोः अन्वाहार्य्यम्" । तत्र सन्देहः किम् अध्वर्युणा परिक्रेतव्या ऋत्विजः, उत स्वामिना ? इति । किं प्राप्तम्? समाख्यानात् अध्वर्युणा, इति प्राप्ते ब्रूमः, 'स्वामिकर्म परिक्रयः' कस्मात् ? कर्म्मणः तदर्थत्वात्, फलकामो हि यजमानः यश्च फलकामः, तेन स्वयं कर्त्तव्यम्, स यदि परिक्रीणीते, ततः स्वयं सर्वं करोति इति गम्यते, अथ न परिक्रीणीते, न सर्व्वं कुर्यात् । तस्मात् स्वामी परिक्रीणीते इति" शबरभाष्यम्

"वचनादितरेषां स्यात्" सू०

"किम् एष एवोत्सर्गः ? न इत्युच्यते, 'वचनात् इतरेषां स्यात्' । यत्र वचनं भवति, तत्र वचनप्रामाण्यात् भवति परिक्रयः, 'य एतामिष्टकाम् उपदध्यात् स त्रीन् वरान् दद्यात्' इति" भा० ।

सोमादिक्रयस्य द्रव्यसाध्यतया सोमं पिता विक्रीतत्वात्

स्वामिना च क्रीतत्वात् द्रव्यस्वामित्वाभावे यज्ञाधिकारित्वं नास्तीत्याशङ्कायां सहपत्न्याऽधिकार इत्येतत् जै० ६। १।१० सूत्रादौ भाष्येण व्यवस्थापितं यथा

"द्रव्यवत्त्वात्तु पुंसां स्यात्, द्रव्यसंयुक्तं, क्रयविक्रया-भ्याम् अद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात्" १०सू०(पू०)

"पुंसां तु स्यात् अधिकारः, द्रव्यवत्त्वात्, द्रव्य-वन्तो हि पुमांसो न स्त्रियः, द्रव्यसंयुक्तं च एतत् कर्म 'व्रीहिभिर्यजेत, यवैर्यजेत'—इत्येवमादि। कथम्? अद्रव्यत्वं स्त्रीणां' 'क्रयविक्रयाभ्यां क्रयविक्रयसंयुक्ता हि स्त्रियः,पित्रा विक्रीयन्ते,भर्त्रा च क्रीयन्ते,विक्रीतत्वाच्च पितृधनानामनीशिन्यः क्रीतत्वाच्च भर्तृधनानाम्। विक्रयो हि श्रूयते, 'शतमधिरथं दुहितृमते दद्यात्, "आर्षे गोमिथुनम्"-इति च। न च, एतत् दृष्टार्थं-सति आनमनेऽदृष्टार्थं भवितुमर्हति। एवं द्रव्यैः समान योगित्वं स्त्रीणाम्"भा०"तथा च कन्यार्थदर्शनम्" ११सू०

'या पत्या क्रीता सती "अथान्यैश्चरति'-इति क्रीततां दर्शयति" भा०

"तादर्थ्यात् कर्मतादर्थ्यम्" १२सू० (आ० नि०) 'आ-ह, यदनया भक्तोपसर्पणेन वा कर्त्तनेन वा धनम् उपा-र्जितं, तेन यक्ष्यते,—इति। उच्यते,—तदप्यस्या न स्वं, यदा हि सा अन्यस्य स्वभूता, तदा यत् तदीयं, तदपि तस्यैव। अपि च, स्वामिनस्तया कर्म कर्त्तव्यं न तं परित्यज्य स्वकर्माऽर्हति कर्तुम्। यत् तया अन्येन प्रका-रेण उपार्ज्यते, तत् पत्युरेव स्वं भवितुमर्हति—इति। एवं च स्मरन्ति, "भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते। यत्ते समधिगच्छन्ति, यस्य ते तस्य तद्धनम्" इति' भा०

."फलोत्साहाविशेषात्तु" १३सू० सि०) तुशब्दः पक्षं व्यावर्त्तयति। न च एतदस्ति,—निर्धना स्त्री—इति, द्र-व्यवती हि सा, फलोत्साहाविशेषात्, स्मृतिप्रामाण्यात् अस्वया तया भवितव्यं फलार्थिन्यापि, श्रुतिविशेषात् फलार्थिन्या यष्टव्यम्, यदि स्मृतिमनुरुध्यमाना परवशा निर्धना च स्यात्, 'यजेत'—इत्युक्ते सति न यजेत, तत्र स्मृत्या श्रुतिर्बाध्येत। न च एतत्—न्याय्यम्। तस्मात् फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णी-यात् यजेत च—इति" भा०

"अर्थेन च समवेतत्वात्" १४सू०

अर्थेन च अस्याः समवेतत्वं भवति, एवं दानकाले संवादः क्रियते,—"धर्म्मे च अर्थे च कामे च न अति-चरितव्यः'—इति। यत्तु उच्यते,-'भार्यादयो निर्धनाः'—इति स्मर्य्यमाणमपि निर्धनत्वम् अन्याय्यमेव, श्रुतिवि-रोधात्। तस्मात् अस्वातन्त्र्यम् अनेन प्रकारेण उच्यते, संव्यवहारप्रसिद्ध्यर्थम्" भा०

"क्रयस्य धर्म्ममात्रत्वम्" १५सू०। (आ०नि०)

यस्तु क्रयः श्रूयते,—धर्म्ममात्रं तु तत्, नासौ क्रयः—इति, क्रयो हि उच्चनीचपण्यपणो भवति। नियतं त्विदं दानं शतमधिरथं, शोभनाम् अशोभनाञ्च कन्यां प्रति। स्मार्त्तं च श्रुतिविरुद्धं विक्रयं नानुमन्यन्ते। तस्मात् अवि-क्रयोऽयम्—इति भा०

"स्वतामपि दर्शयति" १६सू०

'पत्नी वै पारिणाह्यस्य ईष्टे—पत्न्यैव अनुमतं क्रियते। तथा "भवदा पत्नीः संयाजयन्ति, भवदीया हि पत्न्यः भवदाशा एताः परस्त्रीणाम् ऐश्वर्यमवरुन्धते" भा०।

"स्ववतोस्तु वचनादैककर्म्यं स्यात्" १७सू०

स्ववन्तावुभावपि दम्पती—इत्येवं तावत् स्थितम्। तत्र स-न्देहः,—किं पृथक् पत्नी यजेत, पृथक् यजमानः उत-सम्भूय यजेयाताम्!—इति। किं प्राप्तम्?—पृथक्त्वेन। कुतः?। एकवचनस्य विवक्षितत्वात्, उपादेयत्वेन कर्त्ता 'यजेत'—इति श्रूयते तस्मात् एकवचनं विवक्ष्यते,—यथा न द्वौ पुरुषौ सम्भूय यजेयाताम्,तथा अत्रापि द्रष्टव्यम्। एवं प्राप्ते ब्रूमः,—"स्ववतोस्तु वचनात्तयोः सहक्रिया एवं स्मरन्ति,—'धर्म्मे चार्थे च कामे च नातिचरि-तव्यः'—इति, तथा 'सह धर्म्मश्चरितव्यः, सहापत्यम् उत्-पादयितव्यम्'-इत्युच्यते,—स्मृतिवचनेन श्रुतिवचनं युक्तं बाधितुम्'। न—इति ब्रूमः,—इह किञ्चित् कर्म स्त्रीपुं-सकर्तृकमेव, यथा दर्शपूर्णमासौ—ज्योतिष्टोमः—इति, तत्र पत्न्यवेक्षितेन यजमानावेक्षितेन च आज्येन होम उच्यते, तत्र अन्यतराभावे वैगुण्यम्।

"ननु पुंसो यजमानस्य यजमानावेक्षितमाज्यं, स्त्रिया यजमानायाः पत्न्यवेक्षितं भविष्यति'—इति। न—इति आह,—नायम् ईक्षितुः संस्कारः, ईक्षितुः संस्कारो यदि, तदैवं स्यात्,आज्यसंस्कारश्च अयं, गुणभूतौ ईक्षि-तारौ, तत्र अन्यतरापाये नियतं वैगुण्यं, सर्वाङ्गोप संहारी च प्रयोगवचनः। तत्र एतत् स्यात्,—स्त्रीयज-माना पुमांसं परक्रेष्यति आज्यस्य ईक्षितारं, पुमांश्च स्त्रियमन्यामीक्षित्रीम्—इति। तन्न, पत्नीति हि यजमान

स्वामिनी इत्युच्यते, न क्रीता पत्नी—इति सम्बन्धि यज्ञोऽयं यजमानः-इति च स्वामी,क्रीतः। तस्मात् स्त्रीपुंसयोरेकम् एकजातीयकं कर्म—इति।

"तत्र श्रुतिसामर्थ्यात्-'यः-कश्चित्, यया कयाचित् सह सम्भूय यजेत'-इति प्राप्ते इदम् उच्यते,-'यस्तया कश्चित् धर्म्मः कयाचित् सह कर्त्तव्यः, सोऽनया सह—इति, तेन न स्मृतिविरोधः श्रुतेः—इति गम्यते। अथ यदुक्तं,—'एकवचनात् पुंसोऽधिकारः केवलायाश्च स्त्रियाः, 'यजेत'—इत्येकवचनस्य विवक्षितत्वात्—इति, तत् परिहर्त्तव्यम्। इदं तावदयं प्रष्टव्यः—'यजेत'—इत्येकवचने विवक्षिते, षोडशभिर्ऋत्विग्भिः सहयागो भवति-इत्येवम् उपपद्यते, प्रतिकारकं क्रियाभेदः,याजमानानेव पदार्थान् परिक्रयादीन् कुर्वन् 'यजते' इत्युच्यते यजमानः, आध्वर्य्यवानेव कुर्वन् अध्वर्युर्यजति—इत्येवम् उपपद्यते,यथा सम्भरणमेव कुर्वती स्थाली पक्तिं करोति—इत्युच्यते, यस्य च कारकस्य य आत्मीयोव्यापारः, स एकवचने विवक्षिते एकेन कर्त्तव्यो भवति—इति। एवं चेत् यावान् व्यापारो यजमानस्य, स तावान् न सम्भूय कर्त्तव्यः, एकैकेनैको याजमानोऽपरेणापरः। द्वादशे वा शते एकेन षट्पञ्चाशत्, अपरेणापि षट्पञ्चाशत्—इति। इह तु पत्नीव्यापारः अन्य एव, न तत्र पत्नी प्रवर्त्तमाना यजमानस्य एकत्वं विहन्ति,यथा अध्वर्युराध्वर्य्यवेषु प्रवर्त्तमानः। अवश्यं च सह पत्न्या यष्टव्यं, मध्यगं हि इदं दम्पत्योर्धनं तत्र यागोऽवश्यं सह पत्न्या कर्त्तव्यः,इतरथा अन्यतरानिच्छायां त्याग एव न संवर्त्तेत,तथाहि द्वितीयया पत्न्या विना त्यागोनैवावकल्पते, यस्य द्वितीया पत्न्यस्ति, तत्र क्रत्वर्थान् एका कारयिष्यति। कर्तृसंस्कारार्थेषु नैष दोषः, सम्भवन्ति हि तानि सर्वत्र—इति" भा०

"लिङ्गदर्शनाच्च" १८सू०।

"लिङ्गं खल्वपि दृश्यते, 'योक्त्रेण पत्नीं सन्नह्यति मेखलया यजमानं मिथुनत्वाय'—इति। यदि स्त्रीपुंसावेकत्र, योक्त्रस्य मेखलायाश्च विभागो वाक्यात् गम्यते, मिथुनत्वाय च, तदेतत् स्त्रीपुंससाधनके कर्मण्युपपद्यते, न अन्यथा" भा०

'क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते' १९सू०

"स्थितादुत्तरमुच्यते। तुशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति, यदुक्तं स्वामिनी स्त्री—इति, क्रीता हि सा, इष्टार्थत्वात् अभिरूपायतदानस्य,अतो यदस्याः स्वामित्वम् उच्यते, तत् भक्त्या यथा पूर्वकोऽस्माकं यवीवहीनाम् ईष्टे—इति, एवं पत्न्यपि पारिणाह्यस्य ईष्टे—इति" भा०

"फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः" २०सू०

"नैतदस्ति, क्रयो मुख्यः, गौणं स्वामित्वम्-इति, फलार्थिनी हि सा, स्वर्गमादरिष्यते, श्रुत्यनुरोधात् अस्या यागात्, स्ववती श्रुत्यनुरोधात्" भा०

"फलवत्तां च दर्शयति" २१सू०

"सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य धुर्यौ युक्तावभूताम्, संजानानौ विजहताम् अरातीर्दिवि ज्योतिरजरमारभेताम्" इति दम्पत्योः फलं दर्शयति। तस्मात् अप्युभावधिकृतौ-इति सिद्धम्" शवरभाष्यम्।

"शूद्रान्नैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः" स्मृतिः।

क्रयनक्षत्राणि मु० चि० पी० धा० उक्तानि यथा।

"क्रयर्क्षे विक्रयो नेष्टो विक्रयर्क्षे क्रयोऽपि न। पौष्णाम्बुपाश्विनीवातश्रवश्चित्राः क्रये शुभाः" मु०चि०।

"अथ क्रयविक्रयनक्षत्रेषु परस्परनिषेधं यदनु क्रयविक्रयनक्षत्राण्यनुष्टुभाह क्रयर्क्षे इति। क्रयनक्षत्रे विक्रयो न कार्यः, तथा विक्रयर्क्षे क्रयोऽपि न कार्यः, नन्विदमयुक्तं विक्रयोनाम मौल्यं गृहीत्वा वस्तुदानं क्रयोनाम मौल्यं दत्त्वा स्वग्रहणं यदा येन क्रयः कर्त्तव्यः तदान्येन विक्रयोऽपि कर्त्तव्यस्तत्र क्रयविक्रयनक्षत्राणां संज्ञाभेदादुभयविधमुहूर्त्तानुपपत्तिः उच्यते विक्रेता यदा मुहूर्त्तं विक्रयार्थं गृह्णाति तदा क्रयिणोऽशुभं स्यात् यावदिष्टं वस्तु स्वगृहात् पृथक् क्रियते, तत्कर्म विक्रयशब्दवाच्यं यदा तु क्रयिणा क्रयमुहूर्त्तं प्राप्यते तदा विक्रेतृमूल्यद्रव्यं दत्त्वा पृथक् कृतविक्रेतृवस्तु गृह्णाति तत्कर्म क्रयशब्दवाच्यमिति मत्वात्र समाधिः। अथवा क्रयिविक्रेत्रोरन्यतरस्य कदाचिन्मुहूर्त्तसम्बोधयोग्यमनावश्यकत्वे। आवश्यकत्वे तु मुहूर्त्तगवेषणायां कालविलम्बनिष्पन्नतायत्नेन तृतीयेन मुहूर्त्तविचारमनङ्गीकृत्य मत्वस्तुप्राप्त्या वस्तुग्रहणासिद्धिसम्भवात् तदा विक्रेतुरेव मुहूर्त्तविचारः। एवं च क्रेतुरत्यावश्यविक्रेतव्यस्य वस्तुनो यदा ग्रहीता सम्भवेत्तदैव मुहूर्त्तमनालोच्य वस्तुदानमावश्यकम् मुहूर्त्तविचारतः कालविलम्बे तावद्व्यप्राप्त्यनुपपत्तेः। तदा तु क्रयस्य एव मुहूर्त्तविचारः। नन्वेवमपि क्रयविक्रयनक्षत्रयोः पार्थक्येनाभिधानात् तयोः परस्परगतनिषेधो न युज्यते यथा राजदर्शनविहितनक्षत्रेष्वोऽन्यनक्षत्रेषु राजदर्शनं निषिद्धम-

त्यर्थो गम्यते, अत्र "वाक्यं सावधारणं भवतीति" न्यायात् उच्यते। क्रयनक्षत्रे क्रयः कार्य इत्युक्तेः विक्रयस्य तदनन्तरकर्मत्वात् तत्र क्रयस्य निषेधाभावः एवं विक्रयर्क्षेष्वपि क्रयनिषेधाभावः तत्र निषेधे सत्यन्यनक्षत्राणां मध्यमत्वापत्तेः कदाचित् क्रयनक्षत्राणां मध्यमत्वमङ्गीकृत्य विक्रयस्य विहितनक्षत्रानुपलब्धौ तत्र मुहूर्त्तो मध्यमोऽपि स्यादित्यस्तदर्थमपि यावन्नक्षत्रनिषेधः कृतः। क्रयविक्रयनक्षत्रेभ्यो भिन्ननक्षत्रेषु क्रयविक्रयौ मध्यमाविति तु निषेधस्य वाचनिकत्वमुक्तं दीपिकायाम् "यमादित्यकाष्टिकस्वातीपूर्वा नेष्टाः क्रये विक्रयणेऽतिशस्ताः। पौष्णाश्विचित्राम्बुपवातशक्राः शस्ताः क्रये विक्रयणे निषिद्धाः" इति अथ क्रयनक्षत्रमुच्यते। तत्र पौष्णं रेवती वरुणः शततारका अश्विनी वातः स्वाती श्रवणः चित्रा एतानि भानि क्रये शुभानि विक्रये निषिद्धानि च सम्मतिरत्रोक्तैव"।

**क्रयण** न० क्री–भावे ल्युट्। क्रये "वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभीनुपनह्योच्छ्रन् भक्षाय क्रयणप्रभृत्यनुसोमम्" कात्या०श्रौ०१०,६,२०, क्रयणप्रभृति (सोम) क्रयणादारभ्य" कर्कः। क्रयणस्येदम् छ। क्रयणीय क्रयणसम्बन्धिनि। "अपसूत्रमभाजापण्यं क्रयणीयादौ" कात्या० श्रौ० १६,६,२२, आदौ क्रयणीयस्याङ्गः" सं० व्या०।

**क्रयनियम** पु० क्रये नियमः। क्रेतृविक्रेत्रोर्नियमभेदे। स च नियमः "भूयसा वस्नमचरत् कनीयोऽविक्रीतो अकानिषं पुनर्यन्। स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्रवाणम्" ऋ०४,२४,९, भाष्ये दर्शितो यथा— "अत्र ऋग्द्वये संप्रदायविद्भिः पूर्वाचार्यैः केचित् श्लोकाः पठ्यन्ते तएव लिख्यन्ते। "अल्पं यः पणितं कृत्वा मूल्यं पण्येन भूयसा। स क्रेतारं पुनर्गच्छन्नविक्रीतमिदं मया। इति ब्रुवन् कामयते पूर्णमूल्यस्य पूरणम्। स विक्रेता पुनर्मूल्यं भूयसा न प्रपूरयेत्। हीनं न लभते वस्नं यदा विक्रीतवान् पुरा। यथासमयमेव स्यात्तयोर्न पुनरन्यथा। अर्थं विक्रय एवेति समयश्चेत् कृतो भवेत्। अथ सूत्रार्थ एतत् स्याद्वाचार्यैस्तु निर्णयः। इत्येवं समयोऽकारि तदा मूल्यं प्रपूर्यते। तस्मादादौ मया कार्यः समयोऽस्मीति चिन्तयन्। वामदेवो यथोक्तस्य वस्नं स्तोत्रेण भूयसा। विक्रीणन् समयं चक्रे इन्द्रं क इममित्यृचा। अतस्तु ऋच एकार्थौ भूयसा वस्नमित्ययमिति"। अयमर्थः प्रतिपाद्यते कश्चित् भूयसा भूम्ना पण्येन द्रव्येण कनीयोऽल्पतरं वस्नं तद्मूल्यं धनमचरत् प्राप्नोति पुनर्यन् क्रेतारं पुनर्गच्छन् अविक्रीतायमर्थो मया न विक्रीत इति ब्रुवन् न कानिषं मूल्यपूर्तिं कामयते अयमेवोत्तमपुरुषः। स विक्रेता भूयसा धनेन कनीयोऽल्पतरं मूल्यं नारिरेचीत् क्रेतुः सकाशान्न रिक्तीकरोति न लभत इत्यर्थः। दीना असमर्था दक्षाः समर्थाश्च यायं वचनं विप्रदुहन्ति यथोक्तं क्रयकाले तथैव लभन्ते"

"क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः यदा वृत्राणि जंघनदथैनं मे पुनर्ददत्" ऋ० ४,२४,१०,

"मम मदीयमिदं स्वभूतमिन्द्रं धेनुभिः प्रीणयित्रीभिर्दशभिर्दशसंख्याकाभिः स्तुतिभिः कः क्रीणाति क्रयं करोति हे तदानीं क्रेतारो युष्माकं मध्य एवमपि समयः क्रियते यदाऽयमिन्द्रो वृत्राणि त्वदीयान् शत्रून् जंघनत् हन्यात् अथानन्तरमेवैनमिन्द्रं मे मह्यं पुनर्ददत् पुनर्दद्यात्" भा०।

"निश्चित्य वस्तु तन्मूल्यमुभयोः सम्मतौ शिवे!। परस्पराग्राकरणं क्रयसिद्धिस्ततो भवेदिति"। "क्रयसिद्धिरदुष्टानां गुणश्रवणतो भवेत्। विपर्यये तद्गुणानामन्यथा भवति क्रयः" महा० नि० त०

**क्रयलेख्य** न० ६त०। "क्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" बृहस्पत्युक्तलक्षणे क्रयसूचकपत्रे (कवाला)।

**क्रयविक्रय** पु० द्वि०व०। द्वन्द्वः। १क्रये विक्रये च। "आगमं निर्गमस्थानं तथा वृद्धिक्षयावुभौ। विचार्य सर्वपण्यानां कारयेत् क्रयविक्रयौ। पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते। कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः" मनुः। "आगमनियमोपयोगादेः पण्यानामनियतत्वात् अस्थिरार्घाणां पञ्चरात्रे पञ्चरात्रे गते, स्थिरतरार्घाणां पक्षे पक्षे गते वणिजामर्घविदां प्रत्यक्षं नृपतिराप्नुरूपेण व्यवस्थां (मूल्यस्य) कुर्यात्" कुल्लू०। "क्रयविक्रयानुशयश्च विवादः स्वामिपालयोः" मनुः। क्रयसहितो विक्रयः शा० त०। २क्रयसहितविक्रये। "देवदानवगन्धर्वयक्षराक्षसपन्नगाः। नासन् कृतयुगे तात! तदा न क्रयविक्रयः" भा० व० १४९अ०। ३तदुक्ते वाणिज्ये "ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयम्। न कुर्याद्गुरुणा सार्द्धं शिष्यो भूत्वा कथञ्चन" तन्त्रसा०।

**क्रयविक्रयानुशय** पु० क्रये विक्रये चानुशयः पश्चात्तापः। मनूक्ते अष्टादशविवादान्तर्गते विवादभेदे। स च द्विविधः क्रीतानुशयो विक्रीतानुशयश्च। अनुशयशब्दे १८६पृष्ठे तद्विवृतिः दृश्या। अधिकं क्रीतानुशयशब्दे वक्ष्यते।

क्रयविक्रयिक पु० क्रयविक्रयाभ्यां जीवति ठन्। वणिग्जने "वस्नक्रयविक्रयाट् ठन्" पा० क्रयविक्रयग्रहणं व्यस्तसमस्तविषयम् तेन व्यस्तादपि ठन्। क्रयिक विक्रयिक तेन जीविनि त्रि०।

क्रयशीर्ष न० कपिशीर्ष+पृषो०। कपिशीर्षे त्रिका०।

क्रयाक्रयिका क्रयसहितः अक्रयः शाक० स्वार्थे क अत इत्त्वम्। क्रये अक्रये च।

क्रयारोह पु० क्रयस्य क्रयार्थमारोहत्यत्र आ+रुह आधारे घञ् चतुर्थ्यर्थे ६त०। हट्टे (हाट) हारा०।

क्रयिक त्रि० क्रयेण जीवति क्रयात् व्यस्तादपि ठन्। वणिग्जने "पर्य्यायतः क्रयिकक्रीतमगणत्रयपक्वेतित्यादि" माघः क्रय+प्रयोजनमस्य ठन्। २क्रेतरि "धनेन क्रयिको हन्ति खादकश्चोपभोगतः। घातको वधबन्धाभ्यामित्येष त्रिविधो वधः" भा० आनु० ११५अ०

क्रय्य त्रि० क्रयाय क्रेतारः क्रीणीयुरितिबुद्ध्या प्रसारितम् क्री–यत् "क्रय्यस्तदर्थे" पा० नि०। क्रयनिमित्तं हट्टे प्रसारिते द्रव्ये "क्रय्यस्ते सोमो राजा इति क्रय्य इत्याह सोमविक्रयी" शत० ब्रा० ३,३,३,१,

क्रवण त्रि० क्रुङ-शब्दे ल्यु। १स्तुतिकर्त्तरि "अता न श्रांहि क्रवणस्य रेजते" ऋ० ५,४४.६, "क्रवणस्य स्तुतिकर्त्तुः" भा० भावे ल्युट्। २शब्दकरणे न०

क्रविष्णु त्रि० क्रु–बा०इष्णुच्। क्रव्यादे राक्षसादौ "क्रव्यात् क्रविष्णुर्विविनोतु दक्षणम्" ऋ० १,८७.४,

क्रविस् न०क्रम-इसुन्लस्य रः। मांसे क्रव्ये। "यदश्वस्य क्रविषो मक्षिकाश" ऋ०१,१६२.६,१२, "क्रविषः मांसस्य" भा०

क्रव्य न० क्रम-यत् लस्य रः। आममांसे अमरः। "स्फुटगतमपि क्रव्यमव्यग्रमत्ति" मालती०। "क्रव्यादाः प्राणिनां क्रव्यं दुदुहुः स्वकलेवरात्" भाग० ४,१८,२२,। मांसभेदास्तद्गुणाश्च सुश्रुते उक्ता यथा

"अत ऊर्द्धं मांसवर्गानुपदेक्ष्यामः तद्यथा—जलेशया आनूपा ग्राम्याः क्रव्यभुज एकशफा जाङ्गलाश्चेति षण्मांसवर्गास्तेषां वर्गाणामुत्तरोत्तरं प्रधानतमाः। ते पुनर्द्विविधा जाङ्गला आनूपाश्चेति। तत्र जाङ्गलवर्गोऽष्टविधः तद्यथा—जाङ्गला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा विलेशया ग्राम्याश्चेति। तेषां जाङ्गलविष्किरौ प्रधानतमौ तावेणहरिणर्क्ष्यकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करश्चमृगमातृकाप्रभृतयो जाङ्गला मृगाः कषाया मधुरा लघवो वातपित्तहरा-

स्तीक्ष्णा हृद्या वस्तिशोधनाश्च। कषायो मधुरो हृद्यः पित्तासृक्कफरोगहा। संग्राही रोचको बल्यस्तेषामेणो ज्वरापहः। मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः। शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः। एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते। न कृष्णो न च ताम्रश्च कुरङ्गः सोऽभिधीयते। शीतासृक्पित्तशमनी विज्ञेया मृगमातृका। सन्निपातक्षयश्वासकासहिक्काऽरुचिप्रणुत्। लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तकनप्तृकावातीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रकुतित्तिरिकुररायष्टीकयवलकप्रभृतयस्त्वाह्वया विष्किरा लघवः शीतमधुराः कषाया दोषशमनाश्च। संग्राही दीपनश्चैव कषायमधुरो लघुः। लावः कटुर्विपाकश्च सन्निपाते च पूजितः। ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः। तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः। रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः। कफोत्थेषु च रोगेषु मन्दवाते च शस्यते। वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः। लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः। कषायः स्वादुलवणस्त्वच्यः केश्योऽरुचिप्रदः। मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियकाश्यकृत्। स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः। बृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः। वातरोगक्षयवमीविषमज्वरनाशनः। कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्गगोक्ष्वेडकडिण्डिमाणवकशतपत्रकमातृनिन्दकभेदाशिशुकसारिकावल्गुलीगिरिशालट्टालट्टूषकसुगृहीखञ्जरीटहारीतदात्यूहप्रभृतयः प्रतुदाः। कषायमधुरा रूक्षाः फलाहारा मरुत्कराः। पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः। सर्वदोषकरस्तेषां भेदाशी मलदूषकः। कषायस्वादुलवणो गुरुः काणकपोतकः। रक्तपित्तप्रशमनः कषायविशदोऽपि च। विपाके मधुरश्चापि गुरुः पारावतः स्मृतः। कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः। रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः। सिंहव्याघ्रवृकतरक्षुऋक्षद्वीपिमार्जारशृगालमृगेर्वारुकप्रभृतयो गुहाशयाः। मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः। उष्णवीर्य्या हिता नित्यं नेत्रगुह्यविकारिणाम्। काककङ्ककुररचाषभासशशघात्युलूकचिल्लिश्येनगृध्रप्रभृतयः प्रसहाः। एते सिंहादिभिः सर्वे समाना वायसादयः। रसवीर्य्यविपा-

केषु विशेषाच्छोषिषु हिताः। मद्गुमूषिकचटकाचिकाकुलपूतिखादवानरप्रभृतयः पर्णमृगाः। मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिषु हिताः। सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः। श्वाविच्छल्यकगोधाशशकदंष्ट्रगोधाकलोमशकर्णकदलीकर्णप्रियकाऽजगरसर्पमूषिकनकुलमहाबभ्रुप्रभृतयो विलेशयाः। वर्चोमूत्रं संहतं कुर्युरेते वीर्ये चोष्णाः पूर्ववत् स्वादुपाकाः। वातं हन्युः श्लेष्मपित्ते च कुर्युः स्निग्धाः कासश्वासकार्श्यापहाश्च। कषायमधुरस्तेषां शशः पित्तकफापहः। नातिशीतलवीर्यत्वाद्वाते साधारणो मतः। गोधा विपाके मधुरा कषायकटुका स्मृता। वातपित्तप्रशमनी वृंहणी बलवर्द्धिनी। शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः। प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः। दुर्नामानिलदोषघ्नाः कृमिदूषीविषापहाः। चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्द्धनाः। दर्वीकरा दीपकाश्च तेषूष्णाः कटुपाकिनः। मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः। अश्वाश्वतरगोखरोष्ट्रवस्तोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः। ग्राम्या वातहराः सर्वे वृंहणाः कफपित्तलाः। मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः। नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः। छागलस्त्वनभिष्यन्दी तेषां पीनसनाशनः। वृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु। मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः। शोषकासप्रतिश्यायविषमज्वरनाशनम्। श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम्। औरभ्रवत्सलवणं मांसमेकशफोद्भवम्। अल्पाभिष्यन्द्ययं वर्गो जाङ्गलः समुदाहृतः। दूरे जनान्तनिलया दूरे पानीयगोचराः। ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः। सतोयानिलयाः समीपोदकगोचराः। ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते। आनूपवर्गस्तु पञ्चविधः तद्यथा कूलचराः प्लवाः कोशस्थाः पादिनो मत्स्याश्चेति। तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकालपुच्छकोन्द्रन्यङ्कुरण्यमृगप्रभृतयः कूलचराः पशवः। वातपित्तहरा वृष्या मधुरा रसपाकयोः। शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्धनाः। विरूक्षणो लेखनश्च वीर्योष्णः पित्तदूषणः। स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः। गवयस्य तु मांसं हि स्निग्धं मधुरकासजित्। विपाके मधुरं चापि व्यवायस्य तु वर्द्धनम्। स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः। निद्रापुंस्त्वबलस्तन्यवर्द्धनो मांसदार्ढ्यकृत्। रुरुमांसं समधुरं कषायानुरसं स्मृतम्। वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम्। तथा चमरमांसन्तु स्निग्धं मधुरकासजित्। विपाके मधुरं चापि वातपित्तप्रणाशनम्। सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम्। वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम्। स्वेदनं वृंहणं वृष्यं शीतलं तर्पणं गुरु। स्निग्धं श्रमानिलहरं वाराहं बलवर्द्धनम्। कफघ्नं खड्गिपिशितं कषायमनिलापहम्। पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम्। गोकर्णमांसं मधुरं स्निग्धं मृदु कफावहम्। विपाके मधुरञ्चापि रक्तपित्तविनाशनम्। हंससारसक्रौञ्चचक्रवाककुररकादम्बकारण्डवजीवञ्जीवकवकबलाकापुण्डरीकप्लवशरारीमुखनन्दीमुखमद्गूत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्करशायिकाकोनालकाम्बुकुक्कुटिकामेघरावश्वेतवारणप्रभृतयः प्लवाः संघातचारिणः। रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः। सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः। गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः। वृंहणः शुक्रलस्तेषां हंसो मारुतनाशनः। शङ्खशङ्खनखशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः। कूर्मकुम्भीरकर्कटककृष्णकर्कटकशिशुमारप्रभृतयः पादिनः। शङ्खकूर्मादयः स्वादुरसपाका मरुन्नुदः। शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः। कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः। शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा। मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च। तत्र नादेयाः। रोहितपाठीनपाटलाराजीववर्मिगोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयो नादेयाः। नादेया मधुरा मत्स्या गुरवो मारुतापहाः। रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्चसः। कषायानुरसस्तेषां शष्पशैवालभोजनः। रोहितो मारुतहरो नात्यर्थं पित्तकोपनः। पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः। दूषयेद्रक्तपित्तन्तु कुष्ठरोगं करोत्यसौ। मुरलो वृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा। सरस्तडागसम्भूताः स्निग्धाः स्वादुरसाः स्मृताः। महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः स्मृताः। तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालकनन्दिवारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः। सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः। उष्णा वातहरा वृष्या वर्चस्याः श्लेष्मवर्द्धनाः। बलावहा विशेषेण मांसाशित्वात्समुद्रजाः। तेषामप्य-

निजप्रमाणाच्छीघ्रगोचरौ गुरुतरौ । स्निग्धत्वात् स्वादु-पाकत्वात् तथोर्वीपृष्ठा गुरूत्तराः । नादेया गुरवो मध्ये यस्मात् स्रोतश्चारिणः । सरस्तडागजातास्तु विशेषेण शिरोलघु । अदूरगोचरा यस्मात्तस्मादुत्सोदपा-नजाः । किञ्चिन्मुक्त्वा शिरोदेशमल्पत्वं गुरवस्तु ते । अ-धस्तादुरसो येषां मत्स्याः सर्वजलाः स्मृताः । उरोवि-चरणास्तेषां पूर्वमङ्गं लघु स्मृतम् । इत्यानूपो महाभि-ष्यन्दिमांसवर्गो व्याख्यातः । तत्र शुष्कपूतिव्याधितविष-सर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां मां-सान्यभक्ष्याणि यथाहितत्वापन्नापहृतपरिणतत्वात्संपू-र्णवीर्यत्वाद्दोषकराणि भवन्ति । अरोचकं प्रति-श्यायं गुरु शुष्कं प्रकीर्त्तितम् । विषव्याधिहतं मृत्युं बालं छर्दिञ्च कोपयेत् । कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम् । क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम्। एभ्योऽन्यच्चतुष्पादेषु मांसमिति । स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गेषु महाशरीरेभ्योऽल्पशरीरा अल्पशरीरेषु महाश-रीराः प्रधानतमा एकैकजातीयानां महाशरीराः प्र-धानतमाः । स्थानादधिकं मांसस्य गुरुलाघवमुपदे-क्ष्यामः तद्यथा—रक्तादिषु शुक्रान्तेषु धातुषूत्तरो-त्तरेषु गुरुतरास्तथा सक्थिस्कन्धक्रोडशिरःपादकर-कटीपृष्ठचर्मकालेयकयकृदन्त्राणि । शिरःस्कन्धं कटी-पृष्ठं सक्थिनी चात्मपक्षयोः । गुरुपूर्वं विजानीयाद्धात-वस्तु यथोत्तरम् । सर्वस्य प्राणिनो देहे मध्यो गुरुरुदा-हृतः । पूर्वभागो गुरुः पुंसामधोभागस्तु योषिताम् । उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् । पक्षोत्-क्षेपात्समो दिष्टो मध्यभागस्तु पक्षिणाम् । अतीव रूक्षं मांसन्तु विहङ्गानां फलाशिनाम् । बृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् । मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारिणाम् । जलजानूपजा ग्राम्याः क्रव्यादेकश-फास्तथा । प्रसहा विलवासाश्च ये च जाङ्गलसंज्ञिताः । प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् । अल्पाभि-ष्यन्दिनश्चैव यथापूर्वमतोऽन्यथा । प्रमाणाधिकास्तु स्वजातौ चाल्पसारा गुरवश्च । सर्वप्राणिनां सर्वशरीरे-भ्यो ये प्रधानतमा भवन्ति यकृद्देशवर्त्ति तस्मादाददीत प्रधानलाभाभावे मध्यमवयस्कं सद्यस्कमक्लिष्टमुपादेयं मांसमिति । भवति चात्र । वयः शरीरावयवाः स्वभावो धातवः क्रियाः । लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्षिता" ।

क्रव्यघातन पु० क्रव्यस्य क्रव्यार्थं घात्यतेऽसौ हन—हर्टे णिच्—कर्म्मणि ल्युट् चतुर्थ्यर्थे ६त० । १कृष्णसारे मृगे हेम० । क्रव्यार्थं घातयन्ति घानि—ल्यु । मांसार्थघातके २दस्युरूपे जनभेदे "यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति" भाग० ५।२६।१५ तत्र त-च्छब्दोक्तेः "क्रव्येण निमित्तेन मांसार्थम्" श्रीधरः

क्रव्यभुज् पु० क्रव्यं भुङ्क्ते भुज—क्विप् । १क्रव्यादे राक्षसे २क्रव्यादे दस्युरूपे जनभेदे च "सर्वेभ्यः क्रव्यभुग्भ्योऽमांस योऽहितः सर्पिः समधु पुटाश्रवः" सुश्रु० । ३मांसभोक्तृमात्रे त्रि० ।

क्रव्याद् पु० क्रव्यं मांसमत्ति अद—क्विप् । १राक्षसे २मांसाशिनि त्रि० मेदि० "क्रव्याद्गणपरीवारश्चिताग्निरिव जङ्गमः । रघुः "क्रव्यादः श्वभ्रादयः" मल्लि० "क्रव्याद्भिश्च हतस्या-न्यैः" मनुः "क्रव्याद्भिः व्याघ्रादिभिः" कुल्लू० "शृगा-गालक्रैर्दृष्टो मार्त्यैः क्रव्याद्भिरेव" मनु० च ३शवदा-हके अग्निभेदे "अपाग्ने अग्निमामादं जहि निष्क्रव्यादं सेधदेवयजं वा आमाद् येनेदं मनुष्याः पच्यन्तेऽथ येन पुरुषं दहन्ति स क्रव्याद् एतावेतदुभावतोऽपहन्ति" शत० ब्रा० १।२।१।४। "हे अग्ने ! गार्हपत्य ! आमा-दमग्निमपजहि परित्यज तथा क्रव्यादमग्निं निःषेध निःशेषं दूरे गमय" वेददी० "योऽग्निं क्रव्यात् प्रविवेश वो गृहम्" ऋ० १०।१६।१० क्रव्याद्योनिप्राप्तिश्च गुरुत-ल्पगमनमहापातकविशेषवतां मनूक्ता यथा "तृणगुल्म-लतानाञ्च क्रव्यादां दंष्ट्रिणां तथा । क्रूरकर्मकृतां चैव शतशो गुरुतल्पगः"

क्रव्याद पु० क्रव्यमत्ति अद-अण् उप० स० । १राक्षसे २मांस-भोजिमात्रे त्रि० स्त्रियां टाप् सि०कौ० । "क्रव्यादः शव-भक्षणे" विधानपा० ५०पृ० उक्ते ३वह्निभेदे ।

वह्नेश्च क्रव्यादत्वं भा० व्या० ७अ० भृगुणा सर्वभक्षत्वे शापे अग्नये दत्ते तत्परिहारार्थं ब्रह्मप्रक्रव्यादत्वमुक्तम् "कथं देवमुखो भूत्वा यज्ञभागाग्रभुक् तथा । हुतभुक् सर्वलोकेषु सर्वभक्षत्वमेष्यति" इत्युपक्रमे "लोकानामिह सर्वेषां त्वं कर्त्ता चान्त एव च । त्वं धारयसि लोकांस्त्रीन् क्रियाणाञ्च प्रवर्त्तकः । स तथा कुरु लोकेश ! नोच्छिद्येरन् यथा क्रियाः । कस्मादेवं विमूढस्त्वमीश्वरः सन् हुताशन ! । त्वं पवित्रं सदा लोके सर्वभूतगतिश्च ह । न त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि । अपाने ह्यर्चिषो यास्ते सर्वं भक्ष्यन्ति ताः शिखिन् ! । क्रव्यादा

स्थित गोले निबध्नीयादिति तात्पर्यार्थः। भावयन् भुवनानि प्रकाशयन् सन् सः सूर्यः। एतेन चन्द्रादीनां निरासः। यदा निरन्तरं तथा क्रान्तिवृत्तस्थया कक्षया पर्येति स्वगत्या गच्छन् भगणपरिपूर्त्तिभोगं करोति। सूर्यगत्यनुरोधेन नियतं क्रान्तिवृत्तं कल्पितमिति भावः। ननु चन्द्राद्याः क्रान्तिवृत्ते कुतो न गच्छन्तीत्यत आह" रङ्ग० "चन्द्राद्याश्च स्वकैः पातैरपमण्डलमाश्रितैः। ततोऽपकृष्टा दृश्यन्ते विक्षेपान्तेष्वपक्रमात्" सू० "चन्द्रादयोऽर्कव्यतिरिक्ता ग्रहाः स्वकैः स्वकीयैः पातैः पाताख्यदैवतैरपमण्डलं क्रान्तिवृत्तमाश्रितैः स्वस्वगोलस्थानेऽधिष्ठितैस्ततः क्रान्तिवृत्तान्तर्गतस्वकक्षाभोगस्थानादित्यर्थः। चकाराद्विक्षेपान्तरेष्वाकृष्टा दक्षिणत उत्तरतो वा कर्षिता भवन्ति। अतः कारणादपक्रमात् क्रान्तिवृत्तान्तर्गतस्वभोगस्थानादित्यर्थः। दक्षिणत उत्तरतो वा विक्षेपान्तेषु पातागतविक्षेपकलाप्रस्थानेषु भूस्थजनैर्दृश्यन्ते। तथा च क्रान्तिवृत्तं यथा विषुवद्वृत्तेऽवस्थितं तथा क्रान्तिवृत्ते पातस्थाने तत्षड्भान्तरस्थाने च लग्नमुक्तपरमविक्षेपकलाभिस्त्रिभान्तरस्थानादूर्ध्वाधःक्रमेण दक्षिणोत्तरतो लग्नं च वृत्तं विक्षेपवृत्तं चन्द्रादिगत्यनुरोधेन स्वं स्वं भिन्नं कल्पितं तत्र गच्छतीति भावः" रङ्ग० क्रान्तिस्पष्टताप्रकारश्च सू० सि० रङ्गनाथाभ्यां दर्शितो यथा "अथ दिनरात्रिमानज्ञानार्थं चरानयनं विवक्षुः प्रथमं तदुपयुक्तां स्पष्टक्रान्तिमाह" रङ्गना० "विक्षेपापक्रमैकत्वे क्रान्तिर्विक्षेपसंयुता। दिग्भेदे वियुता स्पष्टा भास्करस्य यथा गता" सू० सि०

"यस्य यस्य स्पष्टक्रान्तिरभीष्टा तस्य पक्षस्यायनांशसंस्कृतस्य भुजज्यातः परमापक्रमज्येत्यादिना क्रान्तिरयनांशसंस्कृतपक्षगोलादिका ज्ञेया। तस्य विक्षेपोऽपि पूर्वोक्तप्रकारेण पातोनगोलादिको ज्ञेयः। गोलस्तु मेषादिषट्कमुत्तरस्तुलादिषट्कं दक्षिणः। अथ ग्रहक्रान्त्योरेकदिक्त्वेन क्रान्तिः कलाद्या कलात्मकविक्षेपेण युता तयोर्दिगन्यत्वे क्रान्तिर्विक्षेपेण वियुताऽन्तरिता शेषदिक्का स्पष्टा क्रान्तिः स्यात्। ननु सूर्यस्य विक्षेपाभावात् कथं स्पष्टा क्रान्तिर्ज्ञेयेत्यत आह भास्करस्येति। सूर्यस्य यथागता पूर्वागता क्रान्तिरेव स्पष्टा क्रान्तिः। अत्रोपपत्तिः। विषुवद्वृत्ताद्ग्रहबिम्बकेन्द्रपर्यन्तं याम्योत्तरं वान्तरं स्पष्टक्रान्तिरिति तयोरेकदिक्त्वे तद्योगतुल्यमन्तरं, भिन्नदिक्त्वे तदन्तरमन्तरमिति। अत्र परस्य क्रान्तिसंस्कारयोग्यत्वसम्पादिका क्रिया लोकक्षमभवात् स्वस्वान्तरत्वाच्चोपेक्षिता भगवता कृपावता। अन्यथा परस्य ध्रुवाभिमुखत्वे भगवदुक्तायनदृक्कर्म्म कथमव्याकृतं स्यादित्यलम्" रङ्गनाथः।

एवेदं यत्क्रान्तिवशेन दिनरात्रिभेदः सू० सि० रङ्गनाथाभ्याम् "क्रान्तिज्या यदा बाणं सुरासुरविभागयोः" इति दिनरात्र्योः क्रान्तिवृद्धी सुरासुरविभागयोर्भवत इत्युपक्रम्य विशदीकृत्य दर्शितो यथा

"मेषादौ तु सदा वृद्धिरुदगुत्तरतोऽधिका। देवांशे च तथा रात्रिर्विपरीतं तथाऽऽसुरे। तुलादौ द्युनिशोर्वामं क्षयवृद्धी तयोरुभे। देशक्रान्तिवशान्नित्यं तद्विज्ञानं पुरोदितम्" सू० "मेषादौ षड्भे उदगुत्तरगोले सूर्य्ये सति उत्तरतो यथोत्तरं सदा यावदुत्तरगोले देवांशे जम्बुद्वीपेऽधिका यथोत्तरमधिका वृद्धिर्निरक्षदेशीयावधिदिने। तथा रात्रिर्यथोत्तरं सूर्यस्योत्तरगमने यथोत्तरं दिने वृद्धिः परमोत्तरगमनात् परावर्त्तते। यथोत्तरं न्यूना वृद्धिरित्यर्थः। तथा रात्रौ रात्रेरपचयः। चः समुच्चये। आसुरे वडवादिदक्षिणभागे तथा दिनरात्र्योः क्षयवृद्धी विपरीतं ज्ञेयम्। दिने हानी रात्रौ वृद्धिरित्यर्थः। तुलादौ षड्भे दक्षिणगोले सूर्य्ये सति तयोर्जम्बुद्वीपवडवादिदक्षिणभागयोर्दिनरात्र्योरुभे द्वे क्षयवृद्धी उभयव्याप्त्यैव वामं ज्ञेयम्। अयमर्थः जम्बूद्वीपे दिनरात्र्योरुत्तरगोलस्थवृद्धिक्षयक्रमेण क्षयवृद्धी स्तः। वडवादिदक्षिणभागे दिनरात्र्योर्वृद्धिक्षयौ स्त इति। ननु क्षयवृद्ध्योः कियन्मानत्वमित्यतः पूर्वोक्तं स्मारयति देशक्रान्तिवशादिति। तद्विज्ञानं तयोः क्षयवृद्ध्योर्ज्ञानं दिनरात्रिमानं नित्यं प्रत्यहं देशक्रान्तिवशात्। देशपलभा क्रान्तिरेतदुभयानुरोधात् पुरा पूर्वं स्पष्टाधिकारे "क्रान्तिज्या विषुवत्कर्णे क्षितिज्या द्वादशोद्धृता। त्रिज्यागुणाहोरात्रार्द्धकर्णाप्ता चरजासवः"। तत्कार्मुकमित्यनेन दिनरात्र्योरर्द्धं ज्ञातम् तद्द्विगुणं दिनरात्र्योरित्यर्थसिद्धम्। अत्रोपपत्तिः। निरक्षदेशे ध्रुवद्वयस्य क्षितिजस्थत्वं तत्र उत्तरभागे स्वस्थानक्षितिजं स्वभूगोलमध्यस्थस्वस्थानादधो दक्षिणध्रुवाच्चोन्नमित्यत उत्तरगोले निरक्षक्षितिजादधो दक्षिणगोल ऊर्ध्वमिति पञ्चदशघटिका निरक्षदेशीयदिनार्द्धं क्षितिजान्तरकृतचरेण गोलक्रमेण युतहीनं दिनार्द्धं रात्र्यर्द्धं च विपरीतम्। एवं दक्षिणभागेऽभीष्टदेशे क्षितिजमुत्तरध्रुवादुन्नतं दक्षिण-

भूव्यासार्द्धमिति निरक्षक्षितिजात् क्षितिजं गोलक्रमेणोर्द्ध्वाधः स्यादन्तरभागाद्ध्रुवम् । अथोक्तावधिदेशं विवक्षुः प्रथमं तदुपयुक्तानि क्रान्त्यंशयोजनान्याह" रङ्ग० "भूवृत्तं क्रान्तिभागघ्नं भगणांशविभाजितम् । अवाप्तयोजनैरर्को व्यक्षाद्याम्योत्तरे स्थितः" सू०सि० । "भूवृत्तं भूपरिधियोजनमानं प्राग्वदभीष्टक्रान्त्यंशैर्गुणितं द्वादशराशिभागैः षष्ट्यधिकशतत्रयमितैर्भक्तं लब्धयोजनैः कृत्वा सूर्य उपरि आकाशे स्थितो वर्त्तमानो दक्षिणत उत्तरतो वा याति गच्छति । क्रान्त्यभावे तु निरक्षदेशोपर्य्येव परिभ्रमति । अत्रोपपत्तिः । निरक्षदेशान्मेरोरुत्तरदक्षिणाभिमुखं सूर्य्यः क्रान्त्यंशैर्गच्छति । तद्योजनज्ञानं तु भगणांशैर्यदि निरक्षदेशस्य भूपरिधियोजनानि तदा क्रान्त्यंशैः कानीत्यनुपातेनेत्युपपन्नम् । अथ दिनमानानयनगणितस्यावधिदेशमानं श्लोकाभ्यामाह" रङ्ग० । "परमापक्रमादेवं योजनानि विशोधयेत् भूवृत्तपादाच्छेषाणि यानि स्युर्योजनानि तैः । अयनान्ते विलोमेन देवासुरविभागयोः । नाडीषष्ट्या सकृदहर्निशाप्यस्मिन् सकृत् तथा" सू०सि० "परमक्रान्तिभागाश्चतुर्विंशतिमितास्तेभ्यः एवं पूर्वोक्तरीत्या योजनानि जातानि । भूपरिधेः पूर्वोक्तस्य चतुर्थांशात् परिवर्जयेत् । अवशिष्टानि यानि यत्संख्यामितानि योजनानि भवन्ति तैर्योजनैर्देवासुरविभागयोर्निरक्षदेशादुत्तरदक्षिणप्रदेशयोर्यौ देशौ तयोरित्यर्थः । अयनान्ते उत्तरदक्षिणायनसन्धौ कर्कादिस्थे सूर्य्ये दक्षिणोत्तरायणसन्धौ मकरादिस्थे सूर्य्ये विलोमेन व्यत्यासेन सकृदेकवारं नाडीषष्ट्या घटीषष्ट्याहर्दिनमानं भवति । अस्मिन्नेतादृशे देशे तस्मिन्नेवायनसन्ध्यारम्भे सकृदेकवारं तथा षष्टिघटीमिता विलोमेन रात्रिर्भवति । अपिशब्दो दिनेन समुच्चयार्थः । एतदुक्तं भवति—कर्कादिस्थे सूर्य्ये निरक्षदेशादुत्तरतद्योजनान्तरितदेशे षष्टिघटीमितं दिनं तत्रैव निरक्षदेशाद्दक्षिणतद्योजनान्तरितदेशे षष्टिघटीमिता रात्रिः । मकरादिस्थे सूर्य्ये तादृशोत्तरभागे षष्टिघटीमिता रात्रिर्दक्षिणभागे तद्देशे षष्टिमितं दिनमिति । अत्रोपपत्तिः—परमक्रान्तियोजनानि भूवृत्तचतुर्थांशयोजनेभ्यो न्यूनानि । निरक्षदेशात् तन्मितयोजनान्तरितो यो दक्षिणोत्तरदेशस्तस्मान्मेरोर्दक्षिणोत्तरायं क्रमेण परमक्रान्तियोजनान्तरितम् । अतस्तत्र लम्बांशाश्चतुर्विंशतिः पलांशाश्च षट्षष्टिरिति । तद्देशे क्रान्तिवृत्तानुकारं क्षितिजमित्ययमान्ते पञ्चदशघटीमितमहोरात्रस्यार्द्धभागस्य निरक्षदेशक्षितिजयोरन्तरालरूपं चरमत उक्तरीत्या दिनार्द्धं रात्र्यर्द्धं चोक्तरीत्या यथायोग्यं त्रिंशत् तद्द्विगुणं षष्टिघटीमितत्वमानं गणितरीत्योपपन्नम् । युक्तं चैतत् अयनान्ताहोरात्रवृत्तस्यैकस्य तत्क्षितिजप्रदेश एकत्रैव संलग्नत्वाद्द्विधा संलग्नत्वाभावात् प्रवहभ्रमितसूर्य्यपरिवर्त्तपूर्त्तिः षष्टिघटीभिर्दर्शनमदर्शनं यथायोग्यं तद्देशस्थिता प्रत्यक्षमेवेति । अथोक्तदिनरात्रिमानगणितं तदवधिदेशपर्य्यन्तं दक्षिणोत्तरभागयोरप्येकश्लोकेनाह" रङ्ग० "तदन्तरेऽपि षष्ट्यन्ते क्षयवृद्धी अहर्निशोः । परतो विपरीतोऽयं भगोलः परिवर्त्तते" सू० "तदन्तरे निरक्षदेशोक्तावधिदेशयोरन्तराले दक्षिणोत्तरविभागदेशे षष्ट्यन्ते षष्टिघटीमध्ये क्षयवृद्धी अपचयोपचयावुक्तरीत्या दिनरात्र्योर्यथायोग्यं भवतः । परतोऽवधिदेशादग्रिमदेशे दक्षिणोत्तरे दैत्यदेवस्थाननिकटेऽयं प्रत्यक्षो भगोलो नक्षत्राद्यधिष्ठितो मूर्त्तो गोलो विपरीतोऽवधिदेशान्तर्गतदेशसम्बन्धी गत्यनवच्छिन्नः परिवर्त्तते भ्रमति । तत्रोक्तरीत्या दिनरात्र्योर्ह्रासवृद्धी न भवत इत्यर्थः । त्रिज्याधिकाराद्द्युज्यानयनानुपपत्तेः चरस्वरूपाभावाच्च तथा विपरीतगोलस्थितं श्लोकाभ्यां प्रदर्शयति" रङ्ग० "ऊने भूवृत्तपादे तु द्विज्यापक्रमयोजनैः । धनुर्मृगस्थः सविता देवभागे न दृश्यते । तथा चासुरभागे तु मिथुने कर्कटे स्थितः । नष्टच्छायामहीवृत्तपादे दर्शनमादिशेत्" सू० "द्विराशिज्या ये क्रान्त्यंशास्तेषां योजनैः पूर्वागतैर्भूपरिधिचतुर्थांशे हीने कृते सति । तुकारान्निरक्षदेशात् तद्योजनान्तरिते देशे देवभागे उत्तरभागे धनुर्मकरराशिस्थोऽर्कस्तद्देशवासिभिर्न दृश्यते । धनुर्मकरस्थोऽर्के तेषां रात्रिः सदा स्यादित्यर्थः । असुरभागे निरक्षदेशाद्दक्षिणप्रदेशे । चः समुच्चयार्थः । तुकारात् तद्योजनान्तरितप्रदेशे मिथुने कर्के कर्कराशौ स्थितोऽर्कस्तथा तद्देशवासिभिर्न दृश्यते । नष्टच्छायामहीवृत्तपादे अभावं प्राप्ता मध्योच्छाया भूच्छाया यत्र तादृशे भूपरिधिचतुर्थांशे सूर्य्यस्य दर्शनं सदा कथयेत् । यत्र भूच्छायात्मिका रात्रिर्नास्ति तत्र दिनमित्यर्थः । तथा च निरक्षदेशात् तद्योजनान्तरितोत्तरप्रदेशे कर्कमिथुनस्थोऽर्को दृश्यते तद्योजनान्तरितदक्षिणप्रदेशे धनुर्मकरस्थोऽर्को दृश्यते इति फलितार्थः । अतएव "त्र्यङ्गयुक्नवरसाः पलांशका यत्र तत्र विषुवे कदाचन । दृश्यते न मकरो न कार्मुकं

किल कर्किमिथुनौ सदोदितौ" इति भास्कराचार्योक्तं नक्षत्रे" रङ्गनाथः।

क्रान्तिक्षेत्र न० क्रान्तिज्ञानार्थं क्षेत्रम्। सि० शि० उक्ते अपमक्षेत्राकारे पदार्थे यथा

"क्षेत्राणि वक्ष्येऽपमसंभवानि संक्षेपतोऽक्षप्रभवाणि चातः। भुजोऽपमः कोटिगुणो द्युजीवा कर्णस्त्रिभज्या त्रिभुजेऽपमोत्थे। मेषादिजीवाः श्रुतितोऽपवृत्ते तद्वन्निजे क्रान्तिगुणा भुजाः स्युः। तत्कोटयः स्वद्युनिशाख्यवृत्ते व्यासार्द्धहस्ते परिणामितानाम्। चापेषु तासामथवाऽन्तरे ये तेऽथो विशुद्धा उदया निरक्षे" सि०शि०

क्रान्तिज्या स्त्री क्रान्तिवृत्तस्थलस्य सि० शि० उक्ते अपमक्षेत्रावयवभेदे। अपमक्षेत्रशब्दे ४२५० अपमक्षेत्राणि उक्तानि। तज्ज्ञानानयनम्।

"युक्तायनांशादपमः प्रसाध्यः कालौ च खेटात् खलु भुक्तभोग्यौ। जिनांशमौर्व्या १३९७ गुणितार्कदोर्ज्या त्रिज्यो ३४३८ द्धृता क्रान्तिगुणोऽस्य वर्गम्। त्रिज्याकृतेः ११८१९८४४ प्रोज्झ्य पदं द्युजीवा क्रान्तिर्भवेत् क्रान्तिगुणस्य चापम्। अक्षप्रभासंगुणितापमज्या तद्द्वादशांशो भवति क्षितिज्या सि० शि०।

"अत्र खेटादिग्रुपलक्षणम्। यस्मात् खेटाद्यस्माद्वाऽपमः साध्यस्तस्मात् सायनांशादेव। तथा यस्मादुदयस्तम्भिनौ भुक्तभोग्यकालौ साध्यौ तस्मादपि सायनांशादेव। सायनार्कस्य दोर्ज्या जिनभागज्यया गुणिता त्रिज्यया भक्ता क्रान्तिज्या स्यादित्यादि स्पष्टार्थम्।

अस्योपपत्तिः। विषुवत्क्रान्तिवृत्तयोर्याम्योत्तरमन्तरं क्रान्तिः। तयोः संपाते क्रान्त्यभावः। ततस्त्रिभेऽन्तरे परमा जिन २४तुल्यभागाः। अतस्तत्संपातादारभ्य क्रान्तिः साध्या। उदयाश्च तत एव। स तु संपातो मेषादेः प्रागयनांशतुल्येऽन्तरे। अतः सायनांशात् खेटात् क्रान्तिर्भुक्तभोग्यकालौ चेत्युक्तम्। यदि त्रिज्यातुल्यया भुजज्यया जिनांशज्यातुल्या क्रान्तिज्या लभ्यते तदेष्टज्यया किमिति। फलं क्रान्तिज्या विषुवद्वृत्तात् तिर्यग्रूपा भवति। क्रान्तिज्या भुजस्त्रिज्या कर्णस्तद्वर्गान्तरपदम् होरावृत्तस्य व्यासार्धम्। सैव द्युज्या" प्रमि०।

देशभेदे कालभेदेन रवेः क्रान्तिज्याज्ञानार्थं प्रश्नपूर्वकं सि० शि० निर्णीतं यथा

"मार्तण्डः सममण्डलं किल यदा दृष्टः प्रविष्टः सखे! काले पञ्चघटीमिते दिनगते यत्रा गते तावति। येनाप्युज्जयिनीगतेन तरणेः क्रान्तिं तदा वेत्सि चेत्तन्मन्ये त्वां निपुणं समस्तगणकोत्तंसं भकुम्भाङ्कुशम्"।

"हे सखे! केनचित् कियोज्जयिनीगतेन यदा दिनगते पञ्चघटीमिते काले मार्तण्डः सममण्डलं प्रविष्टो दृष्टस्तदा कियती क्रान्तिज्येत्येकः प्रश्नः। अथान्यः तावति पञ्चघटीमिते गते वा काले समण्डलं प्रविष्टो दृष्टस्तदा च या क्रान्तिज्या तां त्वं चेद्वेत्सि तदा समस्तगणकोत्तंसभकुम्भाङ्कुशं निपुणोद्धतं त्वामहं मन्ये" प्रमि०

"या स्यादुन्नतकालजीवाभीष्टा कृतिः सा प्रथमं प्रकल्प्या। अर्का१२भ्याभावातकृताङ्ककर्णभक्त्योद्धृता स्यादपमज्यकाऽस्याः। चरादिकेनेष्टकृतिः प्रसाध्या युक्तया क्रान्तिगुणोऽपलक्ष। तदाद्यकृत्या विहृतः स्फुटः स्यात् पञ्चशरघ्नौ सममण्डलस्थे" सि०शि०।

"रवेः सममण्डलप्रवेशे य उन्नतकाल उद्दिष्टस्तस्य जीवा सा तावत् प्रथममिष्टकृतिः कल्प्या। ततो द्वादशगुणयाक्षया गुणया पलकर्णवर्गेण भाज्या। सा किल स्फुटा क्रान्तिज्या भवति। तस्याः क्रान्तिज्याया द्युज्यां कुर्यात् परज्यां चरं च ज्ञात्वा "अथोन्नतादूनयुताश्चरेण" इत्यादिनेष्टकृतिः साध्या। तया पूर्वमागता क्रान्तिज्या गुणया। आद्यकृत्या कल्पितया भाज्या। फलं स्फुटासन्ना क्रान्तिज्या भवति। अत्रोपपत्तिः। अत्रोन्नतकालजीवातुल्या प्रथमं तद्धृतिः कल्पिता। तस्या अनुपातेन शङ्कुः। यदि पलकर्णेन द्वादशकोटिस्तदा तद्धृतिकर्णेन किमिति। अत्र तद्धृतेर्द्वादशगुणः पलकर्णो हरः। फलं सममण्डलशङ्कुः। पुनरन्योऽनुपातः। यदि पलकर्णे मात्रभा भुजो लभ्यते तदा सममण्डलशङ्कुतुल्येन कर्णेन किमिति। फलं क्रान्तिज्या स्फुटा। अस्याः क्रान्तिज्यायाश्चरादिकेन "अथोन्नतादूनयुताश्चरेण" इत्यादिनेष्टकृतिः साध्या। तां तद्धृतिं प्रकल्प्य पुनः क्रान्तिज्या साध्या। एवमसकृद्यावदविशेषः। तत्रासकृत्कर्मणि त्रैराशिकेन क्रियोपसंहारः कृतः। यदि कल्पितया कृत्येयं क्रान्तिज्या लभ्यते तदेदानीमानीतया किमिति। एवं क्रान्तिज्या स्फुटा स्यादित्युपपन्नम्। इदानीं द्वितीयप्रश्नस्योत्तरमाह" प्रमि०

"तदा नतज्यात्रिभजीवयोर्यद्वर्गान्तरं तत् पलभाहतिघ्नम्। तेनोद्धृतो व्यासदलस्य वर्गो वेदेन्द्र १४४निघ्नोऽथ सहपलब्ध्या। व्यासार्धवर्गाद्विहृतात् पदं स्यात् क्रान्तिज्यका सा त्रिभशिञ्जिनीघ्नी। जिनांशमौर्व्या विहृताऽस्य चापादयने प्रवक्ष्ये च यथा रविः स्यात्" सि०शि०।

"यदा सममण्डलं प्रविष्टो रविस्तदा या नतघटिकास्तासां जीवा तस्या वर्गेण त्रिज्यावर्गो रहितः। ततः पलभावर्गेण गुणाः। तेन भाजकस्त्रिज्यावर्गः। किंविशिष्टः वेदेन्द्र १४४ गुणितः। तत्र यत् फलं लभ्यते तेन हीनेन त्रिज्यावर्गाद्धनात् यन्मूलं लभ्यते सा क्रान्तिज्या स्यात्। सा क्रान्तिज्या त्रिज्यागुणा जिनांशज्यया भक्ता यत् फलं तस्य चापादुदया रविर्भवति तथाप्येवं वक्ष्ये" प्रमि०।

क्रान्तिज्याविशेषेण रव्यादिज्ञानादिकमपि तत्रोक्तं विस्तरभयात् नोक्तम्। क्रमज्याशब्दे २२०२ पृ० दर्शिते क्रम-ज्याहृपे पदार्थे च।

**क्रान्तिपात** पु० क्रान्त्यर्थं पातः विषुवत्क्रान्तिवलययोः सम्पातादिवत् चतुर्थ्यर्थे इत०। सि० शि० उक्ते क्रान्तिनिमित्ते विषुवत्क्रान्तिवृत्तयोः संपाते। सि०शि०तद्वृत्तिर्यथा विषुवत्क्रान्तिवलययोः संपातः क्रान्तिपातः स्यात्। तद्भगणाः सौरोक्ता व्यस्ता अयुतत्रयं कल्पे। अयनचलनं यदुक्तं मुञ्जालाद्यैः स एवायम्। तत्पक्षे तद्भगणाः कल्पे गोऽङ्गर्तुनन्दगोचन्द्राः। तत्संजातं पातं क्षिप्त्वा खेटेऽपमः साध्यः। क्रान्तिपाशस्मदर्वाचरदलकर्माणमे ततः खेयः" सि०शि०। "क्रान्त्यर्थं पातः क्रान्तिपातः। पातो नाम संपातः। कयोः विषुवत्क्रान्तिवलययोः। नहि तयोर्मेषादावेव संपातः। किंतु तस्यापि चलनमस्ति येऽयनचलनभागाः प्रसिद्धास्त एव विलोमगस्य क्रान्तिपातस्य भागाः। मेषादेः पृष्ठतस्तावद्भागान्तरे क्रान्तिवृत्ते विषुवद्वृत्तं लग्नमित्यर्थः। नहि क्रान्तिपातो नास्तीति वक्तुं शक्यते प्रत्यक्षेण तस्योपलब्धत्वात्। उपलब्धिप्रकारमग्रे वक्ष्यति। तत् कथं ब्रह्मगुप्तादिभिर्निपुणैरपि नोक्तः? इति चेत्। तदा स्वल्पत्वात् तैर्नोपलब्धः। इदानीं बहुत्वात् साम्प्रतैरुपलब्धः। अत एव तस्य गतिरस्तीत्यवगतम्। यद्येवमनुपलब्धोऽपि सौरसिद्धान्तोक्तत्वादागमप्रामाण्येन भगणपरिध्यादिवत् कथं तैर्नोक्तः? सत्यम्। अत्र गणितस्कन्धे उपपत्तिमानेवागमः प्रमाणम्। तर्हि मन्दोच्चपातभगणा आगमप्रामाण्येनैव कथं तैरुक्ताः? इति न च वक्तव्यम्। यतो ग्रहाणां मन्दफलाभावस्थानानि प्रत्यक्षेणोपलभ्यन्ते। तान्येव मन्दोच्चस्थानानि। यान्येव विक्षेपाभावस्थानानि तान्येव पातस्थानानि। किं तु तेषां गतिरस्ति नास्ति वेति सन्दिग्धम्। तत्र मन्दोच्चपातानां गतिरस्ति चन्द्रमन्दोच्चपातयोरिवानुमानेन सिद्धा। सा च कियती तदुच्यते। यैर्भगणैरुपलब्धिस्थानानि तानि गणितेनागच्छन्ति तद्भगणसंभवा वार्द्धकी दैनन्दिनी वा गतिर्ज्ञेया। नन्वेवं यद्यन्यैरपि भगणैस्तान्येव स्थानान्यागच्छन्ति तदा कतरस्या गतेः प्रामाण्यम्। सत्यम्। तर्हि साम्प्रतोपलब्ध्यनुसारिणी कापि गतिरङ्गीकर्तव्या। यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामतिमन्तो ब्रह्मगुप्तादीनां समानधर्माण एवोत्पत्स्यन्ते। ते तदुपलब्ध्यनुसारिणीं गतिमुररीकृत्य शास्त्राणि करिष्यन्ति। अत एवायं गणितस्कन्धो महामतिमद्भिर्धृतः सन्नाद्यन्तेऽपि काले खिलत्वं न याति। अतोऽस्य क्रान्तिपातस्य भगणाः कल्पेऽयुतत्रयं तावत् सूर्यसिद्धान्तोक्ताः। तथा मुञ्जालाद्यैर्यदयनचलनमुक्तं स एवायं क्रान्तिपातः। ते गोऽङ्गर्तुनन्दगोचन्द्रा १९९६६९ उत्पद्यन्ते। अथ च ये वा ते वा भगणा भवन्तु। यदा येऽंशा निपुणैरुपलभ्यन्ते तदा स एव क्रान्तिपात इत्यर्थः। तं विलोमगं क्रान्तिपातं ग्रहे प्रक्षिप्य क्रान्तिः साध्या" प्रमिता०।

**क्रान्तिवृत्त** न० सि० शि० उक्ते क्रान्तिवलयाकारे वृत्तभेदे। तन्निवेशनप्रकारादि च गोलबन्धे तत्रोक्तं यथा "याम्योत्तरक्षितिजवत् सुदृढं विदध्यादाधारवृत्तयुगलं ध्रुवयष्टिबद्धम्। षष्ट्यङ्कमत्र सममण्डलवत् तृतीयं नाड्याह्वयं च विषुवद्वलयं तदेव" सि०शि० यथा खगोले क्षितिजं याम्योत्तरं च तदाकारमपरमाधारवृत्तद्वयं ध्रुवयष्टिस्थं कृत्वा तदुपर्यन्यत् तृतीयं सममण्डलाकारं घटीषष्ट्याङ्कितं कार्यम्। तन्नाडीवृत्तं विषुवद्वृत्तसंज्ञं च "इदानीं क्रान्तिवृत्तमाह" प्रमि०। "क्रान्तिवृत्तं विधेयं ग्रहाङ्कं भमत्यत्र भानुश्च भार्धे कुभा भानुतः। क्रान्तिपातः प्रतीपं तथा प्रस्फुटाः क्षेपपाताश्च तत्स्थानकान्यङ्कयेत्" सि०शि० "अथान्यत् तत्प्रमाणमेव वृत्तं कृत्वा तत्र मेषादिं प्रकल्प्य द्वादशराशयोऽङ्क्याः। तत् क्रान्तिवृत्तसंज्ञम्। तस्मिन् वृत्ते रविर्भ्रमति। तथा रवेर्भार्धान्तरे भूभा च। तथा तत्र क्रान्तिपातो मेषादेर्विलोमं भ्रमति। तथा ग्रहाणां विक्षेपपाताः प्रस्फुटा विलोमं भ्रमन्ति। अतः क्रान्तिपातादीनां स्थानानि तत्राङ्क्यानि। इदानीं क्रान्तिवृत्तस्य निवेशनमाह" प्रमि०

"क्रान्तिपाते च पाताङ्कघटिकान्तरे नाडिकावृत्तलग्नं विदध्यादिदम्। पाततः प्राक् त्रिभे विभागैरुदग्दक्षिणे तैश्च भागैर्विभागेऽपरे" सि० शि०

"क्रान्तिपातचिह्नात् षड्भेऽन्तरेऽप्यचिह्नं कार्य्यम्। ते चिह्ने नाडीवृत्तेन संसक्ते कृत्वा पातचिह्नादयतस्त्रिभेऽन्तरे नाडीवृत्ताद्गमचतुर्थांशोत्तरतो यथा भवत्यपरविभागे त्रिभेऽन्तरे दक्षिणतश्च, तैर्भागैर्यथा भवति तथा बध्नीयात्"। प्रमि० अग्निकं क्रान्तिशब्दे दृश्यम्। क्रान्तिवलयक्रान्तिमण्डलादयोऽप्यत्र।

क्रान्तिसाम्य न० ६त०। ग्रहाणां तुल्यक्रान्तौ। यद्यपि सर्व्वग्रहाणां क्रान्तिसाम्यमस्ति तथापि चन्द्रार्कयोः क्रान्तिसाम्यस्य मङ्गलकार्य्ये वर्ज्जनीयता १८६५पृ० उपयमशब्दे विस्तरेण दर्शिता। क्रान्तिसाम्ये च ग्रहाणामवनत्यभावः सू० सि० दर्शितो यथा "ग्रहोदग्मध्यमक्रान्तेः साम्ये नावनतेरपि" सू० सि०

"अक्षांशा उत्तरा ये मध्यमस्य मध्यलग्नस्य क्रान्त्यंशाः। अत्र मध्यलग्नशब्देन दशमभावस्त्रिभोनलग्नं वा ग्राह्यमुभयपक्षेऽप्यदोषः। अनयोस्तुल्यत्वे ऽवनतेर्नतेः अपिशब्दाद् लम्बनस्य न अभाव इत्यर्थः" रङ्गनाथः।

क्रान्तिसूत्र न० सि० शि० उक्ते ध्रुवसंसर्गिणि क्रान्तीनां सूत्राकारे योगभेदे। "सर्व्वतः क्रान्तिसूत्राणां ध्रुवे योगो भवेद्यतः। विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा" सि० शि०।

क्रान्तु पुंस्त्री क्रम–तुन् हर्षिच। पक्षिणि उज्ज्वलद०।

क्रायक त्रि० क्री–ण्वुल्। १क्रेतरि अमरः २क्रयजीविनि भरतः तच्चिन्त्यं तत्र क्रयिक इत्येव साधु जीवतीत्यर्थे वस्त्रादपि क्रयशब्दात् ठनो विधानात्।

क्रावन् त्रि० क्रम–वनिप् "विड्वनोरनुनासिकस्यात्" पा० अस्यात् क्रान्तरि "दधिक्राव्णोऽकारिषं जिष्णोरश्वस्य वाजिनः" यजु० २३।३२। स्त्रियां ङीप् रश्चान्तादेशः क्रावरी।

क्रिमि पु० क्रम–इन् अतइत्त्वं। १कृमौ क्षुद्रजन्तौ उज्ज्वल० २रोगभेदे कृमिशब्दे २१८४पृ० विवृतिः। "क्रिमयस्तु द्विधा प्रोक्ताः बाह्याभ्यन्तरभेदतः। बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः। नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः" "तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः। बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः" सौश्रुतः। "क्रिमयः कृमिवं यथा" भाग० ३,३१,२८, [मेदि०

क्रिमिकण्टक न० क्रिमौ कण्टकमिव। कृमिकण्टकशब्दार्थे

क्रिमिघ्न पु० क्रिमिं हन्ति हन–टक्। १विडङ्गे रत्नमाला। २कृमिनाशके त्रि० स्त्रियां ङीप्। सा च ३सोमराज्यां स्त्री शब्दच०। [२श्रावण्यां स्त्री रत्नमाला।

क्रिमिज न० क्रिमेर्जायते जन–ड ५त०। १अगुरुचन्दने अमरः

क्रिमिशत्रु पु० क्रिमिः शत्रुरिव नाशकत्वात्। रक्तपुष्पके (पालदामादार) शब्दच०। [खदिरे शब्दच०।

क्रिमिशातव पु० क्रिमेः शातव इव नाशकत्वात्। विट्

क्रिमिशैल पु० क्रिमिनिर्म्मितः शैलः। वल्मीके (उइढिपि) त्रिकाण्ड०

क्रिय पु० क्रिया ग्रहणानामारम्भक्रिया विद्यतेऽत्र अच्। मेषराशौ दीपिका कौर्प्यशब्दे २२७८पृ० प्रमाणं दृश्यम्। "क्रियैणतौलीन्दुभतोमवांशाः" नील० ता०।

क्रिया स्त्री कृ–भावे करणादौ वा यथायथं श। १आरम्भे २निष्कृतौ (प्रायश्चित्ते) ३शिक्षायां ४पूजायां ५संप्रधारणे (विवादविचाराङ्गसाधने) ६उपायमात्रे। ७न्यायादिमतसिद्धे उत्क्षेपणादौ कर्म्मणि व्याकरणमतसिद्धे ८धात्वर्थे ९चेष्टायां (परिस्पन्दे) १०चिकित्सायां च अमरः। ११करणे(अनुष्ठाने)हेम०। १२श्राद्धे क्षीरस्वामी। १३शौचे शब्दरत्ना०। १४प्रयोगे च तत्र न्यायमतसिद्धा क्रिया कर्म्मशब्दे १७५५पृ० दर्शिता। कर्म्मत्वलक्षणन्तु कौलूक्यशब्दे सर्व्व०द० वाक्ये १५८६पृ० उक्तम् तत्र अनित्यमात्रसमवेतत्वे सतीतियुक्तम् नित्यमात्रसमवेतत्वाभावादित्ययुक्तम् अनित्यमात्रसमवेतत्वाभावादिति युक्तम्। वैयाकरणमते तु धात्वर्थः क्रिया तत्स्वरूपशाब्दबोधप्रकारादि शब्दार्थरत्नेऽस्माभिर्निरूपितं यथा

"क्रिया च भावना उत्पादयितृव्यापाररूपा साध्यत्वेनाभिधीयमानेति बोध्यम्। "व्यापारो भावना सैवोत्पादना सैव च क्रियेति" हर्य्युक्तेः "यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते" इति "साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते" इति च वाक्यपदीयाच्च। "यावदिति सर्व्वमित्यर्थः तदेव विवृणोति सिद्धमसिद्धं वेति। सिद्धं वर्त्तमानध्वंसप्रतियोगि, तद्भिन्नमसिद्धं तच्च वर्त्तमानं भविष्यच्चेति द्विविधं तेनापचत् पक्ष्यति पचतीत्यादौ सर्व्वत्र साध्यत्वेन असत्त्वरूपत्वेनाभिधीयमाना क्रियेति क्रियाशब्दस्य रूढिरनेन दर्शितेति भावः। यौगिकत्वमप्याह आश्रितक्रमरूपत्वादिति। आश्रितःक्रमो रूपं यस्यास्तत्त्वात् पूर्व्वापरीभूतावयवकत्वादित्यर्थः। तदीयावयवानामधिश्रयणाद्यधःश्रयणपर्य्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन तत्समुदायोऽभिधीयते यत्र च न क्रमिको व्यापारोऽस्ति तत्र रूढिरादरणीयेति पौर्व्वापर्य्यारोपेण वा यत्र फलस्य स्वजन-

कव्यापारमतपीबोधशारोपवत् यौगिकत्वम्। अतएव फलमात्रबोधकस्यापि क्वचित् धातुत्वविधिरिति फलितार्थः। इयांस्तु विशेषः पाकइत्यादौ धातुना साध्यत्वेनोपस्थाप्यायाः क्रियायाः सिद्धक्रियारूपे घञर्थे विशेषणत्वं पचतीत्यादौ तु नैवमिति। अतएव "साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते" इति वाक्यपदीयकारिकाव्याख्यायां भूषणसारदर्पणे तिङ्पदैरित्यतद्गुणसंविज्ञानबहुव्रीहिणा तिङन्तपदैर्धातुभिरित्यभिहितम्। तेन सर्वत्र धातोः साध्यरूपक्रियाबोधकत्वम्। किन्तु कतिकावयवानामेकदाऽसत्त्वेऽपि यत्किञ्चिदवयवसत्त्वकाले वर्त्तमानत्वव्यवहारः अवयवावयविनोरभेदारोपात्। भूतभविष्यत्त्वव्यवहारस्तु सर्वेषामवयवानां भूतभविष्यत्त्वयोरेव, नतु यत्किञ्चित्क्रियाव्यक्तिभूतत्वादौ। उक्तञ्च वाक्यपदीये"गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" इति। अस्यार्थः कतिकतत्तद्व्यापारं प्रति गुणभूतैर्गुणभावेन भासमानैरवयवैरुपलक्षितः बुद्ध्या एकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्मिन् तद्रूपः क्रमजन्मनां व्यापाराणां समूहः क्रियेति। अत्र चरमचरमाणां व्यापाराणां मेलनासिद्धौ बुद्ध्येत्युक्तम् तथा च बुद्धिजन्यसंस्कारद्वारा तेषां मेलनसम्भवइति भावः। अतएव भाष्ये "क्रिया हि नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्यते पिण्डीभूता निदर्शयितुमिति" व्यापारसमुदायात्मिकायाः क्रियायादर्शनायोग्यत्वोक्त्या तदवयवानां तद्विषयत्वं व्यतिरेकमुखेन दर्शितम्। तस्याश्चाभिन्नैकबुद्धिविषयतया एकत्वव्यवहारइत्यपि बोध्यम्। अथवाऽनेकव्यापारव्यक्तिवृत्तिजातिरेव क्रियेति सिद्धान्तस्त्वादरणीयः। तस्याश्च व्यक्तिद्वारैव साध्यत्वम् अस्ति च पचित्वादिकं जातिः पचतीत्यादावनुगतव्यवहारात् तज्जातेश्चैक्यादेकत्वव्यवहार इति मन्तव्यम्। तदुक्तं वाक्यपदीये "जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीम्। असाध्यां, व्यक्तिरूपेण सा साध्येवाभिधीयते" इति। युक्तञ्चैतत् सर्वत्रैव लाघवाज्जातिशक्तिस्वीकारेण पच्यादिधातूनामपि तत्रैव शक्तिरुचितेति दिक्। सा च क्रिया धातुवाच्या फलव्यापारोभयरूपा, तद्विशिष्टरूपा वा "फलव्यापारयोर्धातुः" इत्यभियुक्तवचनात्। व्यवस्थापयिष्यते च मतभेदेन फलव्यापारयोः पृथक्शक्त्या विशिष्टशक्त्या वा धातुवाच्यता। अत्र फलांशस्य कर्त्रुद्देश्यत्वेऽपि प्राधान्याभावात् व्यापारस्यैव प्राधान्यं समुचितं तस्य च |

साध्यतया कर्मातिरिक्तसर्वकारकाणां तत्रैव स्वस्वव्यापारद्वारा साधकत्वेनान्वयः कर्मणस्तु फल एव, क्रियाजन्यफलाश्रयतयैव तस्योद्देश्यत्वादिति विवेकः। उक्तञ्च वाक्यपदीये "प्राधान्यात्तु क्रिया पूर्वमर्थस्य प्रविभज्यते। साध्यप्रयुक्तान्यङ्गानि फलं तस्याः प्रयोजकमिति"। अर्थस्य फलस्य तदपेक्षयेत्यर्थः। प्राधान्यात् विशेष्यत्वात् साध्यं प्रयुक्तं यैः तानि साध्यसाधकानि अङ्गानि कारकाणीत्यर्थः। अत्र फलस्य क्रियाप्रयोजकत्वाभिधानं तदुद्देशेनैव क्रियायां प्रवृत्तिरित्येतदभिप्राय। तथा च सर्वो लोकः स्वाभीष्टफलमभिप्रेप्सुस्तत्साधनाय यतते लभते च ततस्तत्तत्फलमुपायसंसाधनेन। एवं च क्रियाफलं विक्लित्त्यादिकमभीप्सुः पाकाय यतमानो जनः पाकसंसाधनेन फलं लभते। ततश्च फलसाधनतया पाकादेरपीष्टत्वात् साध्यत्वम्। फलविशिष्टक्रियाया धात्वर्थत्वमते तु विशिष्टत्वेनेष्टत्वात् विशिष्टस्यैव साध्यत्वमिति विशेषः। कारकान्वयस्तु तन्मते पूर्वोक्तदिशावसेयः एकदेशान्वयस्वीकाराच्च न कर्मणोऽनन्वय इति बोध्यम्। तस्याश्चैवं रीत्या साध्यत्वेन क्रियां जानता जनेन तस्याः प्राधान्यबुबोधयिषयैवाख्यातान्तस्य धातुः प्रयुज्यते अन्यथा कृदन्तस्येति। एवञ्च भावकृदन्तस्थले धातुना साध्यरूपक्रियावबोधनेऽपि तस्याः प्रत्ययार्थसिद्धरूपक्रियाविशेषणत्वेन न प्राधान्यम् "भावप्रधानमाख्यातमित्यादि" निरुक्तवचनस्य, "प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थप्राधान्यमिति" न्यायस्य च परस्परं विरोधपरीहाराय न्यायस्य आख्यातातिरिक्तविषयत्वव्यवस्थापनम्। हरिणापि धातुभावकृतोः क्रियावाचित्वाविशेषेऽपि धातुना साध्यत्वेन, कृता तु सिद्धत्वेन क्रियाया बोधनमिति व्यवस्थापितं यथा "साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना। सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः" इति "आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता। प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः" इत्येताभ्याम्। भागाभ्यां पश्य मृगो धावतीत्यादौ तिङन्ताभ्यां साध्यसाधनवर्त्तितेति मृगोधावतीत्यत्र तस्य साधनत्वमपरस्य साध्यत्वं क्रियाकारकभावेन तयोरन्वयात् घञर्थक्रियायास्तु इतरक्रियायामेव साधनत्वमिति विवेकः। साध्यत्वञ्च लिङ्गसंख्यानन्वयित्वं तद्विपरीतं सिद्धत्वं तथाच घञाद्युपस्थाप्यक्रियायाः लिङ्गसंख्यान्वयित्वेनापरक्रियायां साधनत्वम्। युक्तञ्चैतत् यत् घञन्तादौ द्विवि-

धक्रियायामेव कारकाणां साध्यक्रियायामेवान्वयोपगमात् तदन्तस्थले कारकविभक्तिप्रयोगस्य सर्व्वजनीनतया साध्यत्वेन तदुपस्थितावेव कारकान्वयोपपत्तिः। "साध्यस्य साधनाकाङ्क्षेति" "नियतं साधने साध्यं क्रिया नियतसाधनेति" "साध्यत्वेन निमित्तानि क्रिया परमपेक्षते" इति चाभियुक्तोक्तेः। अतएव स्तोकं पाक इत्यादौ द्वितीयान्तमोपपद्यते साध्यक्रियाफलस्य विशेषणेऽपि द्वितीयानुशासनात्। घञाद्युपस्थाप्यक्रियाविशेषणस्य तु विशिष्यलिङ्गतया प्रथमाद्यन्तता "कृदभिहितो भावो द्रव्यवत् प्रकाशत" इतिभाष्योक्तेः। कृदभिहितः कृता बोधितः। भावो भावना धात्वर्थस्वरूपमिति यावत् द्रव्येण तुल्यं प्रकाशते द्रव्यधर्म्मान् लिङ्गसंख्याकारकत्वानि भजते इति यावत्। अत्र द्रव्यत्वं लिङ्गसंख्यान्वयित्वमेव योग्यत्वात् न तु पृथिव्याद्यात्मकत्वं स्नानपाकादौ तदभावात्। नापि "वस्तूपलक्षणं यत्र सर्व्वनाम प्रयुज्यते। द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः" इति पारिभाषिकसर्व्वनामपरामर्शयोग्यत्वादिरूपं, साध्यक्रियाया अपि तथात्वेनाविशेषापत्तेः। किन्तु सत्वप्रधानानि नामानीत्येकवाक्यतया सत्वद्रव्ययोः पर्य्यायत्वस्य बहुषु स्थलेषु दर्शनात् सत्वभूतत्वमेव द्रव्यत्वमिति फलितार्थः "क्रिया न युज्यते" इत्यादिना लिङ्गाद्ययोगस्यासत्वलक्षणत्वाभिधानात् तद्द्वयामस्येव सत्वलक्षणत्वौचित्यादिति तु तत्त्वम्। वैयाकरणादिमते चल इत्यादौ क्रियायां शक्तिः "सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च" काव्या० उक्तेः। "असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः" माघः। प्रयोगे "तस्मिन्नुपायाः सर्व्वे नः क्रूरे प्रतिहतक्रियाः" कुमा० "प्रतिहतक्रियाः विफलप्रयोगाः" मल्लि० करणे (अनुष्ठाने) "वचसस्तस्य सपदि क्रिया केवलमुत्तरम्" माघः। "यथाक्रमं पुंसवनादिकाः क्रियाः" रघुः। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" "तद्भूतानां क्रियार्थेन समाम्नायः" जै० सू०। शिक्षायाम् "क्रिया हि वस्तूपहिता प्रसीदति" रघुः "चिकित्सायां "क्रियाः(औषधाः) सर्व्वा गतायुषः" सुश्रु०। कर्म्मणि(स्पन्दे) "क्षितिर्जलं तथा तेजः पवनोमन एव च। परापरत्व-मूर्त्तत्वक्रियावेगाश्रया अमी" भाषा०। "यदाश्रया क्रिया तमविकुर्व्वती नैवात्मानं लभते" शा०भा०। "क्रियैव कालः इति मते सुतरां नाधिकरणता" ति० त० रघु०। संयोग विभागयोरसमवायिकारणतावच्छेदकतया क्रियात्वजातिसिद्धिः। "क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम्। गृह्णाति चक्षुःसम्बन्धादालोकोद्भूतरूपयोः" भाषा० तेन योग्यवृत्तेस्तस्याः प्रत्यक्षता धात्वर्थे व्यापारे "तेन तुल्यं क्रिया चेद्वतिः" क्रियासमभिहारे यङ्" "स्वरितञितः कर्त्रभिप्राये क्रियाफले" पा०। "क्रियया यमभिप्रैति" वार्त्ति० "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्" "कर्त्तृकर्म्मव्यवहितामसाक्षाद्धारयत् क्रियाम्। उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्" "क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते। दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते"। "निर्द्दिष्टविषयं किञ्चिदुपात्तविषयं तथा। अपेक्षितक्रियञ्चेति त्रिधाऽपादानमिष्यते" "धातुपात्तक्रिये नित्यं कारके कर्त्तृतेष्यते" इति च भर्त्तृहरिः। "क्रियासमभिहारेण विराध्यन्तं क्षमेत कः" माघः। धात्वर्थे फले। "कर्म्मवत् कर्म्मणा तुल्यक्रियः" पा० कर्म्मणा कर्म्मस्थक्रियया तुल्यक्रियः समानाधिकरणक्रियः कर्म्मस्थमात्रस्थक्रियारूपफलक इत्यर्थः। क्रियाविशेषणम्। अत्र च यथा फलस्य विशेषणत्वेऽपि द्वितीया तथा क्रियाविशेषणशब्दे वक्ष्यते। क्रियान्वयिनञ्च हरिणा दर्शिता यथा

"संबोधनान्तं क्त्वोऽर्थः कारकं प्रथमोदितः। धातुसम्बन्धाधिकारविहितमसमस्तनञ्। तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्। संन्वयाष्टकस्यास्य क्रियैवावधार्य्यताम्"। व्यवहाराङ्गक्रियायाम् उदा० क्रियापादशब्दे वक्ष्यते। श्राद्धे "चतुर्द्दश्यां क्रियाः कार्य्या अन्येषान्तु विगर्हिताः" म० त० मरीचिः। "क्षते पितरि पुत्रेण क्रिया कार्य्या विधानतः" शु० त० मरीचिः। "सपिण्डसन्ततेर्वापि क्रियार्हो नृप! जायते" तत्रैव विष्णु पु०। "ये सपिण्डीकृताः प्रेता न तेषां च पृथक्क्रिया" ति० त० शा०ता०

**क्रियाकल्प** पु० क्रियायां चिकित्सायां कल्पोविधिः। सुश्रुतोक्ते उत्तरतन्त्रे अष्टादशाध्यायप्रतिपाद्ये क्रियाभेदे। "अथातः क्रियाकल्पं व्याख्यास्यामः" इत्युपक्रमात् तत्रोक्ते स्तथात्वम्

**क्रियाकार** पु० क्रियां शिक्षारम्भं करोति कृ–अण् उप०स०। नवच्छात्रे त्रिका० २कार्य्यकारकमात्रे त्रि० स्त्रियां टाप् सि० कौ०। मुग्ध० मते ङीप् इति भेदः।

**क्रियाद्वेषिन्** त्रि० क्रिया व्यवहाराङ्गसाधनं साक्षिलेख्यादिकं द्वेष्टि द्विष–णिनि ङ्त०। विवादे पञ्चविधहीनान्तर्गतहीनप्रतिवादिनि "अन्यवादी क्रियाद्वेषी नोपस्थाता

निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" इति मिता० नारदः । तल्लक्षणं यथा "लेख्यं च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः । तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते" वीरमि० कात्या० ।

**क्रियापाद** पु० क्रिया विवादसाधनं पादइव । चतुष्पादव्यवहारे साध्यार्थसाधनरूपे तृतीये पादे । "पूर्व्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः । क्रियापादस्तथा चान्यस्तृतीयो निर्णयस्ततः" बृह० । तस्य व्यवहारपादत्वं तद्गुणोपाधि वीरमित्रोदये निर्णीतं यथा "अथ क्रियापादः । तत्र तदुपयोगिप्रत्याकलितं प्रथमं निरूप्यते । विज्ञानयोगिना तस्य व्यवहारपादत्वानभ्युपगमेऽपि क्रियादानोपयोगित्वाभ्युपगमात् । अन्यैस्तु व्यवहारपादत्वस्यैव स्वीकारात् क्रियापादप्राग्भावस्तूभयसम्मतः । प्रत्याकलितन्नाम भाषोत्तरयोरर्थिप्रत्यर्थिभ्यां लिखितयोः क्रियोपन्यसनमनयोर्मध्ये कस्य स्यात्का चास्मिन् वादे क्रिया स्याद्दीनवादी वानयोर्मध्ये क इत्यादिः सभ्यप्राड्विवाकस्य सभापतेः सभ्यस्य प्राड्विवाकस्य वा परामर्श उच्यते । तथा च बृहस्पतिः "ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना । कार्य्यस्योत्तरं सभ्यैर्हीनश्चैवास्य वादिनः" । करणे धर्म्माधिकरणे ये तिष्ठन्ति वादिनः प्रतिवादिनश्च तेषामुत्तरं मिथ्यादिचतुर्भेदं कल्पयित्वा विचार्य्य एतदुत्तरे कस्य क्रियोपन्यास उचित इति निर्धार्य्य विभाव्यते साध्यमनयेति विभावना क्रियाप्रमाणमिति यावत् । एकस्य वादिनोऽर्थिप्रत्यर्थ्यन्यतरस्य सभ्यैर्देतव्या उपन्यसनीयत्वेनाज्ञापयितव्येत्यर्थः । कात्यायनोऽपि "लिखिते शोधिते सम्यक् सति निर्दोष उत्तरे । अर्थिप्रत्यर्थिनोर्वापि क्रियाकरणमिष्यते" । क्रियाकरणं क्रियोपन्यासः । पुनर्बृहस्पतिः "श्रुत्वोत्तरं सभ्यैर्निर्द्दिष्टा यस्य भावना । विभावयेत् प्रतिज्ञातं सोऽखिलं लिखितादिना" । विभाव्यते साध्यते साध्यमनयेति विभावना क्रियैव । पूर्वोत्तरं पूर्वपक्षस्योत्तरस्य चार्थः । द्वन्द्वैकवद्भावः । निर्द्दिष्टा सम्यगुपदिष्टा । कस्मिन्नुत्तरे कस्य क्रिया क्रियार्हितस्य किमुत्तरमित्यपेक्षायामाह व्यासः "प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्द्दिशेत् क्रियाम् । मिथ्योक्तौ पूर्व्ववादी तु प्रतिपत्तौ न सा भवेत्" । प्राङ्न्यायकारणोत्तरयोः प्राङ्न्याये कारणे च साधितेऽर्थिसाध्यस्य धनस्य धारणाबाधकत्वाद्दृष्टं साधनं प्रत्यर्थिनाऽभ्युपगमाच्चेति तस्यैव साध्यत्वाविशेषात्तदुपन्यासकारिणा एव प्रत्यर्थिनः प्रमाणोपन्यासः साधनायोचितः । अर्थिप्रत्यर्थिविरुद्धप्रत्यर्थेकस्मृत्योर्द्वयोरपि तेनैव निर्णयात् । मिथ्योत्तरे तु वादिनः प्रमाणमपेक्ष्य यदि प्रतिज्ञातेऽर्थे प्रमाणाभाव एव प्रत्यर्थ्यभिमतोऽर्थिप्रतिज्ञातसाध्यस्येत्यभावः सिध्यतीति तत्परिहाराय भावाभावयोर्भावस्यैव साध्यत्वौचित्यादर्थिन एव क्रिया । सम्प्रतिपत्तौ तु नैकस्यापि साध्यमस्तीति निरर्थकत्वात् क्रियैव नास्तीत्यर्थः । बृहस्पतिः "प्रतिज्ञां भावयेद्वादी प्रत्यर्थी कारणं तथा । प्राग्वृत्तं वादिजयं जयपत्रेण भावयेत्" प्रतिज्ञामप्रतिज्ञातार्थम् । इदञ्च परिशेषान्मिथ्योत्तरविषयम् । प्राग्वृत्तं प्राङ्न्यायं जयपत्रेणेति प्राङ्न्यायदर्शिना जयपत्रकेण । मनुः "अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि । अभियोक्ता दिशेद्देश्यं करणं वान्यदुद्दिशेत्" । दिशति कथयति यथादृष्टमर्थमिति देश्यः साक्षी । मेधातिथिस्तु ऋणादिप्रयोगदेशवर्त्तिनः साक्षिणो देशशब्देन लक्ष्यन्त इत्याह । अन्यत्कारणं प्रमाणं साक्षिभिन्नं लेख्यादि । मेधातिथिना तु "करणं वा समुद्दिशेदिति" पठित्वा करणशब्दः प्रमाणसामान्यवाचकोऽपि गोबलीवर्द्दन्यायेन साक्षिभिन्नकरणमात्रपरः पृथगुपादानात् । कारणं वा समुद्दिशेदिति पाठेऽप्ययमेवार्थः" इत्युक्तम् । । यत्र मिथ्याप्रत्यवस्कन्दनयोः कृत्स्नपक्षव्यापिता । यथा कश्चिन्मुद्गपाञ्चिकया कञ्चिदभियुक्ते नदीतीरे क्षीरमुक्तवान् काले नष्टस्य गृहे दृष्टः । तत्राभियुक्त उत्तरयति मिथ्यैतत् । एतत्प्रदर्शनमात्रशालात् प्रागेवास्या मद्गृहेऽवस्थितत्वादिति । इदन्नावश्यं प्रतिक्षेपणमननमित्युत्तरत्वानर्हम् । कारणोपन्यासाच्च शुद्धं मिथ्योत्तरम् । एकदेशाभ्युपगमाभावाच्चार्थिना लिखितोऽर्थ इत्यादि प्रागुक्तप्रत्यवस्कन्दनलक्षणं नाक्रान्तमिति । साध्यभेदाय प्रतिज्ञाभेदापादकत्वाभावाच्च न पक्षैकदेशम् । यत्रत्यमित्युत्तरं युगपद्व्यवहारासम्भवात् युगपदनुत्तरम् । तथाप्यकारणं मिथ्योत्तरमेवेदम् अन्यतरसाधनेनापि विवादपर्यवसानात् । अत्र "मिथ्याक्रियापूर्ववादे" इति वचनात् "कारणे प्रतिवादिनीति" वचनाच्चान्यतरस्य यथारुचि क्रियोपन्यास इति भाति यद्यपि, तथापि मिथ्याक्रियेत्यादेः शुद्धमिथ्याविषयत्वेनैतद्विषयत्वाभावात् "कारणे प्रतिवादिनीति" वचनात् प्रतिवादिन एवात्र क्रिया । तथाप्यपि शुद्धप्रत्यवस्कन्दनविषयत्वादेतद्विषयत्वाऽभावप्रसङ्गेन न कस्यापि क्रिया प्राप्नोतीति निर्णय-

प्रतिज्ञैवेति वाच्यम्। यतः प्रतिज्ञाप्रश्नाङ्कनेऽपि पूर्ववादाभ्युपगमेन प्रतिज्ञार्थादिकारणोत्तरतैवास्यासम्भाविनीति वाच्यम् एकदेशाभ्युपगमस्य प्रायिकत्वात्। कारणोपन्यासस्यैवोत्तरान्तरसङ्कीर्णतया तत्सङ्करत्वाव्यभावात्। एवं च तत्सङ्करव्यापि प्राङ्न्यायं मिथ्योत्तरमपि द्रष्टव्यम्। यथा प्राक्तनाभियोग एव। यद्येवं प्रतिवदति मिथ्यैतत्। यतः प्राक्तनसभिन्नाभियोगे मया व्यवहारमार्गेण पराजित इति। अत्रापि प्राङ्न्यायकारणोक्तौ" इत्यादिप्राक्प्रदर्शितवचनात् प्रत्यर्थिन एव क्रियोपन्यासः। प्राङ्न्यायसिद्धौ प्रतिज्ञायाः प्रकटमेव मिथ्यात्वपर्यवसानादस्य शुद्धप्राङ्न्यायविषयत्वासम्भवादेतादृशप्राङ्न्यायविषयताया अपवर्जनीयत्वात्। पश्चात्प्रतिज्ञोत्तरवन्नस्यास्य प्राग्वदेवानुसरत्वानर्हत्वात्। यत्र तु कारणप्राङ्न्याययोः सङ्करव्याप्तितयैकोत्तरत्वं तत्र प्रत्यर्थिना प्राङ्न्याय एव साधनीयः। कारणसाधनस्य तदन्तर्भूतत्वात्। यथा रूपकशतमनेन मामकं स्तोतमिति अभियुक्तः प्रतिवदति सत्यं स्तोतं प्रतिदत्तत्वादिदानीमस्मै न धारयामि। अस्मिन्नर्थे प्रागसुनाहमभियुक्तस्तस्माद् व्यवहारतोऽयमस्मत्पराजित इदानीमिति। इदानीं हीनपरिज्ञानोपायः तत्र मनुः। "बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्। स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च"। स्वरो विकृतो गद्गदत्वादिः। वर्णोऽप्यस्वाभाविकः कृष्णत्वादिः। इङ्गितं स्वेदवेपथुरोमाञ्चादि। आकारो विकृतो भ्रुवः क्रियादिः। चक्षुः कातरम्। चेष्टितं वृथास्थानात् स्थानान्तरगमनादि। याज्ञवल्क्यः "देशाद्देशान्तरं याति सृक्किणी परिलेढि च। ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च। परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते। वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि। स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः। अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्त्तितः।" मनोवाक्कायकर्मभिर्यः स्वभावाद्विकृतिं गच्छेत् न भयादिनिमित्तमन्तरा अभियोगे साक्ष्ये वा दुष्टः परिकीर्त्तितः। तत्र कायादि विकृतीरेव विभज्य दर्शयति। देशान्तरं याति न चैकत्रावतिष्ठते। सृक्किणी ओष्ठप्रान्तौ परिलेढि जिह्वया पुनः पुनः परिघट्टयतीति। कर्मणो विकृतिः। अस्य ललाटं स्विद्यते स्वेदबिन्दुसन्दोहाङ्कितं भवति। मुखं वैवर्ण्यं वर्णान्यत्वं पाण्डुत्वकृष्णत्वादि एति प्राप्नोतीति कायस्य। परिशुष्यत्स्खलद्वाक्यः परिशुष्यद्गद्गदं स्खलद्वाक्यं

पदवर्णं वाक्यं यस्य सः। बहु अनुपयुक्तं विरुद्धं पूर्वापरविरोधवद्भाषते। परोक्तां वाचमुत्तरवचनदानेन, इति वाचः। चक्षुः परस्य प्रतिवीक्षणेन न पूजयति नाभिनन्दतीति चक्षुषः। मनोविकृतेर्लिङ्गमुक्तकीयमनोविकृतेरपव्ययत्वात्। तथा ओष्ठौ निर्भुजति वक्रयत्यूर्ध्वाधोभावेन चालयतीति कायस्यैव विकृतिः। मनुरेव "आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च। नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः" कात्यायनः "आकारेङ्गितचेष्टाभिस्तस्य भावं विभावयेत्। प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते। कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठयोश्चाभिमर्षणम्। भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम्। स्वरभेदश्च दुष्टस्य चिह्नान्याहुर्मनीषिणः"। प्रतिवादिशब्देन परस्परप्रतिपक्षवादित्वादुभयोर्ग्रहणम्। अभिमर्षणमोष्ठयोष्ठप्रान्तावलेहनं दन्तैः कवद्भावः। श्रीरामायणे "आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम्। बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम्"। अनेन च पराजयसम्भावनामात्रमुत्पाद्यते तस्य च फलं क्रियादिपरामर्शे सभ्यादीनामवधानेन व्यवहारेऽविचारः। नत्वेतावता पराजयनिश्चयो साध्यनिर्णयो वा, नैसर्गिकनैमित्तिकविकारयोर्लक्षणस्य विवेक्तुमशक्यत्वात्। यद्यपि कोऽपि निपुणतममतिर्विवेक्तुं शक्नुयात् तथापि न पराजयनिमित्तमर्थाभावनिबन्धनं वा दण्डादिकार्यं सम्भवति। न हि निपुणभिषगभियोगमूलकमरणनिश्चयेऽपि हतकार्यमार्याः समाचरन्ति। योगीश्वरः "सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्। न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः"। सन्दिग्धमधमर्णादिभिरनभ्युपगतमेवार्थं यः स्वतन्त्रः प्रमाणनिरपेक्ष एव साधयेदासेधादिना राजादिभ्योऽनिवेद्यैव तथाक्षिपति तदुपरि दण्डादापादयति वा स हीनो दण्ड्यो भवति। न परं प्रकृतार्थहानिमाप्नोति प्रत्युत स्वातन्त्र्यनिबन्धनं राजदण्डमपि दातुमर्हति। यश्च स्वयमभ्युपेतं साधनं वा साधितं वाच्यमानो निष्पतेत् पलायेत। कोऽपि तथा कृतः कारितं [illegible]। यश्चाहूतोऽभियुक्तो राज्ञा चाहूतः वदति न किञ्चिद्दत्तं स प्रकृतार्थहानिं दण्डञ्च प्राप्नोति। प्रकरणात् दुष्टपरिज्ञानमेव मा भूदिति दण्डप्रकरणं दण्ड्योऽपि चास्योऽप्यर्थाद्धीयत इति स्वार्थाद्धीयत इत्यर्थादहीनत्वदर्शनादन्यथाभूदिति हीनपञ्चकमाह नारदोऽपि। "अन्यवादी

क्रियाद्वेषी नोपस्थाता निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः। अन्यवादी तथा हीनः स एव विकृताननः। पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः। वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः"। कात्यायनेनापि "आवेदयित्वा यदा कार्यं त्यजेदन्यद्वदेद्यदि। अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते"। यत्र कश्चिदभियुज्य नाहमेनमभियुञ्जे इत्येवं विरुद्धमभिदधीत सोऽप्यन्यवादी तथा हीन इत्याह स एव "न मयाभिहितं कार्यमभियुज्य परं वदेत्। विब्रुवंश्च भवेदेव हीनत्वमपि निर्दिशेत्"। तथा पत्रे लिखितं पूर्वपक्षमप्यन्यथा कुर्वन्नन्यवादी तथा हीन इत्याह स एव "लेखयित्वा तु यो वाक्यमूनं वाऽभ्यधिकं पुनः। वदेद्वादी स हीयेत नाभियोगन्तु सोऽर्हति"। अभियोगं पूर्वपक्षं नार्हति वादित्वयोग्यो न भवतीत्यर्थः। क्रियाद्वेषिणोऽनुपस्थातुश्च हीनतायास्तेनैव विवरणं कृतम् "लेख्यं च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः। तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते। आह्वानादनुपस्थानात् सद्य एव स हीयते"। निरुत्तरतया हीनमप्याह स एव "ब्रूहीत्युक्तोऽपि न ब्रूयात् सद्यस्तद्दण्डनमर्हति। द्वितीयेऽहनि दुर्बुद्धेर्विद्यात्तस्य पराजयम्"। पराजयं तद्व्यक्तं हीनताम्। अतएव हारीतः "सापदेशं हरेत्कालमब्रुवंश्चापि संसदि। उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम्"। सापदेशं सव्याजम्। यथाह कात्यायनः "व्याजेनैव तु यत्रासौ दीर्घकालमतिक्रमेत्। सापदेशं तु तद्विद्याद्धार्यिकरं स्मृतमिति"। आहूतप्रपलायी अभियोगपरिहाराय समाह्वानबुद्ध्या प्रच्छन्नचारी। एतेषामुत्तरोत्तरस्य हीनता गुर्वीति ज्ञापयितुं "हीनः पञ्चविध" इत्युक्तं न परिसंख्यार्थमन्येषामपि हीनत्वस्मरणात्। हीनतागुरुत्वज्ञापनं दण्डभूयस्त्वार्थम्। यथोक्तं कात्यायनेन "अन्यवादी पणान् पञ्च क्रियाद्वेषी पणान्दश। नोपस्थाता दश द्वे च षोडशैव निरुत्तरः। आहूतप्रपलायी च पणान्दाप्यस्तु विंशतिम्"। अत्रापि विशेष उक्तस्तेनैव "विराङ्कृतमनायातमाहूतप्रपलायिनम्। पञ्चरात्रमतक्रान्तं विनयेत्तं महीपतिः" कात्यायनेनैव प्रकारान्तरेणापि हीन उक्तः। "आवितव्यवहाराणामेकं यत्र प्रभेदयेत्। वादिनं लोभयेच्चैव हीनत्वमपि निर्दिशेत्"। आवितव्यवहाराणां सभ्यादीनां मध्ये एकमपि यः प्रभेदयेत् अन्नहारानुरोधाद्युत्थापनेनेत्यर्थः।

बृहस्पतिरपि "भयं करोति भेदं वा भीषणं वा निरोधनम्। एतानि वादिनो यस्तु व्यवहारे स हीयते"। भयादीनि व्यस्तसमस्तानि येन कृतानि स हीयत इत्यर्थः। भयं करोति भीषणामन्यमुखेन भयोत्पादनमिति शेषः। मनुरपि "अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः। यश्चाधरोत्तरानर्थान् विगतान्नावबुध्यते। अपदिश्यापदेश्यं च पुनर्यस्त्वपधावति। सम्यक् प्रणिहितं चार्थं पृष्टः सन्नाभिनन्दति। असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः। निरुच्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत्। ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत्। न च पूर्वापरं विद्यात्तस्मादर्थात् स हीयते। ज्ञातारः सन्ति मेत्युक्त्वा दिशेत्युक्तो न दिशेच्च यः। धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत्"। अदेश्यमनुपयोगासत्यत्वादिना निर्देशानर्हं दिशति कथयति यः। यश्च कथितमपि न मयेदमुक्तमित्यपलपति। यश्चाधरोत्तरानर्थान् पूर्वापराभिहितान्विगीतान्विरुद्धांस्तत्त्वेन नावबुध्यते। यश्चापदेशं व्याजं पीडादिकमपदिश्योद्भूयापधावति अपसरति सभातः। यश्च सम्यक् प्रणिहितं सम्यक् प्रणिधानेनाकलितमपि परोक्तमर्थं पृष्टः सन्नाभिनन्दति अनुवादप्रत्युत्तरदानादिना नाद्रियते। मेधातिथिस्त्वदेशमिति पठित्वा भाषावादिलिखितदेशभिन्नमसम्भावितं वा देशम्। यद्वाऽभियोक्ता दिशेद्देशमित्यत्रैव देशशब्देन साक्षिणो व्याख्याय साक्षिनिर्देशः। अकाले सम्भावितसाक्षिणो निर्दिशतीति व्याचख्यौ। यश्च ज्ञातारः साक्षिणो ममोक्तेऽर्थे सन्तीति सभायामुक्त्वा के ते वदेत्युक्तो न वदेत्तान्। अत्र मा मां ज्ञातारः। यथार्थवादग्रहामिति जानानाः साक्षिण इति यावत्। द्वितीयैकवचनान्तस्यास्मच्छब्दस्य द्वितीयाया इत्यनेन माम् इत्यस्य मा इत्यादेशः। ननु मे इति पञ्चम्यन्तमेतत्। "ङसर्थेऽतनामिति" तद्विधानात्। तेन मेति साक्षिरपि समाहित इति मेधातिथिः। आचार्यास्तु व्याकरणाधिकरणे सन्धिकरणमत्रापशब्द इति पूर्वपक्षप्रसङ्गेन वदन्तः पञ्चम्यन्ततामेवास्य मन्यन्ते मे सन्तीति सम्बन्धाच्च इतीयासम्बन्धप्रयुक्तषष्ठीप्रतिषेधावकाश इति तेषामभिसन्धिः। सन्ति ज्ञातार इत्युक्त्वेति कल्पतरुलिखितपाठस्तु रत्नाकरधृताचार्यमेधातिथिव्याख्यानविरुद्धत्वादिति ध्येयम्। सिद्धान्ते त्वाचार्याणां छान्दसत्वमत्र समाधिरभिमतः। एतैः कारणैर्व्यस्तैः समस्तैर्वा वादिप्रतिवादिनोरन्यतरं हीनं निर्दिशेदित्यर्थः। हीनवादितया दण्डार्हतामात्रम् प्रक-

नार्थहानिरिति प्रमादपरिहारार्थमेवायं प्रपञ्चः "छलं निरस्येत्यादि" वचनात् । अतएव नारदोऽपि "सर्वेष्वर्थविवादेषु वाक्छले नावसीदति । परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते" । अस्यार्थः अर्थविवादेषु सर्वेषु वाक्छले प्रमादाभिधाने पूर्व्वमुपस्थितेऽपि नावसीदति प्रकृतादर्थान्न हीयते । अत्रोदाहरणमात्रं परस्त्रीत्यादि । एतेषु प्रमादाभिधानेऽपि शास्योदण्ड्योऽपि यथा न प्रकृतार्थाद्धीयते इति एवं सर्वेष्वर्थविवादेष्वित्यर्थः । अन्यथा परस्त्रीत्यादेरानर्थक्यमेव भवेत् । अर्थविवादेषादनात्मन्युक्तेषु प्रकृतार्थादपि हीयत इत्यर्थादुक्तं भवति । यथाऽहमनेन शिरसि ताड़ित इत्यावेद्य भाषादिसमये हस्तेन पादे ताड़ित इति वदन् दण्ड्यः पराजितश्च भवति । मन्युकृताविवादवदेव ताड़नादिकमयमभिचारोप्यावेदितवान् धर्म्माधिकरणे इति प्रतीतेः । अतएव "दोषानुरूपं संप्राप्तः पुनर्वादो न विद्यते" इति वार्हस्पत्यः पुनर्वादनिषेधोऽपि मन्युकृतव्यवहारविषय एव । संप्राप्तोदण्डमित्यर्थात् । असभ्यान्ये सभापण्डितैः विजन इति यावत् । नेच्छेत् श्रुतमप्यश्रुतवत्कुर्यात् । राजशास्त्रादिव्याख्यातत्वाच्च भाषान्तरं गच्छेत् । ब्रूहीत्यादि गतार्थम् । अन्यादेशमित्यादौ ब्रूहीत्यादौ च बहुक्तत्वेऽपि तथ्यं वदितव्यमिति शाबरभाष्योक्तरीत्यास्मिन् प्रकरणे पुनरुक्तिर्न दोष इति भगवान्मेधातिथिराह । क्वचिदर्थविवादेऽप्यर्थहानिः सन्दिग्धार्थमित्यनेन दर्शिता । नारदोऽप्याह "अनिवेद्य तु यो राज्ञे सन्दिग्धेऽर्थे प्रवर्त्तते । प्रसह्य स विनेयः स्यात् सोऽप्यर्थो न सिध्यति" । प्रवर्त्तते साधयति बलादिनेत्यर्थः । वृहस्पतिरपि "आहूतप्रपलायी च मौनी साक्षिपराजितः । स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः" । साक्षिपराजितः साक्षिवचनाद्दण्ड्यः पराजितः, स्ववाक्यप्रतिपन्नः संप्रतिपन्नोत्तरदाता, अनयोर्दृष्टान्तत्वेनोपादानम् । यथाऽनयोर्विप्रतिपन्नार्थहानिस्तथान्ययोरपीत्यर्थः । अत्राप्युत्तरोत्तरहीनताधिक्यप्रतिपादनार्थं चतुर्विधग्रहणम् परिसंख्यार्थमन्यथास्य पाठान्तरन्यायं विरुध्येत । कश्चित् कदा हीनकार्य्यमित्यत्र कालावधिरुक्तो नैव "प्रपलायी निरुद्धश्च मौनकृत् सप्तभिर्दिनैः । साक्षिभिश्चस्तत्क्षणेन प्रतिपन्नश्च हीयते" इति साक्षिभिश्चस्तपराजितः यश्च सामान्यात् साक्षिणो निर्दिश्य पश्चाद्विशिष्य निर्दिशेत् मनुना स्मारितः इत्यनेन हीनतयोक्तेः तत्रापि कालावधिं वृहस्पतिरेवाह "साक्षिणस्तु समुद्दिश्य यस्तु तान् विवादयेत् । त्रिंशद्रात्रात् त्रिपक्षाद्वा तस्य हानिः प्रजायते" इति । दैविकराजिकान्तराये तु व्यतिक्रमेऽपि न दोष इत्यप्याह स एव "आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम् । नोपस्थितो यदा कश्चिच्छलान्नन्न कारयेत् । दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत् । अवधिस्त्वागमान्तेषु न भवेत् स पराजितः" । इति आचारकरणे व्यवहारकरणे । छलान्नन्न कारयेदिति वदता यत्र वचनेनार्थहानिः प्रतिपादिता तत्रैव पुनर्विवादाभावोऽन्यत्र तु हीनतानिमित्तं दण्डं कृत्वा पुनर्वादः प्रवर्त्तनीय एवेति सूचितम् । यत आह कात्यायनः "पलायनानुत्तरत्वादन्यपक्षाश्रयेण वा । हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च" । स्ववाक्यजितस्येति प्रकृतार्थहानिनिमित्तोपलक्षणं नैव निवृत्तमिदम् "यो हीनपक्षेण निःसृतश्चेद् दरं पुनः । स्ववाक्यहीनोयस्तु स्यात् तस्योद्धारो न विद्यते" इति । उद्धारः पुनर्व्यवहारः । अत्रापि स्ववाक्यहीन इति प्रकृतार्थहानिनिमित्तोपलक्षणम् । विवादमुपक्रम्य राजानं वञ्चयित्वाऽन्योन्यं यौ वादिप्रतिवादिनौ स्वयमेव विवादं निवर्त्तेते तयोरुभयोरपि दण्ड्यत्वमाह वृहस्पतिः "पूर्वोत्तरे संलिखिते विचारे समुपस्थिते । प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम्" । मिथ इत्यनेन राज्ञो निवेदनमकृत्वैवाऽन्योन्यप्रशमयाभोक्तेः राज्ञोऽनिवेदनमवगम्यते । कात्यायनस्तु स्पष्टमाह "आवेद्याप्रष्टहीनाश्च प्रशमं यान्ति ये मिथः । सर्वे द्विगुणदण्डाः स्युर्विप्रलम्भात् नृपस्य ते" इति । द्विगुणो दण्डस्तु पराजयनिमित्तदण्डापेक्षया न तु विवादास्पदीभूतद्रव्यापेक्षया अद्रव्यविवादेष्वव्याप्तेः । राज्ञे निवेद्याऽन्योन्यरुच्या राजानुरोधेनैव वा सन्धिकरणे तु न दण्ड इत्यर्थसिद्धं स्फुटीकृतं वृहस्पतिना "पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्य्यनिर्णये । द्वयोर्विवदतोः सन्धिः स्यात् तुल्यः स्त्रियोरिव । साक्षिसभ्यविकल्पस्तु भवेत्तत्रोभयोरपि । दोलायमानौ यौ सन्धिं कुर्वीयातां विचक्षणौ । प्रमाणसमता यत्र भेदः शास्त्रविनिश्चयात् । तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते । धर्मार्थावाप्नुतः कीर्त्तिर्भवेत्तस्माच्च भूभुजः । न क्लिश्यन्ते साक्षिसभ्या वैरञ्च विनिवर्त्तते । नियच्छन् दण्डं धनं प्राप्य यथोऽयशः । विग्रहाज्जायते तेषां पुनर्दोषस्तथैव च । तस्मात्त्वगणाध्यक्षधर्मज्ञाः समदृष्टयः । अहं पक्षो भावाद्वृष्टुयु-

न्यायेनांशमाहरेत्। द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तदिति"। परतः तृतीयाहात् परतः क्रेतुरेव तत् क्रीत्वा अनुशयादिकं न कुर्य्यादित्यर्थः। यत्तु मनुवचनम् "क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्। सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत चेति" तदुपभोगे नश्वरवस्त्वरूपद्रव्यानशयनादिविषयम्। यत्तु पभोगेन विकारप्रापितं सदोषमपि तत् परीक्षाकालमध्येऽपि न प्रतिदेयमित्याह नारदः "परिभुक्तन्तु यद्वासः क्लिष्टरूपं मलीमसम्। सदोषमपि तत् क्रीतं विक्रेतुर्न भवेत्पुनरिति"। वासोग्रहणमुपलक्षणमिति मदनरत्ने। वासोविषयतैवास्येति माधवीये। पण्यानां देशकाले उपचयापचयौ ज्ञातव्याविल्याह नारदः "क्षयं वृद्धिञ्च जानीयात्पण्यानामागमन्तथेति"। अर्घादिपण्यानामचिरात् कालेऽस्मिन्देशे च क्षयं वृद्धिं वा जानीयात्तथागमं कुलीनत्वादिप्राप्त्यर्थम् उत्पादकजनस्थ्यादिकञ्च जानीयादित्यर्थः। क्रयकाले मूल्यक्षयवृद्धिदोषदर्शनमन्तरेण क्रीतविक्रीतयोः प्रत्यर्पणे पुनर्प्रणे दण्डमाह याज्ञवल्क्यः "वृद्धिं क्षयं वा वणिजा पण्यानामविजानता। क्रीत्वा नानुशयः कार्य्यः कुर्वन् षड्भागदण्डभागिति"। वृद्धिं मूल्यवृद्धिम् अविजानता क्रेत्रा एवं मूल्यक्षयमविजानता विक्रेत्रेत्यर्थः। परीक्षाकालातिक्रमेण प्रत्यर्पणे दण्डमाह मनुः "परेण तु दशाहस्य न दद्यान्नापि दापयेत्। आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षडिति"। दशाहग्रहणं परीक्षाकालस्य पूर्व्वोक्तस्योपलक्षणम्। सर्वमेतत्परिभाषणाकृते परिभाषणं तु तदनुसारेणैव प्रतिदानं तदभावादिकं मन्तव्यम्"। क्रयानुशयोऽप्यत्र।

क्रुङ् पुंस्त्री० क्रुञ्च—क्विन् "दृग्गित्यादि०"पा०नि० नलोपाभावः(कोँचबक)१बकभेदे अमरः स्त्रियां टाप्। २हंसे च "अद्भ्यः क्षीरं व्यपिबत् क्रुङ्ङाङ्गिरसो धिया। ऋतेन सत्यमिन्द्रियम्"यजु०१९।७२ "आङ्गिरसः अङ्गानां रसः प्राणोयथा क्रुङ् हंसोभूत्वा धिया प्रज्ञया अद्भ्यः सकाशात् क्षीरं दुग्धमपिबत् पिबति संसृष्टाभ्यां क्षीरोदकाभ्यां क्षीरमेव हंसः पिबतीति जातिस्वभावः" वेददी०।

क्रुञ्च पुंस्त्री० क्रुञ्च—अच्। (कोँचबक) बकभेदे अमरः "वायवे बलाका इन्द्राग्निभ्यां क्रुञ्चान्" यजु० २४।२२ "कर्णविङ्क्तो लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा, वाचे क्रुञ्चः" यजु० २४।३१ स्त्रियां संयोगोपधत्वात् टाप्। पुंयोगे तु अजा०टाप्। टाबन्तः। २वीणाभेदे स्त्री मल्ल-

रत्ना०। ततः चतुरर्थ्यां नडादि० छ कुक्चागमश्च। क्रुञ्चकीय तत्सन्निकृष्टदेशादौ। क्रुञ्चा वीणाख्यस्य क्रुञ्चा वक्री अस्त्यत्र वा मतुप् यवादि० न मस्य वः। क्रुञ्चावत् तद्युक्ते त्रि० १क्रौञ्चपर्व्वते पु० हेमच०। स्वार्थे अण्। क्रौञ्च तन्नामख्याते पर्व्वते क्रौञ्चदारणः। बकभेदे च "ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुदर्शनम्" "यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्" रामा० आ० २स०। स्त्रियां तु अणन्तत्वात् ङीप्। "निशम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत्" रामा० आ० २स०

क्रुड निमज्जने घनीभावे च तु० कुटा० प० अक० सेट्। क्रुडति अक्रुडीत चुक्रोड—क्रोडः।

क्रुथ हिंसने क्र्या० प० सक० सेट् चान्द्राः। क्रुथ्नाति अक्रोथीत् चुक्रोथ। क्रोथः।

क्रुध कोपे दिवा० पर० अक० सोपसर्गः सक० अनिट्। क्रुध्यति अत्यभिक्रुध्यति ऋदित् अक्रुधत्। चुक्रोध-क्रोद्धा क्रोत्स्यति। क्रोद्धव्यम् क्रोध्यम् क्रोधनीयम् क्रोद्धा क्रोधी क्रुद्धः। क्रुध्यन् क्रोधः। क्रुद्धा संक्रुध्य" "चुक्रोध पुत्रभादकः" भा० आ०१५१अ० "द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः" भाग०६,४,५, अत्र तङ् आर्षः प्रक्रुद्धादौ चानश् वा। "क्रुध्यन् कुलं धक्ष्यति विप्रवह्निः" भट्टिः "क्रोधं विभो! संहर संहरेति" कुमा०। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा० कोपविषयस्य संप्रदानता। अस्मै क्रुध्यति। "क्रुधद्रुहोरुपसृष्टयोः कर्म्म" पा० सोपसर्गस्य तस्य सम्प्रदानस्य कर्म्मता "क्रुध्यन्तं न प्रतिक्रुध्येत्" मनुः। "अत्यभिक्रुध्यति" सि० कौ० अन्याद्युपसर्गात् परस्तु तत्तदुपसर्गद्योत्यार्थयुक्तक्रोधे सक० प्रति+वैपरीत्येन क्रोधने सक० "क्रुध्यन्तं न प्रतिक्रुध्येत्" मनुः

क्रुध् स्त्री क्रुध—सम्प० भावे क्विप्। कोपे कामव्याघात हेतुके चित्तवृत्तिभेदे अमरः "इतिक्रुधाऽऽक्रुश्यत तेन केतकम्" नैष०। हलन्तत्वात् वा टाप् क्रुधा

क्रुधिमिन् त्रि०क्रुध—बा० मिनि कित्। क्रोधयुक्ते "युष्मो वः युधः क्रुधमी मनांसि" ऋ० ७।५६।८

क्रुन्च(ञ्च) कौटिल्ये, अल्पीभावे च अक०पर०सेट्। क्रुञ्चति अक्रुञ्चीत् चुक्रोञ्च। क्रुञ्चः क्विन् क्रुङ् अत्र "चोः कुः" पा० चवर्गान्तत्वेन कुत्वप्राप्तौ दृग्गित्यादिना क्विनं विधाय "क्विन् प्रत्ययस्य कुः"पा० क्विनन्तस्य पृथक् कुत्वविधानात् संयोगान्तलोपात् प्राक् कुः। भावे क्रुच्यते अक्रुञ्चि। केचित् दृश्यादिस्थाने क्रुञ्चामिति निर्द्दिशन्ति यथा क्रुञ्चति क्रौ-

पक्वं सौत्वं धातुमाहुः तन्मते भावे क्रुड्यते इत्येव । एतन्मते क्रुङ् इत्यत्र क्विपि नलोपाभावे न निपातकल्पना

क्रुध्य क्रोधे कोपे च क्र्या॰ पर॰ अक॰ सेट् इत्यायुधः । क्रुध्याति अक्रुध्यीत् चुक्रुध्य अयमपाणिनीयः

क्रुमु त्रि॰ क्रम—उन् वेदे पृषो॰ । सर्व्वत्र क्रमणशीले "क्रुमुर्मी वः शिम्युर्गिरीरमत्" ऋ॰ ५।५२।६। "क्रुमुः सर्व्वत्र क्रमणशीलः" भा॰

क्रुमुक पु॰ क्रम—उक वेदे पृषो॰ । गुवाके "क्रुमुकमपि कुर्य्यात् एषा वा अग्नेः प्रिया तनुः यत्क्रुमुकः" तैत्ति॰५।१०।६।५

क्रुश रोदने अक॰ आह्वाने आक्रोशे च सक॰ भ्वा॰ प॰ अनिट् । क्रोशति अक्रुक्षत् । चुक्रोश क्रोक्ष्यति । क्रोष्टा क्रुष्टः क्रोशन् क्रोशः क्रोशनः क्रोष्टुः । "वसन्नरण्या- न्यां सायमक्रुक्षदिति मन्यते" ऋ॰ १०।१४६।४ "इहेदन्ति मन्दिरेव मन्दिनेभ्यः क्रोशन्तोऽविदन्नमा मधु" ऋ॰१०।९४।४ "एष क्रोशति दाशरथः शिखी प्रतिकूजति" रामा॰ अयो॰५६अ॰ । कर्म्मणि क्रुश्यते अक्रोशि "इतिक्रुधा- क्रुश्यत तेन केतकम्" नैष॰

अत्याद्युपसर्गात् परस्तु तत्तद्द्योत्यार्थयुक्ते रोदनादौ

अनु+दयायाम् अनुरोदने च सक॰ । अनुक्रोशः (दया) "न तायुमनुक्रोशन्ति क्षितयोभरेषु" ऋ॰ ४।३८।५ "किमनुक्रुश्य वैकल्यमुत्पादयसि मेऽनघ !" भा॰अनु॰५अ॰

आ+अप्रियकथने सक॰। "शतं ब्राह्मणमाक्रुश्य क्षत्रियोदण्डमर्हति" मनुः । "प्रत्याक्रोशेदिहाक्रुष्टः" भा॰ अनु॰ ४५६२श्लो॰ । "आक्रुष्टः सुरुषः सर्व्वं प्रत्याक्रोशेदनन्तरम्" भा॰ व॰ १६१श्लो॰ । "हा प्रिये ! क्वासि गतासि इत्याक्रोशन्नपतत् क्षितौ" रामा॰ आ॰ ८३अ॰

उद्+उच्चैराह्वाने सक॰ "उदक्रोशन् स पाण्डवान्" भा॰ आ॰ ७४८श्लो॰ । उच्चैरोदने च अक॰

क्रुशन् पुंस्त्री क्रुश—कनिप् । शृगाले उज्ज्वल॰ स्त्रियां ङीप् रश्चान्तादेशः क्रुशरी ।[ताप्रिये ३आहूते च त्रि॰ ।

क्रुष्ट न॰क्रुश—भावे क्त । १रोदनरवे। कर्म्मणि क्त । २कथि

क्रूड क्रुडवत् । क्रूडति अक्रूडीत् चुक्रोड "तस्य रेतः परापतत् तदक्षिर्योनिकोपाक्ष्णुहादयता तदक्रूडयत् क्रूडमानं गवि व्यदधत् तदिदं पयः" श्रुतिः ।

क्रूर त्रि॰ कृत—रक् धातोः क्रूः । १निर्दये २कठिने अमरः ३हिंसके ४उष्णे च मेदि॰ । "तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया" रघुः । "तस्मिन्नुपायाः सर्व्वेनः क्रूरे प्रतिहतक्रियाः" कुमा॰। "दुष्कारी बहुदोषः क्रूराचारैरसंश्रयम्" मनुः । तस्य भावः ष्यञ् क्रौर्य्य न॰, तल् क्रूरता स्त्री, त्व क्रूरत्व न॰, निर्दयत्वे हिंसने काठिन्ये उष्णत्वे च । "ओजोऽथ युग्मं विषमः समश्च क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च । चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः" दीपिकोक्ते मेषादिषु मध्ये ५विषमराशौ पु॰ "अर्कोनेन्दर्कसौराराः पापाः सौम्या- स्तथा परे । पापयुक्तोबुधः पापोराहुकेतू च पापदौ" ज्योति॰ उक्ते ६ग्रहभेदे च "यथा दुष्टफला क्रूरास्तथा सौम्याः शुभप्रदाः । क्रूरयुक्तः पुनः सौम्योऽपि यः क्रूरफलप्रदः" "इदन्तु सौम्यक्रूराणां फलं स्थानवशात् समम् । एतदेव फलं विद्धि सौम्यैः क्रूरैर्विपर्य्ययात्" "ग्रहाः सौम्यास्तथा क्रूरा वक्राः शीघ्रोच्चनीचगाः" इति "तिथिराश्यंशनक्षत्रं विद्धं क्रूरग्रहेण यत् । सर्व्वेषु शुभकार्य्येषु वर्ज्जयेत्तत् प्रयत्नतः । न गच्छति विवाहे च यात्रायां न निवर्त्तते । रोगाद्विमुच्यते रोगी वेधवेला- क्षतोद्यमः । रोगकाले भवेद्वेधः क्रूरखेचरसम्भवः" "क्रूरा वक्रा महाक्रूरा" इति च ज्यो॰ त॰ पापग्रहार्थपरतया क्रूरशब्दप्रयोगात् । क्रूरवेधप्रकारस्तु चक्र- शब्दे सर्व्वतोभद्रचक्रे वक्ष्यते । ७रक्तकरवीरे पु॰८श्येन पक्षिणि ९कङ्कपक्षिणि च पुंस्त्री॰ राजनि॰ स्त्रियां जातित्वात् ङीप् । १०रक्तपुनर्नवायां स्त्री राजनि॰

क्रूरकर्म्मन् त्रि॰ क्रूरं हिंसकं कर्म्म यस्य । १हिंसाकर्म्म- कारिणि "क्रूरकर्म्मकृताञ्चैव शतशोगुरुतल्पगः" मनुः । २कटुतुम्बिनीवृक्षे पु॰ राजनि॰ ।

क्रूरकोष्ठ त्रि॰ क्रूरं कठिनं कोष्ठं यस्य । धातुवैषम्यकृते बद्धकोष्ठावयवे । "क्रूरकोष्ठस्याग्नितीक्ष्णाग्नेः स्नेहमौषधमल्प- गुणं वा भक्तवत् पाकमुपैति तत्र वातदोषा दोषा यथाका- लमनिर्ह्रियमाणा व्याधिं बलविभ्रममापादयन्ति" सुश्रु॰ ।

क्रूरगन्ध पु॰ क्रूरः उग्रोगन्धोऽस्य । १गन्धके राजनि॰ २तीक्ष्णगन्धमात्रे त्रि॰ क्रूरः गन्धएकदेशोऽस्याः टाप् । कन्थारीवृक्षे तीक्ष्णकण्टकायाम् राजनि॰ ।

क्रूरदृश् त्रि॰क्रूरा दृग् यस्य, क्रूरं पश्यति दृश—क्विन् २त॰ ब॰ वा । १पिशुने खले २शनैश्चरग्रहे पु॰ मेदि॰ । ३मङ्गलग्रहे "आरोवक्रः क्रूरदृक् चावनेयः" ज्यो॰त॰ । कर्म्म॰। नील॰ ता॰ उक्ते स्थानविशेषस्थितानां ग्रहाणां स्थानविशेषे ४शुभाख्यदृष्टौ रिपुदृष्टौ स्त्री । २५५पृ॰ अरिशब्दे विवृतिः । क्रूरस्य ग्रहविशेषस्य दृक् । ५पापग्रहदृष्टौ स्त्री ।

क्रूरधूर्त पु० क्रूरः क्रूरत्वात् सन्तुष्टये धूर्त्तः । कृष्णधत्तूरके राजनि०

क्रूरप्रसादन त्रि० क्रूरमपि प्रसादयति प्र+सद+णिच्—ल्यु । भक्ते सेवके शब्दचि० । [राजनि० स्त्रियां ङीप् ।

क्रूररावित् पुंस्त्री० क्रूरशब्दं रौति रु-णिनि । द्रोणकाके

क्रूरलोचन पु० क्रूरं लोचनमस्य । शनिग्रहे हारा० तद्दृष्टेः हिंसकत्वात् तस्य तथात्वम् । यथा च तद्दृष्ट्या घातकत्वं तथा द्रुमाननशब्दे ६८१पृ० उक्तम्

क्रूराकृति त्रि० क्रूरा आकृतिर्यस्य । १कठिनमूर्त्तिके २रावणे पु० शब्दमा० । कर्म० । ३कठिनायां मूर्त्तौ स्त्री

क्रेङ्कित न० क्रेङ्कित्यव्यक्तं शब्दं करोति णिच्—भावे क्त । क्रेङ्कित्यव्यक्तशब्दभाषणे "निहन्यमाना चक्रेषु चक्रीक्रेङ्कितभाषणैः" काशीख०

क्रेणि त्रि० क्री—नि । क्रेतरि—शस्यक्रेणिः उज्ज्वलद०

क्रेय त्रि० क्री—कर्म्मणि यत् । क्रेतव्ये अमरः

क्रैडिन त्रि० क्रीडी मरुत् देवताऽस्य अण् वेदे नि० नलोपाभावः । क्रीडिदैवत्ये साकमेधीये तृतीयाहे प्रातःसवनिके सप्तकपालाग्निसम्पे हविषि । "सिन्नाग्नेयान्यस्य क्रैडिनं हविः सिन्नौ हि क्रीडतीवायमेवावाङ् प्राणः" शत० ११,५,२,४ "सप्तकौ शिक्ष्यं चेति क्रीणि सिन्नानि" भा० "तृतीयेऽहन्युपांश्वन्तर्यामौ हुत्वा पौर्णादर्व्यं प्रातःसवनिकेषु क्रैडिनम्" आश्व० श्रौ० ८।२।१५ तद्द्रव्यमधिकृत्य इष्टिः क । क्रैडिनीया इष्टिभेदे सा च इष्टिः कात्या० श्रौ० ५,७,१ सूत्रादौ दर्शिता । तस्याः पद्धतिश्च संक्षेपेण कर्कभाष्ये दर्शिता यथा

"अथ क्रैडिनीया द्विहविष्केष्टिरुच्यते तत्र मरुद्भ्यः क्रीडिभ्यः सप्तकपालः, अदित्यै चरुः, इमे हविषी समानतन्त्रे भवतः प्रतीच्युद्धरणपक्षे क्रैडिन्यादित्येष्ट्यर्थमिच्छ उद्धरणे क्रैडिन्यादित्येष्ट्यामहं यक्ष्ये इति। चरणे पात्रासादने सप्तकपालानि एका चरुस्थाली, दक्षिणा अन्वाहार्यः शतावदानामन्तरम्, मेक्षणम् विंशतिरिध्मकाष्ठानि पुरोडाशपात्र्येका अन्यत्सर्वं प्रकृतिवत्। प्रकरणे मरुद्भ्यः क्रीडिभ्यो जुष्टम्, अदित्यै जुष्टम्। प्रोक्षणे मरुद्भ्यः क्रीडिभ्यस्त्वा जुष्टम् अदित्यै त्वा जुष्टम्। नानाबीजपक्षे तद्धर्मा उक्ताः एकबीजपक्षे करणान्ते विभज्यावलम्बः इदं मरुतां क्रीडिनाम्, इदमदित्याः। प्रायदाने मरुतः क्रीडिनो गच्छ, अदितिं गच्छ, सप्रदेन यजुषेत्यवधाने। उत्तमप्रयाजे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इत्यादि। प्रधानयागे मरुद्भ्यः क्रीडिभ्योऽनुब्रूहि मरुतः क्रीडिनो यज इदं मरुद्भ्यः क्रीडिभ्यः, अदित्या अनुब्रूहि अदितिं यज इदमदित्यै, मेक्षणेन चरोरवदानम् । स्विष्टकृदिडं पुरोडाशस्य प्राशित्रेडाव्यतिरिक्तं न भवति चरोस्तु सर्वं भवत्येव । व्यूहने मरुतां क्रीडिनामदित्या उज्जितिम् मरुतः क्रीडिनोऽदितिस्तमपनुदन्तु । प्रस्तरहोमे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इति । अन्यत्कर्मापवर्गान्तं प्रकृतिवत् इति"

क्रैव्य पु० क्रिवीणां पञ्चालानां राजा वा० ञ्य । क्रिविदेश राजभेदे क्रिविशब्दे उदा०

क्रोञ्च पु० क्रुञ्च अच् वा० गुणः । "कैलासे धनदावासे क्रौञ्चः क्रोञ्चोऽभिधीयते" इति हलायुधरत्नमालोक्ते क्रौञ्चपर्वते क्रोञ्चदारणः कार्त्तिकेयः इति रायमुकुटः

क्रोड पुंस्त्री० क्रुड—घनीभावे संज्ञायां घञ् । १शूकरे "क्रोडकुलदंष्ट्र्यमाणभद्रमुस्तास्वामोदः" काद० "नदी सैवालदिग्धाङ्गं हारमुत्तुजटाधरम् । सम्भौ शशकमेगात्तैः क्रोडैश्चित्रैरिवार्पितम्" भा० अनु० ५० अ० । २भुजयोरन्तरे (कोल) न०स्त्री० अमरः "कुपितकपिकपोलक्रोडताम्रस्तमांसि" उद्भटः ३वृक्षकोटरे "हा हा हन्त तथापि जन्मविटपिक्रोडे मनो धावति" उद्भटः । घनीभूते ४वक्षोमध्यभागे पु० "इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्" यजु० २५,८ "क्रोडस्य घनीभूतवक्षोमध्यभागपरता वेददीपे उक्ता । क्रोडं तु वक्षोभुजान्तरे देहांशभेदः । "हृदयं जिह्वां क्रोडं सव्यसक्थि पूर्वनडकं पार्श्वे यकृत् वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि" कात्या० श्रौतसू० ६,७,६ "क्रोडं वक्षोभुजान्तरम्" कर्कः "शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्राश्नाति श्रोणिवर्जम्" कात्या० श्रौतसू० ६,८,१२, । ५अश्वानामुरसि ६उत्तरस्थग्रामभेदे शब्दचि० ७वाराहीकन्दे पु० राजनि० ८शनिग्रहे पु० मेदिनिः

क्रोडकन्या क्रोडस्य शूकरस्य कन्येव प्रियत्वात् । वाराहीकन्दे राजनि० । [(वड़ शुलफुडि) राजनि०

क्रोडचूडा स्त्री क्रोडे चूडा यस्याः । महाश्रावणिकाख्ये

क्रोडपत्र न० क्रोडे उपचारात् मध्ये स्थितं पत्रम् ७त० । ग्रन्थलेखने भ्रमात् त्रुटितग्रन्थस्य परिपूरणाय ग्रन्थस्थपत्रयोर्मध्ये चिह्नविशेषेण लिखित्वा स्थापिते पत्रे ।

क्रोडपर्णी क्रोडे कण्टकमध्ये पर्णं यस्याः गौरा० ङीष् । कण्टकारिकायाम् शब्दच०

**क्रोडपाद्** पुंस्त्री क्रोडे पादोऽस्य । कच्छपे हेम० क्रोडाङ्घ्रि-प्रभृतयोऽप्यत्र ।

**क्रोडादि** पु० पाणिन्युक्ते उपसर्जनस्वाङ्गे ङीप्निषेध-निमित्ते शब्दगणे स च गणः "क्रोड नख खुर शाखा उखा शिखा बाल शफ गुद" क्रोडादिराकृतिगणः तेन भग गल घोण इत्यादयोऽपि पाह्याः

**क्रोडी** स्त्री क्रोड+जातौ, गौरा०वा ङीप् । १वराहजाति-स्त्रियां २वाराहीकन्दे च राजनि० ।

**क्रोडीकरण** न०क्रोड+च्वि+कृ–भावे ल्युट् । आलिङ्गने हला०

**क्रोडीमुख** पुंस्त्री क्रोड्याः शूकर्य्यामुखमिव मुखमस्य । गण्डके (गाण्डार) राजनि० स्त्रियां जातित्वात् ङीप् ।

**क्रोडेष्टा** स्त्री क्रोडस्य इष्टा प्रिया । मुस्तके (मुथा) राजनि०

**क्रोथ** पु० क्रुथ–हिंसने भावे घञ् । हनने हेमच०

**क्रोध** पु०क्रुध-भावे घञ् । १परापकाराय चित्तवृत्तिभेदे, परानिष्टाभिलाषेण अनिष्टविषयद्वेषहेतुके चित्तवृत्तिभेदे । क्रोधश्च रौद्ररसस्य स्थायिभावः "रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः" सा० द० "स एव कुतश्चित् प्रतिहतः क्रोध-रूपेण परिणमते स च रजोगुणकार्य्यः "काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" गीतोक्तेः "यस्त्वया दृष्टो हेतुरेष काम एव । ननु क्रोधोऽपि पूर्वं त्वयोक्तः "इन्द्रियस्येन्द्रियस्यार्थे" इत्यत्र, सत्यं नासौ ततः पृथक् किन्तु क्रोधोऽप्ययमेव, काम एव हि केन-चित् प्रतिहतः क्रोधात्मना परिणमते । पूर्व्वं पृथक्त्वेनो-क्तोऽपि क्रोधः कामज एवेत्यभिप्रायेणोक्तत्वोच्यते रजोगुण-णात् समुद्भवतीति तथा" श्रीधरः । तस्य कामजत्वमपि "सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते" गीता-यामुक्तम् । तत्कार्य्याणि उक्तानि "न कर्म्म क्रोधान्धः प्रभवति विधातुं रणमृते" "अन्धीकरोति भुवनं बधिरीकरोति धीरं सचेतनमचेतनतां नयेत् क्रुत् । कृत्यं न पश्यति न-चात्महितं शृणोति धीमानधीतमपि न प्रतिसन्दधाति" नीतिशा० "क्षमैव क्रोधविजये समर्थेति विवेकिनः । क्रोधः कार्य्यविभङ्गाय तस्मात्तं क्षमया जयेत्" शकुनशा० स च रुद्रमध्याधिमात्रभेदेन त्रिधेति पा० साधन पादे ३४सू० भा० स्थितम् "क्रोधं विभो ! संहर संहरेति" कुमा० । "क्रोधे चाप्लगणः शरे दशमुखः पाणौ प्रलम्बासुरः" सा० द० । "क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तक-स्यान्तकोऽहम्" वेणी० । "धिक्सख्य जगत्सर्व्वं व्याकुलं समुदाहृतम् । जनानां जायते भद्रे ! क्रोधे क्रोधः पर-मारम्" इत्युक्तलक्षणे षष्टिसंवत्सरान्तर्गते अष्टत्रिंशत्तमे २वर्षभेदे पु० ।

**क्रोधकृत्** त्रि०क्रोधं करोति कृ–क्विप् । १क्रोधकारिणि २पर-मेश्वरे पु० "क्रोधहा क्रोधकृत् कर्त्ता विश्वबाहुर्महीधरः" विष्णुसं० असाधून् प्रति क्रोधकर्तृत्वात् तस्य तथात्वम् "श्रुति स्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते । आज्ञाच्छेदी मम द्वेषी नरके प्रतिवर्त्तते" इति श्रुतिस्मृत्युदितकर्म्मानाचरणे ईश्वरद्विष्टत्वोक्तेः तस्य तान् प्रति क्रोध-कर्तृत्वम् । तच्च प्राणिनां स्वादृष्टविशेषात् भवति

**क्रोधज** त्रि० क्रोधात् जायते जन–ड ५त० । १क्रोधजाते २मोहे पु० मोहस्य क्रोधजत्वं गीतायामुक्तं यथा "क्रोधात् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः" क्रोधजाते द्विविधव्यसनान्तर्गते व्यसनाष्टके च यथाह मनुः "पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः"

**क्रोधन** क्रुध–युच् । १क्रोधशीले अमरः "यद्रागेण कृतं तदेव कुरुते कैश्चायनिः क्रोधनः" वेणी० "वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः कवि रेव च । खसृमः पितृवर्त्ती च नामभिः कर्म्मभिस्तथा । कौशिकस्य सुता आसन् शिष्याः गर्गस्य भारत !" हरि० २१२ अ० उक्ते गर्गशिष्ये २कौशिक-पुत्रभेदे । "रोगोमरणवृद्धिश्च विरोधोत्सरसङ्कुलम् । क्रोधने विषमं सर्व्वं समाख्यातं हरप्रिये !" इत्युक्तलक्षणे षष्टिसं-वत्सरान्तर्गते अनपष्टितमे ३वर्षभेदे । "असिताङ्गोरुरुश्चण्ड उन्मत्तः क्रोधनस्तथा ।" इति तन्त्रोक्ते ४भैरवभेदे च पु० ।

**क्रोधमूर्च्छित** त्रि० क्रोधेन मूर्च्छितो बहुलीभूतोऽस्य ३त० वा । १अतिकोपने "एवमुक्ता तु पार्थेन उर्व्वशी क्रोधमूर्च्छिता" भा०व० ४६अ० ५न० । २चोरनामगन्धद्रव्ये पु० शब्दर०

**क्रोधवर्द्धन** त्रि० क्रोधं वर्द्धयति वृध–णिच् ल्यु ६त० । १को-पस्य वर्द्धके अनिष्टसूचकवाक्यादौ २असुरभेदे पु० "चन्द्र-हन्ता क्रोधहन्ता क्रोधवर्द्धन एव च" हरि० २६३अ० असुरकथने । स एव भारतयुद्धकाले दण्डधारनृपत्वेनाविर्भूतः यथा "क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकीर्त्तितः । दण्डधार इति ख्यातः सोऽभवन्मनुजर्षभः" भा० आ०६७अ० अंशावतारे

**क्रोधहन्** पु० क्रोधं हन्ति हन्–क्विप् । १विष्णौ "क्रोधहा क्रोधकृत् कर्त्ता विश्वबाहुर्महीधरः" विष्णुसं० "साधूनां क्रोधं हन्तीति क्रोधहा" भा० । २कोपघातके त्रि०

**क्रोधहन्तृ** त्रि० क्रोधं हन्ति हन–तृच् ६त० । १कोपघातके

२असुरभेदे पु० स च हस्त्यासुरस्यावरजः। “क्रोधहन्तेति यस्तस्य (वृत्रस्य) बभूवावरजोऽसुरः। दत्तु कृष्यभिविख्यातः स आसीन्नृपतिः क्षितौ” भा० आ० ६७०। ३असुरभेदे पु० क्रोधवर्द्धनशब्दे दृश्यम्

क्रोधसम्भव त्रि० सम्भवत्यस्मात् सम्+भू—अपादाने अप् क्रोधः सम्भवोऽस्य। कोपजाते “क्रोधात् भवति संमोहः” गीता०भावे अप् ६त०। २कोपोत्पत्तौ “मार्जारमूषिकासर्पा आक्रुष्टे क्रोधसम्भवे” क्रोधसम्भवे क्रोधोत्पत्तौ” आ० त० रघुनन्दनः। [ बलो निद्राविहारी” सुश्रुतः

क्रोधालु त्रि० क्रुध—बा० आलुच्। कोपशीले “क्रोधालुर्विपुल

क्रोधिन् त्रि० क्रुध—णिनि। कोपयुक्ते मारुतप्रकृतेरेव तथात्वं भवति यथाह सुश्रुतः

“सप्त प्रकृतयो भवन्ति। दोषैः पृथक्१द्विशः३समस्तैश्च?। शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः। प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु। तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मात्सर्य्यनार्य्यो गान्धर्व्वचित्तः स्फुटितकरचरणोऽल्परूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति। अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी। द्रुतगतिरटनोऽनवस्थितात्मा वियदपि गच्छति सम्भ्रमेण सुप्तः। अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसञ्चयमित्रः। किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेव मनुष्यः”।

क्रोश पु० क्रुश—भावे घञ्। १रोदने २आह्वाने च। क्रोशति यतः अपादाने घञ्। “हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषाम्”लीला०वं०उक्ते(दं०००स हस्रद्वयपरिमिते अध्वपरिमाणे “चतुर्हस्तो भवेद्दण्डो नालिका तद्युगेन च। क्रोशोऽनुः सहस्रेण गव्यूतिश्च चतुर्गुणा” हेमा०दा०भाकं० पु० उक्तेः. “गव्यूतिः स्त्री क्रोशयुगम्” अमरोक्तेश्च तस्य गव्यूतेरर्द्धमानता प्रतीयते हेमाद्रि० दा० आदित्य पुराणे च “धनुःसहस्रे द्वे चापि गव्यूतिरुपदिश्यते” इत्युक्तः तु गव्यूतेर्द्विसहस्रधनुर्मितत्वात् तदर्द्धत्वेन चतुःसहस्रहस्तमितत्वमपि क्रोशस्य कार्य्यविशेषे व्यज्यते इति भेदः। ३सङ्केते “दशदण्डे तु या पूजा तत्सर्व्वं सञ्चयं भवेत्। एके क्रोशे महेशानि ! तत्सर्व्वं भक्ततोपमम्। सप्तमे क्रोशके देवि ! दुःखतुल्यं न संशयः। अतःपरं महेशानि। विषतुल्यं न संशयः” इति शक्तिस० त० ६पटले। “क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा” रघुः

क्रोशताल पु० क्रोशं व्याप्य तालः शब्दोऽस्य। ढक्कायां हारा०

क्रोशध्वनि पु० क्रोशं व्याप्य ध्वनिरस्य। ढक्कायां हारा०

क्रोशयुग न० ६त०। क्रोशद्वयमिते गव्यूतौ अमरः

क्रोशिन् त्रि०क्रुश—णिनि।' शब्दकारके उपमानपूर्व्वकतया समासे क्रोशिनि परे पूर्व्वपदस्याद्युदात्तता। उष्ट्रक्रोशी

क्रोष्टु पुंस्त्री क्रुश—तुन्। १शृगाले अमरः अस्य असंबुद्धौ सर्व्वनामस्थाने परे नित्यं तृतीयादावचि वा, स्त्रियां तु नित्यं तृज्वत्। क्रोष्टा क्रोष्टारौ हे क्रोष्टो!। क्रोष्टून्। क्रोष्ट्रा क्रोष्टुना क्रोष्टुभ्यामित्यादि स्त्रियां ङीप् क्रोष्ट्री। “क्रोष्टा मायोरिन्द्रस्य गौरमृगः” यजु०२४,३२ “ग्राहु नस्य गुहां शून्यां नीचः क्रोष्टाऽभिमर्दति” भा०आ० २१३अ० २यदुवंश्ये नृपभेदे पु०। “क्रोष्टोस्तु शृणु राजेन्द्र ! वंशमुत्तममव्ययम्। यदोर्वंशधरस्याथ यज्वनः पुण्यकर्म्मणः। क्रोष्टोर्वंशं हि श्रुत्वेमं सर्व्वपापैः प्रमुच्यते। यस्यान्ववायजो विष्णुर्हरिर्वृष्णिकुलोद्वहः” “गान्धारी चैव माद्री च क्रोष्टोर्भार्य्ये बभूवतुः” हरि०३५अ०स्वार्थे क। शृगाले “क्रोष्टुकहीपियदनैकवर्णं शुसंसयथा” भा० आ०१४०अ०। क्रोष्टुकपुच्छिका। क्रोष्टुर्गोत्रापत्यम् कुञ्जा० च्फञ् क्रोष्टुः क्रोष्टस्य। क्रौष्टायन ततः स्वार्थे अस्त्रियां ञ्यः। क्रौष्टायन्य तद्गोत्रापत्ये पुंसि स्त्रियान्तु न ञ्यः। जातित्वात् ङीष् क्रौष्टायनी।

क्रोष्टुकपुच्छिका स्त्री क्रोष्टुकस्य शृगालस्य पुच्छमिव पुष्पमस्त्यस्य ठन्। १पृश्निपर्ण्याम् (चाकुलिया) (रामवासक) इत्यमरटीकायां स्वामी २गोलोमिकायाम् राजनि०

क्रोष्टुकमेखला स्त्री क्रोष्टुकस्य मेखलेवाकृतिरस्याः अच्। पृश्निपर्ण्यां (चाकुलिया) रत्नमा०

क्रोष्टुकर्ण्ण पु०। ग्रामभेदे सोऽभिजनोऽस्य तक्षशिला० अञ्। क्रौष्टुकर्ण्ण पित्रादिक्रमेण तद्ग्रामवासिनि स्त्रियां ङीप्

क्रोष्टुकशिरस् न० “वातशोणितजःशोफः जानुमध्ये महारुजः। शिरःक्रोष्टुकपूर्वन्तु स्थूलं क्रोष्टुकमूर्द्धवत्” सुश्रुतोक्ते वातजे रोगभेदे। क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु इत्यादि” “अष्टमी विश्वाची क्रोष्टुकशिरःखञ्जेत्यादि सुश्रु०

क्रोष्टुपाद पु० ऋषिभेदे तस्य गोत्रापत्यम् इञ्। क्रौष्टुपादि तद्गोत्रापत्ये अस्त्रियां बहुत्वे यस्का०तस्य लुक्। क्रोष्टुपादाः स्त्रियान्तु क्रौष्टुपाद्यः। एवं क्रोष्टुमान, क्रोष्टुमायशब्दौ ऋषिभेदयोः तदपत्ये इञ् बहुषु अस्त्रियाम् यस्कादि० तस्य लुक्।

क्रोष्टुपुच्छिका स्त्री क्रोष्टुःपुच्छमिवाकृतिरस्याः ठन्। पृश्निपर्ण्याम् (चाकुलिया) रत्नमा०

**क्रोष्टुपुच्छी** स्त्री क्रोष्टोः पुच्छमिव पुच्छमस्याः ङीप्। पृश्निपर्ण्याम् (चाकुलिया) शब्दरत्ना०

**क्रोष्टुफल** पु० क्रोष्टोः प्रियं फलमस्य। इङ्गुदीवृक्षे राजनि०

**क्रोष्टुविन्ना** स्त्री क्रोष्टुना विन्ना प्राप्ता पुच्छाकारेण ३त०। पृश्निपर्ण्याम् (चाकुलिया) अमरः। (विरालकाञि) २वृक्षे भरतः।

**क्रोष्टेष्ट** पु० क्रोष्टुः प्रिय इष्टः पृषो०। श्वेतेक्षौ राजनि०

**क्रोष्ट्री** स्त्री क्रोष्टुजातिस्त्री क्रोष्टुस्तृज्वत् ऋदन्तत्वात् ङीप्। १शृगालजातिस्त्रियाम् तत्प्रियत्वात् २श्वेतभूमिकुष्माण्डे अमरः। ३कृष्णविदार्य्यां ४लाङ्गल्याम् च मेदि०

**क्रौञ्च** पुंस्त्री० कुञ्च+स्वार्थे प्रज्ञा० अण्। (कौँचवक) वकभेदे स्त्रियाम् अदन्तत्वात् ङीप्। "निशम्य रुदतीं क्रौञ्चीम्" रामा०बा०२स०। स्त्रियां टाप् इति वदन् भरतस्त्वन्यः। अजादिषु क्रुञ्चशब्दस्यैव पाठात् तदप्रवृत्तेः। २हिमवतः पौत्रे पर्वतभेदे "धनुर्विकृष्य व्यसृजद्बाणान् श्वेते महागिरौ। बिभेद स (कार्त्तिकेयः) शरैः शैलं क्रौञ्चं हिमवतः सुतम्" भा० व० २२४अ०। तस्य हिमवत्पौत्रत्वेऽपि सन्तानाभिप्रायेण सुतत्वोक्तिः। तस्य हिमवत्पुत्रमैनाकपुत्रत्वं हरिवं० १८अ० उक्तं यथा "एतेषां मानसी कन्या मेना नाम महागिरेः। पत्नी हिमवतः श्रेष्ठा यस्यां मैनाक उच्यते। मैनाकस्य सुतः श्रीमान् क्रौञ्चोनाम महागिरिः। पर्वतप्रवरः पत्नी नानारत्नसमन्वितः"। ३द्वीपभेदे ४असुरभेदे। "क्रौञ्चे (द्वीपे) क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे। स्कन्देन युद्ध्वा सुचिरं चित्रमायी सुमायिना। स शैलस्तस्य दैत्यस्य ख्यातश्चिह्नेन कर्म्मणा। केतुतामगमत्तस्य नाम्ना क्रौञ्चः स उच्यते" खगेन्द्रसंहिता। क्रौञ्चदैत्यश्च मयदानवपुत्रः यथाह हरि० ४७अ० "मयो ददर्श मायावी दानवान्दितिदानवः। स शिलाजालविततां गण्डशैलाट्टहासिनीम्। पादपोत्कटकूटाग्रां कन्दराकीर्णकाननाम्। सिंहव्याघ्रगणाकीर्णां नदन्तीं दैत्ययूथपैः। ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमाम्। निर्म्मितां स्वेन पुत्रेण क्रौञ्चेन दिवि कामगाम्। प्रथितां पार्व्वतीं मायां सृजते स समन्ततः"। "घनसुखचरितमिव श्रूयमाणक्रौञ्चवनिताप्रलापम्, काद०। ५कुररीखगे राजनि०। ६अर्हतां ध्वजभेदे ७राक्षसभेदे च पु०हेम०। क्रौञ्चद्वीपस्थानञ्च "भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः" इत्युपक्रमे जम्बुद्वीपमुक्त्वा। "शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च। द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति" सि०शि० उक्तम्। तद्वृत्तिः विष्णुपु० "घृतोदश्च समुद्रोऽपि क्रौञ्चद्वीपेन संवृतः। क्रौञ्चद्वीपो महाभाग। श्रूयताञ्चापरो महान्। कुशद्वीपस्य विस्तारात् द्विगुणो यस्य विस्तरः। क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः। तन्नामानि च वर्षाणि तेषाञ्चक्रे महीपतिः। कुशलो मन्दगश्चोष्णः पीवरोऽथान्धकारकः। मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता मुने!। तत्रापि देवगन्धर्व्वसेविताः सुमनोरमाः। वर्षाचला महाबुद्धे! तेषां नामानि मे शृणु। क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः। चतुर्थो रत्नशैलश्च स्वाहिनी हयसन्निभः। दिवावृत् पञ्चमश्चैव तथान्यः पुण्डरीकवान्। दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम्। द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा। वर्षेष्वेतेषु रम्येषु वर्षशैलवरेषु च। निवसन्ति निरातङ्काः सह देवगणैः प्रजाः। पुष्कराः पुष्कला धन्यास्तिष्याख्याश्च महामुने!। ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्चानुक्रमोदिताः। तैस्तत्र नद्यो मैत्रेय! याः पीयन्ते शृणुष्व ताः। सप्त प्रधानाः शतशस्तथान्याः क्षुद्रनिम्नगाः। गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा। ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः। तत्रापि वर्णैर्भगवान् पुष्कराद्यैर्जनार्द्दनः। योगी रुद्रस्वरूपस्तु इज्यते यज्ञसन्निधौ। क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च। आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः। दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः। क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणेन महामते!"। "तथा बहिः क्रौञ्चद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परित उपक्लृप्तः। वृतो यथा कुशद्वीपो घृतोदेन। यस्मिन् क्रौञ्चो नाम पर्वतराजो द्वीपनामनिर्वर्त्तक आस्ते। योऽसौ गुहप्रहरणोन्मथितनितम्बकुञ्जोऽपि क्षीरोदेनाभिषिच्यमानो भगवता वरुणेनाभिगुप्तो विभयो बभूव। तस्मिन्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिः स्वे द्वीपे वर्षाणि सप्त विभज्य तेषु पुत्रनामसु सप्त रिक्थादान् वर्षपान्निवेश्य स्वयं भगवतः परमकल्याणयशस आत्मभूतस्य हरेश्चरणारविन्दमुपजगाम। आमो मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो लोहितार्णो वनस्पतिरिति घृतपृष्ठसुताः। तेषां वर्षगिरयः सप्त सप्तैव नद्यश्चाभिख्याताः। शुक्लो वर्द्धमानो भोजन उपबर्हणो नन्दो नन्दनः सर्वतोभद्र इति। अभया

कल्पतीर्था आर्ष्टिका तीर्थवती पवित्रवती शुक्तेति । यासामपः पवित्राणामवधुपयुञ्जानाः पुरुषवर्षभद्रविष्य-देवकसंज्ञावर्षपुरुषा आपोमयं देवमपांपूर्णेनाञ्जलिना यजन्ते" भाग० ५,२०,१२, अन्यत्रोक्तं कल्पभेदाद्विरुद्धम् । ८साममेदे न० "क्रौञ्चानि भवन्ति" श्रुतिः तच्च साम गेयगाने १५प्र० २यार्द्धे ८,९गानम् । क्रौञ्चपर्वतश्च द्विविधः; विष्णु-पुराणोक्तक्रौञ्चद्वीपान्तर्गतः श्वेतगिरेः पश्चिमदिक्स्थः हिमवत्पौत्रकश्च तमेव प्रकृत्य "प्रालेयाद्रेरुपतटमति-क्रम्य तांस्तान् विशेषान् हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्" मेघदूते वर्णितम्" । क्रौञ्चादिव हंस-निवहो निर्ज्जगाम गुणगणः" काद०

क्रौञ्चदारण पु० क्रौञ्चं पर्वतं दारयति दृ–णिच् ल्यु । १कार्त्तिकेये अमरः तद्दारणकथा क्रौञ्चशब्दे भा०व०२२४अ० याकस्था । २परशुरामे च तत्कथा क्रौञ्चरन्ध्रशब्दे दृश्या

क्रौञ्चपदा "क्रौञ्चपदा भौ नभौ नननाः नृगाविगुरुरयदग्रुनि विरतिरिह भवेत्" वृ० र० उक्ते पञ्चविंशत्यक्षरपादके छन्दोभेदे

क्रौञ्चपदी स्त्री भारतोक्ते तीर्थभेदे "धर्मपृष्ठे पयश्चात्र निरविन्दे च पर्व्वते । तृतीयां क्रौञ्चपद्यान्तु ब्रह्महत्यां विशुध्यति" भा० अनु० २५अ०

क्रौञ्चपुर न० यदुवंश्यसारणप्रभृतिनिर्म्मिते पुरभेदे "सारणेनापि विहितं रम्यं क्रौञ्चपुरं महत् । चम्पकाशोकबहुलं विपुलं ताम्रमृत्तिकम् । वनवासीति विख्यातः स्फीतोजन-पदो महान् । पुरस्य तस्य तु श्रीमान् द्रुमैः सर्वर्त्तुकैर्वृतः । हरि० ९५अ० "ततः सह्याचलयुतं महार्य्यं चाहमव्ययम् । आत्मद्वितीयः श्रीमन्तं प्रवेक्ष्ये दक्षिणापथम् । करवीर पुरञ्चैव रम्यं क्रौञ्चपुरं तथा" ९६अ० "तां (खट्वाङ्गीम्) तीर्त्वा निम्नगां तत्र तांश्च दृष्ट्वा तपोधनान् । रम्यं क्रौञ्चपुरं नाम गमिष्यामः पुरोत्तमम्" ९६अ०

क्रौञ्चबन्धम् अव्य० क्रौञ्चमिव बद्धा "बन्धः संज्ञायाम्" पा० णमुल् कषादिषु यथाविध्यनुप्रयोगः । क्रौञ्चमिव बद्धा बद्ध इत्यर्थे

क्रौञ्चरन्ध्र न० क्रौञ्चस्य रन्ध्रम् । मानसस्थहंसनिर्गममार्गे क्रौञ्चपर्वतस्थे रन्ध्रे "हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्" मेघ० । "मानसस्थायिनो हंसाः क्रौञ्चरन्ध्रेण सञ्चरन्ते इत्यागमः" मल्लि० क्रौञ्चादिव हंसनिवहो निर्ज्जगाम गुणगणः" काद०। तच्च रन्ध्रं परशुरामेण कृतं यथा मेघदूतव्याख्याने मल्लिनाथेनोक्तं "पुरा किल भगवतो देवात् धूर्ज्जटेः धनुर्वेदमिच्छन् अधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्द्धया क्रौञ्चं शिख-रिणम् अतिनिशितविशिखसमूहेन हेलया समुपगच्छ भेदं भित्त्वा ततः क्रौञ्चभेदादेव सद्यःसमुज्जृम्भते कस्मिन्नपि यशःक्षीरनिधौ निखिलमपि जगज्जालम् आप्लावितमिति" कथा श्रूयते"।

क्रौञ्चसूदन पु० क्रौञ्चं मयदैत्यसुतं सूदयति सूद–णिच्–ल्यु । कार्त्तिकेये तस्य तथात्वं क्रौञ्चशब्दे स्कान्दसंहितावाक्यात् ज्ञेयम् "स ते स्कन्दः प्रसीदतु" इत्युपक्रमे "रम्यं दिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः" सुश्रुते उक्तम् । क्रौञ्चनिषूदकादयोऽप्यत्र "क्रौञ्चद्वीपमासाद्य सेव्यं क्रौञ्च-निषूदकम् । सरस्वत्यामुपस्पृश्य विमानस्थो विराजते" भा०व० ८४अ०

क्रौञ्चवत् पु० क्रौञ्चाः पक्षिभेदा बाहुल्येन सन्त्यत्र मतुप् मस्य वः । पर्व्वतभेदे "कैलासं क्रौञ्चवन्तं च तथाद्रिं गन्धमादनम्" हरि० २०२अ० । क्रौञ्चयुक्तमात्रे त्रि० स्त्रियां ङीप् ।

क्रौञ्चादन न० अद्यते कर्म्मणि ल्युट् ६त० । १मृणाले २चि-ञ्चोटके (चें चको) ३घेञ्चुलिकायां (घें चु)मेदि० ४पिप्पल्यां शब्दरत्ना० पद्मबीजे स्त्री० राजनि० ङीप् ।

क्रौञ्चाराति पु०क्रौञ्चस्य दैत्यभेदस्यारातिः । १कार्त्तिकेये हला० २परशुरामे च शब्दमाला क्रौञ्चरिपुप्रभृतयोऽप्यत्र ।

क्रौञ्चारण्य न० जनस्थानात् क्रोशत्रयान्तरे दण्डकारण्य पार्श्ववर्त्तिनि वनभेदे "ततः परं जनस्थानात् त्रिक्रोशं गम्य राघवौ । क्रौञ्चारण्यं विविशतुर्गहनं तौ महौ-जसौ" रामा० आर० ६९अ० । "ततः पूर्व्वेण गत्वा च त्रिक्रोशं भ्रातरावुभौ । क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्र-ममन्तिके" तत्रैवोक्तेः तस्य मतङ्गाश्रमात् त्रिक्रोशान्त-रितपश्चिमस्थत्वम् ।

क्रौशशतिक त्रि० क्रोशशतादभिगममर्हति ठञ् । १क्रोश-शतादागन्तरि भिक्षौ । क्रोशशतं गच्छति ठञ् । २क्रोश-शतगन्तरि त्रि० । उभतः स्त्रियां ङीप् ।

क्रौष्टायण्य पुंस्त्री०प्रकृतिप्रकृष्टे लिङ्गविशिष्टस्यापि ग्रहणात् क्रोष्ट्र्या गोत्रापत्यम् कुञ्जा० च्फञ् ततः स्वार्थे ञ्यस्त्रियाम् अत् । क्रौष्टायन्यः क्रोष्टुगोत्रोत्पन्नस्त्रियागोत्रापत्ये । बहुषु यस्का० लुक् । क्रौष्टायनाः तद्गोत्रापत्येषु । ततः अरी-हणा० चतुरर्थ्यां वुञ् । क्रौष्टायनक तत्सन्निकृष्टदेशादौ त्रि० ।

क्रौष्टकि पुंस्त्री०क्रोष्ट्रेव स्वार्थे क तस्यापत्यम् इञ् । १क्रोष्ट-

कर्बुरपक्षे स्त्रियां ङीप् । २ऋषिभेदे पु० । “तत्क्रौ ऋषिशोदाः ? इन्द्र इति क्रौष्टुकिः” निरुक्त० ८,२

क्लथ वधे वा चुरा० उभ०पक्षे भ्वा०प०सेट् घटादि० । क्लथयति ते क्लथति, अचिक्लथत् अक्लाथीत् अक्लथीत् । क्लथयांबभूव आस चकार चक्रे चक्लाथ । मध्ये घृतस्रावणार्थे च । “पौष्णो विष्यन्दमाने मारुतः क्लथन्” यजु० ३९,५, “क्लथनं मध्ये घृतस्रावणं मम”वेददीपः

क्लद रोदने अक० आह्वाने सक० इदित् भ्वा० पर० सेट् । क्लन्दति अक्लन्दीत् । चक्लन्द । क्लन्द्यते

क्लद वैकल्ये दि० आत्म० अक०सेट् घटादि० । क्लदते अक्लदिष्ट चक्लदे । क्लदयति त अचिक्लदत् त ।

क्लद रोदने भ्वा० उभ० इदित् अक० सेट् । क्लन्दति ते अक्लन्दीत् अक्लन्दिष्ट । चक्लन्द चक्लन्दे । क्लन्द्यते “याः क्लन्दास्तमिषीचयो ऽग्नामानो मुहः ताभ्यो गन्धर्वपत्नीभ्योऽप्सराभ्योऽकरं नमः” अथ० २,२,५

क्लप अव्यक्तवाक्ये चुरा० उभ० अक० सेट् घटा० । क्लपयति ते अचिक्लपत् त । क्लपयां बभूव आस चकार चक्रे

क्लम ग्लानौ दिवा०पर०अक०सेट् शमा० । क्लाम्यति अक्लमीत् चक्लाम । उदित् क्लमित्वा क्लान्त्वा । क्लान्तः । घञ् न वृद्धिः क्लमः । क्लम्यते अक्लमि । “क्लमं ययौ कन्दुकलीलयाऽपि या” “अक्लाय सा नियमजं क्लममुत्ससर्ज” कुमा० “न चक्लाम न विव्यथे” भट्टिः “तपः क्लमं साधयितुं य इच्छति” यक्रु०

क्लम ग्लानौ भ्वा० पर० अक० सेट् । क्लमति इरित् अक्लमत् अक्लमीत् चक्लाम । क्लमित्वा । क्लमितः ।

क्लम पु० क्लम–भावे घञ् अवृद्धिः । “योऽनाय सः अमोदेहे प्रवृद्धः श्वासवञ्चितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रवाधकः” । भावप्र० उक्ते श्रमभेदे ।

क्लमथ पु० क्लम-अथच् । आयासे अमरः ।

क्लमिन् त्रि० क्लम-घिनुण् अवृद्धिः । क्लान्तियुक्ते ।

क्लव भये दिवा० आत्म० अक० सेट् घटादि० । क्लव्यते अक्लविष्ट । चक्लवे । क्लवयति । वि-वैकल्ये विक्लवः ।

क्लान्त त्रि० क्लम-क्त । श्रमार्त्ते । [ यक्लदानीम्” माघः ।

क्लान्ति स्त्री क्लम-क्तिन् । परिश्रमे “क्लान्तिच्छिदोपवनवनश्रम-

क्लिद आर्द्रीभावे दिवा० पर० अक० वेट् । क्लिद्यति । इरित् । अक्लिदत्-अक्लेदीत्-अक्लैत्सीत् । चिक्लेद । क्लेदः । क्लिद्यन् क्लेदी । क्लेदयति ते । अचिक्लिदत् त । “तेन क्लिद्यति त्वचः” सुश्रु० । “ऋवेय पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् । योनिः क्लिद्यति नारीणाम्” हितो० । “सुर्वान्ति भूमौ क्लिद्यन्ति वाष्पेण मे स्वपन्ति च” भट्टिः । “कुन्त्याः प्रश्रवसंयुक्तैरश्रुभिः क्लिन्नमुरोऽभवत्” भा० आ० १३५ । “नैनं क्लेदयन्त्यापो न शोषयति मारुतः । अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च” गीता । “रक्तैरचिक्लिदद्भूमिम् सैन्यैरानकवहतैः” भट्टिः । उपसर्गविशेषपूर्वकस्तु तत्तदुपसर्गद्योत्यार्थविशिष्टे क्लेदे ।

क्लिद रोदने इदित् भ्वा० उभ० अक० सेट् । क्लिन्दति ते अक्लिन्दीत् अक्लिन्दिष्ट । चिक्लिन्द चिक्लिन्दे । क्लिन्दितः । परिदेवने शोके सक०आत्म० । क्लिन्दते चैत्रम् सि०कौ० ।

क्लिन्न त्रि० क्लिद कर्त्तरि क्त । आर्द्रे (भिजे) क्लःधातौ दृश्य०

क्लिन्नवर्त्मन् न० “अदजं बाह्यतः शूनमन्तःक्लिन्नं भवत्यपि । कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म तदुच्यते” सुश्रुतोक्ते नेत्रावयवभेदवर्त्माश्रये रोगभेदे ।

क्लिव पु० क्लृप क्लिप् पृषो० । लोके । “ओं क्रतो ! स्मर क्लिवे स्मर कृतं स्मर” यजु० ४०,१५, “क्लृये कल्पाय लोकाय स्मर” माधवः । “कल्पते भोगाय क्लृप् लोकः तस्मै स्मर जपादेश आर्षः छन्दस्यु भयथेति”पा०“पदान्तत्वात्”वेददी०

क्लिश उपतापे दिवा० आ० अक० उपतप्तीकरणे सक० सेट् पा० । क्लिश्यते अक्लेशिष्ट । क्लिशित्वा क्लिष्ट्वा । क्लिशितः क्लिष्टः । अविकल्पमते अयमुभयपदी तेन “क्लिश्यसि हि मेधावी” प्रत्यासन्नमुपारदीधितकरक्लिश्यत्तमोयक्षीति” स्वपाभजो चिक्लिशतुः सखीतौ” भट्टिः साधुः सकर्मकत्वे “इन्द्रियैः कामवत्तैस्तु क्लिश्यते प्राकृतोयथा” रामा० कि० १६,२७, अकर्मकत्वे “क्लिश्यते हि जनः सर्व्वः तस्मात्त्वं पुनः पुनः”भा० व० १३अ० । “चिरं क्लिशित्वा सस्तो वत्” भट्टिः परस्मैपदित्वे “भय: परं क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्” मनुः । “अक्लिष्टप्रभाणि ज्योतींषीव मुखानि वः” कुमा० । “क्लेशः फलेन हि पुनर्नवतां विधत्ते” कुमा० । उपसर्गपूर्व्वकस्तु तत्तदुपसर्गविशेषद्योत्यार्थोपतापे

क्लिश बाधने सक०क्र्या०ऊदित् वेट् । क्लिश्नाति अक्लेशीत् अक्लिक्षत् चिक्लेश । क्लिष्टः । क्लेशः क्लिशित्वा क्लिष्ट्वा । क्लिशितः क्लिष्टः “इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्” कुमा० । “अयं मां सुहृदं सुहृः कौरवाणां यशोहरः । क्लिश्नाति नाहं तत् सोढुं चिरं शक्ष्यामि कौरव !” भा०स० ६७ । “असुरस्तारकोनाम त्वया दत्तवरः प्रभो ! । सुराम्नीय क्लिश्नाति कथमस्य विधीयताम्” भा० आनु० ८५अ० ।

“क्लिश्नन्नवाप्य भुजमध्यमुरःस्थलेन” रघुः। अत्र मल्लिनाथः क्लिश्यन्निति पठित्वा क्लिश्नातिरयं सकर्म्मकः “क्लिश्नाति भुवनत्रयमिति दर्शनादिति व्याचख्यौ। तेन टीकाकृन्मते क्लिश्नन्निति पाठः प्रामाणिक एव।

उपसर्गविशेषात् तत्तदुपसर्गद्योत्यार्थयुक्ते बाधने।

परि+सर्व्वतोबाधने। “परिक्लिश्यमाने” पा०।

**क्लिशित** त्रि० क्लिश–क्त वा इट्। १क्लेशयुक्ते २उपतापिते च

**क्लिष्ट** त्रि० क्लिश-क्त वा इडभावः। १क्लेशयुक्ते २पीडिते च।

३पूर्व्वापरविरुद्धार्थके वाक्ये न० अमरः

**क्लिष्टा** स्त्री क्लिश क्लेशः अस्त्यस्याम् अच्। पातञ्जलोक्ते चित्तवृत्तिभेदे यथा

“वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः” सू०

“क्लेशहेतुकाः कर्म्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः। ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः। क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः। क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति। अक्लिष्टच्छिद्रेषु क्लिष्टा इति। तथाजातीयकाः संस्काराः वृत्तिभिरेव क्रियन्ते संस्कारैश्च वृत्तय इति एवं वृत्तिसंस्कारचक्रमनिशमावर्त्तते तदेवम्भूतं चित्तमवसिताधिकारमात्मकल्पेनावतिष्ठते प्रलयं वा गच्छतीति। ताः क्लिष्टाश्च पञ्चधा वृत्तयः” भा०

“स्यादेतत् पुरुषो हि शक्यो, उपदिश्यते। न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यो, न च सहस्रेणापि पुरुषायुषैरनन्ताः काश्चित् परिगणयितुमसंख्यातांश्च कथं निरोधव्या इत्याशङ्क्य तासामियत्तास्वरूपं तत्प्रकारमपरं सूत्रमवतारयति ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः। वृत्तिस्वरूपोऽवयव्येकः। तस्य प्रमाणादयोऽवयवाः पञ्च ततस्तदवयवाः पञ्चतय्यः पञ्चावयवा वृत्तिर्भवति ताश्च वृत्तयश्चैत्रमैत्रादिचित्तभेदात् बह्व्य इति बहुवचनमुपपन्नम् एतदुक्तं भवति चैत्रो वा मैत्रो वा कालत्रयेऽपि तेषां वृत्तयः पञ्चतय्य एव नाधिका इति। चित्तस्येति चैकवचनं जात्यभिप्रायं चित्तानामिति तु द्रष्टव्यम्। तासामवान्तरविशेषमनुष्ठानोपयोगं दर्शयति। क्लिष्टाऽक्लिष्टा इति। अक्लिष्टा उपादेयाः क्लिष्टा निरोद्धव्यास्ता अपि परेण वैराग्येणेति। अस्य व्याख्यानम्। क्लेशहेतुका इति। क्लेशाः अस्मितादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनान्तास्तथोक्ताः। यद्वा पुरुषार्थं प्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारित्वेन क्लेशेषु प्रवृत्तिः क्लेशः क्लिष्टम् तदासामस्तीति क्लिष्टा इति। यत एव क्लेशोपार्ज्जनार्थमभूवन् प्रवृत्तिरत एव कर्म्माशयप्रचयक्षेत्रीभूताः प्रमाणादिकाः। खल्वयं प्रतिपत्त्यर्थमवसाय तत्र मध्येऽदृष्टो वा कर्म्माशयमाचिनोतीति भवन्ति धर्म्माधर्म्मप्रचयप्रसवभूमयो वृत्तयः क्लिष्टा इति अक्लिष्टा व्याचष्टे ख्यातिविषया इति। विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिस्तया विषयिण्या तद्विषयं सत्त्वपुरुषविवेकमुपलक्षयति तेन सत्त्वपुरुषविवेकविषया यतः अतएव गुणाधिकारविरोधिन्यः कार्य्यकरणं हि गुणानामधिकारो विवेकख्यातिपर्य्यवसानश्च स इति चरिताधिकाराणां तु गुणानामधिकारं विरुन्धन्ति इति अतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः। स्यादेतत् वीतरागजन्मादर्शनात् क्लिष्टवृत्तय एव सर्व्वे प्राणभृतां न च क्लिष्टस्रोतःप्रवाहे भवितुमर्हन्त्यक्लिष्टवृत्तयः। न चामूषां भावेऽपि कार्य्यकारिता विरोधिमध्यपातित्वात्। तस्मात् क्लिष्टानामक्लिष्टाभिर्निरोधस्तासां च वैराग्येण परेणेति मनोरथमात्रमित्यत आह। क्लिष्टप्रवाहेति। आगमानुमानाचार्य्योपदेशपरिशीलनलब्धजन्मनो अभ्यासवैराग्ये क्लिष्टच्छिद्रान्तरे तत्र पतिताः स्वयमक्लिष्टा एव यद्यपि क्लिष्टप्रवाहपतिताः। न खलु शालग्रामे किरातशतसङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति। अक्लिष्टच्छिद्रेष्विति निदर्शनम्। क्लिष्टान्तर्वर्त्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावदभिभवन्तीत्याह तथाजातीयका इति। अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः। तदिदं वृत्तिसंस्कारचक्रमनिशमावर्त्तते आनिरोधसमाधेः तदेवंभूतञ्चित्तं निरोधावस्थं संस्कारशेषं भूत्वात्मकल्पेनावतिष्ठत इत्यापाततः। प्रलयं वा गच्छतीति परमार्थतः। पिण्डीकृत्य सूत्रार्थमाह। ता इति पञ्चधेत्यर्थकथनमात्रं न तु पञ्चवृत्तिव्याख्यानं तयपः प्रकारेऽस्मरणात्। ताः स्वसंज्ञाभिर्वक्ष्यति” विव०

“प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः” सू०

“निर्द्दिश्यते यथावचनं विग्रहश्चात्र द्वन्द्वसमास इतरेतरयोगः। यथाऽनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येत्युक्तेऽपि न दिङ्मोहालातचक्रादिविभ्रमा व्युदस्यन्ते। एवमिहापि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरशङ्कावगाहान व्युदस्येति तन्निराकरणाय वक्तव्यं पञ्चतय्य इति एतावत्य एव वृत्तयो नापराः सन्तीति दर्शितं भवति” विव०

**क्लिष्टि** स्त्री क्लिश-क्तिन्। १क्लेशे २सेवायां च धरणिः।

**क्लीत** पु॰ सुश्रुतोक्ते अल्पप्रकृतिके कीटभेदे । "क्लीतः कनिभरारी च" सुश्रुतः कीटशब्दे विवृतिः

**क्लीतक** न॰ क्लीव-क्विप् नि॰ वलोपः क्लियं तकति हसते अच् । मधूके (यष्टिमधु) । अमरः । "तत्र क्लीतकाश्वमारगुञ्जा सुगन्धमगरककरघाटविद्युद्दिवाविजयानीत्यष्टौ मूलविषाणि" सुश्रुतः । २करञ्जवीजे "आत्मनि मन्त्रान् संनमयेत्" "एकक्लीतकेन" आश्व॰ ब्र॰१,८,७,८, "करञ्जवीजस्य यत्रैकं वीजं तदेकक्लीतकम्" नारा॰ वृ॰ ।

**क्लीतकिका** स्त्री क्लीताद्यागतः कन् क्लीतकः विक्रयः निन्द्यायां ठन् टाप् अत इत्त्वं च: । नीलप्राणिपर्ण्यां अमरः । नीलग्राः विक्रयस्य निनिन्दितत्वमाह मिता॰ आपस्तम्बः "रोमकूपे यदा गच्छेद्रसो नीलग्रास्तु कस्यचित् । त्रिवर्णेषु च सामान्यास्तप्तकृच्छ्रं विशोधनम् । पालनं विक्रयश्चैव तद्वृत्त्या चोपजीवनम् । पतनञ्च भवेद्विप्रे त्रिभिः कृच्छ्रैर्व्यपोहति"

**क्लीतनक** न॰ क्लीतं कीटभेदं नुदति नुद-बा॰ ड संज्ञायां कन् । मधूलिकायाम् अतिरसायाम् राजनि॰ ।

**क्लीब(व)** वैकल्ये अप्रागल्भ्ये च भ्वा॰ आत्म॰ अक॰ सेट् । क्लीब(व)ते अक्लीबि(वि)ष्ट । चिक्लीबे(वे) क्लीबि(वि)त्वा । घा॰ मते अयं पवर्गान्त्यः कविक॰ मते अन्तस्थान्तः । ऋदित् चङि अचिक्लीब(व)त् त ।

**क्लीब(व)** पु॰ न॰ । क्लीब(व)-क । पुंस्त्रीभिन्ने तृतीयप्रकृतौ षण्ढे । स च "न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति । मेढ्रं चोन्मादशुक्राभ्यां हीनः क्लीवःस उच्यते" इति कात्यायनोक्तलक्षणः । स च चतुर्दशविधः नारदेन दर्शितोयथा ।

"चतुर्दशविधः शास्त्रे षण्ढो दृष्टो मनीषिभिः । चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् । निसर्गषण्ढो१ ऽवद्धश्च २पक्षषण्ढ ३स्तथैव च । अभिशापा॰ गुरो ४रोगात् ५देवक्रोधात् ६तथैव च । ईर्ष्याषण्ढ ७स्तथाऽऽसेव्यो ८वातरेता ९मुखेभगः१० । आक्षिप्त ११मोघवीजश्च १२शालीनो १३ऽन्यापति १४स्तथा । तत्राद्यावप्रतीकार्यौ पक्षाख्यं मासमाचरेत् । अनुक्रमात्त्रयस्याथ कालः संवत्सरः स्मृतः । ईर्ष्या षण्ढादयोयेऽन्ये चत्वारः समुदाहृताः । त्यक्तव्यास्ते पतितवत् क्षतयोन्या अपि स्त्रियाः । आक्षिप्तमोघवीजाभ्यां कृतेऽपि पतिकर्मणि । पतिरन्यः स्मृतोनार्य्या वत्सरं तु प्रतीक्ष्य तु । शालीनस्यापि धृष्टस्त्रीसंयोगाद्ध्वंसयेत् ध्वजः । तं हीनवेगमध्यस्त्रीवालाद्याभिरुपाचरेत् । अन्यस्त्रीषु यो मनुष्यः स्यादमनुष्यः स्वयोषिति । लभेत साध्यं भर्त्तानोएतत्कार्य्यं प्रजाक्षते । अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं वीजिनो नराः । क्षेत्रं वीजवते देयं नावीजी क्षेत्रमर्हति" अत्र "नष्टे मृते प्रव्रजिते क्लीबे वा पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" इति क्लीवपतिपरित्यागे प्राप्ते क्लीवस्य चिकित्स्याचिकित्स्यत्वभेदेन द्वैविध्यमुक्त्वा चिकित्स्यस्य कालविशेषपर्य्यन्तं सुश्रुताद्युक्तवाजीकरणादिना उपचर्य्यता अचिकित्स्यस्य तु सर्वथा त्याज्यता दर्शिता । तत्र निसर्गषण्ढः जन्मतो मातापित्रोः समवीर्य्यजातः । अवद्धः छिन्नहीनः छिन्नवृषः । कृतक्लीवश्च तौ द्वौ अप्रतीकार्य्यौ अचिकित्स्यौ । पक्षाख्यं पक्षव्यापकषण्ढत्वं मासमाचरेत् चिकित्सेत् । त्रयस्य गुरोरभिशापरोगदैवकोपजनकक्लैव्यस्य संवत्सरं चिकित्स्यत्वम् । ईर्ष्याषण्ढादयस्तु चत्वारः अचिकित्स्यत्वात् पतिततुल्यत्वेन सर्वथा त्याज्याः न तत्र कालप्रतीक्षा । आक्षिप्तमोघवीजस्य ईषत्क्षेप्ता दर्शनमात्रादिना स्खलितवीर्य्यः मोघवीर्य्यः अपत्योत्पादनायोग्यवीजः एतौ द्वौ वत्सरमात्रं चिकित्स्यौ शालीनस्य तु चिकित्स्यत्वेन अत्याज्यता । अन्यपतेस्तु सर्वथा त्याज्यता । अत्र क्षतयोन्या इति विशेषणात् क्लीवपतित्यागवचनं वाग्दत्ताविषयमिति कल्पनं निरस्तम् । नष्टे मृतेइत्यादिवचनं युगान्तरविषयम् "दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च" इत्यादित्यपुराणे कलिवर्ज्यधर्म्मेष्वभिधानात् इति माधवाचार्य्याः । अन्ये तु कलिधर्म्मप्रकरणे पराशरेण तथाविधानात् स्मृतेः पुराणात् बलवत्त्वेन कलावपि तत्प्रवृत्तिरित्याहुः । साम्प्रदायिकास्तु वेदार्थोपनिबन्धृत्वेन मुनिप्रणीतवाक्यस्यैव स्मृतित्वेन पुराणान्तर्गतधर्म्मविधायकनिषेधवाक्ययोरपि स्मृतित्वात् "द्वैधे बहूनां वचनमिति" न्यायेन बहूनां तथास्मृत्यभावात् शिष्टाचारविरोधाच्च पराशरवाक्यमनादृत्य बहुसम्मत एव पक्ष आदरणीय इत्याहुः । ईर्ष्याषण्ढादिलक्षणं सुश्रुतोक्तम् । सुश्रुते तु नपुंसकोत्पत्तिकारणप्रदर्शनार्थमन्यथा दर्शिता यथा

"पित्रोरत्यल्पवीजत्वादासेक्यः पुरुषो भवेत् । स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् । यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः । स योनिशेफसोर्गन्धमाघ्राय लभते बलम् । स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुं-

यत् प्रवर्त्तते । कुम्भीकः स च विज्ञेय ईर्ष्यकं शृणु चापरम् । दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ईर्ष्यकः स च विज्ञेयः षण्डकं शृणु पञ्चमम् । यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते । ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः । ऋतौ प्रवृत्तस्तत्रापि प्रवर्त्तेताङ्गना यदि । तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता । आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा । सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः । अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः । हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत्" ।

तस्य दायानधिकारिता अंशशब्दे १४२पृ०उक्ता । तत्रायं विशेषः । "क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः । अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः" या० व्याख्या मिता० "एतेषां विभागात् प्रागेव दोषप्राप्तावनंशत्वं न पुनर्विभक्तानां, विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव "विभक्तेषु सुतो जातः सवर्णायां विभागभाक्" इत्यस्य समानन्यायात् । क्लीबाद्यौ यदि जन्मत आरभ्य तदा विभागानर्हा एव यदि त्वन्तरा तदा, तदपगमश्चेदौषधादिना, तर्हि "दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्" इति रीत्या विभागार्हत्वमेवेत्युक्तम्" । अत्र विशेषः क्लीबादीनामनंशत्वात्तत्पुत्राणामप्यनंशत्वे प्राप्त इदमाह" मिता० "औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः" । या० "एतेषां क्लीबादीनामौरसाः क्षेत्रजा वा पुत्रा निर्दोषा अंशग्रहणविरोधिक्लैब्यादिदोषरहिता भागहारिणः, अंशभागिनो भवन्ति । तत्र क्लीबस्य क्षेत्रजः पुत्रः सम्भवत्यन्येषामौरसा अपि । औरसक्षेत्रजयोर्ग्रहणं इतरपुत्रव्युदासार्थम् । क्लीबादिदुहितॄणां विशेषमाह मिता०" । "सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृताः" । या० "एतेषां क्लीबादीनां सुता दुहितरो यावद्विवाहसंस्कृता न भवन्ति तावद्भरणीयाः । व्ययाश्च कार्य्याश्च । क्लीबादिपत्नीनां विशेषमाह मिता०" "अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च" या० । "एषां क्लीबादीनामपुत्राः पत्न्यः साधुवृत्तयः सदाचाराश्चेद्भर्त्तव्याः भरणीयाः । व्यभिचारिण्यस्तु निर्वास्याः । प्रतिकूलास्तथैव च निर्वास्या भवन्ति भरणीयाश्चाव्यभिचारिण्यश्चेत् । न पुनः प्रातिकूल्यमात्रेण भरणमपि न कर्त्तव्यम्" मिता०

वीरमित्रोदये विशेष "क्लीबादीनामपि दारपरिग्रहेण पुत्रश्च उक्तो मनुना "यद्यर्थिता तु दारैः स्यात् क्लीबादीनां कथञ्चन । तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति" । तन्तुरपत्यम् । न च क्लीबादेरुपनयनाभावेन पतितत्वात् कथं दारसम्बन्ध इति वाच्यम् । उपनयनानर्हतया अनुपनीतत्वे शूद्रवदपतितत्वात्" ।

एतच्चिन्त्यं "मुखेभगाश्च ये केचित् क्लीबप्राया नपुंसकाः । ब्रह्मदण्डहता ये च ये च वै ब्राह्मणार्हताः । महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः" शु० त० ब्रह्मपु० क्लीबस्य पतितत्वोक्तेः । केचित्तु तत्र उत्तरार्द्धे "पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः पातः कर्त्तव्यो नचाश्रु-माशौ च उदकक्रिया" इत्युक्तेरन्त्येष्ट्याद्यभावादुक्तमिदं पातित्यं नान्यत्र । अतएव अनंशिगणनायां याज्ञवल्क्यादिभिः पतितात् पृथक् क्लीबस्य कीर्त्तनं सङ्गच्छते इत्याहुः । मनुनाऽस्यापाङ्क्तेयत्वमुक्तम् "आचारहीनः क्लीबश्च नित्ययाचनकस्तथा" इत्युपक्रमे "एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान्" इति । "अस्योत्पत्तौ कारणमुक्तं मनुना । "पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः" "पुंसो बीजे अधिकेऽयुग्मास्वपि पुत्रो जायते स्त्रीबीजेऽधिके युग्मास्वपि दुहितैव । अतोऽभ्याहारादिना निजबीजाधिक्यं भार्य्यायाश्चाहारलाघवादिना बीजाल्पत्वमवगम्य अयुग्मास्वपि पुत्रार्थिना गन्तव्यमिति दर्शितं स्त्रीपुंसयोस्तु बीजसाम्येऽपुमान् नपुंसकं जायते पुंस्त्रियाविति यमौ निःसारेऽल्पे चोभयोरेव बीजे गर्भस्यासम्भवः" कुल्लू० ।

कर्त्तव्यकर्म्मसु २ निरुद्यमे ३ अधीरे ४ विक्रमहीने अमरः तस्य भावः ष्यञ् । क्लैब्य न० । तल् क्लीबता स्त्री । त्व क्लीबत्व न० तद्भावे "मा क्लैब्यं गच्छ कौन्तेय ! नैतत्त्वय्युपपद्यते" गीता । "पुनरक्लीबतया प्रकाश्यताम्" रघुः । "अक्लीबतया धैर्य्येण" मल्लि० । "कोऽयं धर्म्मोऽस्ति ते भीष्म ! ब्रह्मचर्य्यमिदं वृथा । यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः" भा० स० ४० अ० । क्लीबस्य पुंस्त्वेन्द्रियोपघातः अशक्तिशब्दे ४७२ पृ० उदा० । जातस्य क्लीबताकारणं च सुश्रुते दर्शितं यथा "शुक्रवहे द्वे धमन्यौ तयोर्मूलं स्तनौ वृषणौ च तत्र विद्धस्य क्लीबता चिरात् प्रसेको रक्तयुक्तता च" । "क्लीबरूपां किरीटिनः" वृह० ८,६,७, क्लीब इवाचरति क्यङ् क्विप् वा । क्लीबायते । क्ली-

धपि आत्मं क्लीबते मुग्ध० । ४शब्दनिष्ठधर्मभेदे तद्विवृतिः शब्दार्थरत्ने यथा

“लिङ्गत्वञ्च प्राकृतगुणगतावस्थात्मकोधर्मविशेषः तद्विशेषश्च पुंनपुंसकत्वादिः । तथा हि सर्व्वेषां त्रिगुणप्रकृतिकार्य्यतया शब्दानामपि तथात्वेन गुणगतविशेषाच्छब्देषु लिङ्गविशेष इति कल्प्यते स च विशेषः शास्त्रे इत्थमभ्यधायि । त्रिगुणसत्त्वादीनां तुल्यरूपेणावस्थानात् नपुंसकत्वं सत्त्वस्याधिक्ये पुंस्त्वम्, रजआधिक्ये स्त्रीत्वमिति । एवञ्च लिङ्गस्य शब्दधर्म्मत्वेऽपि शब्देन सहार्थाभेदारोपात् अस्ति वाचकेऽर्थेऽपि साक्षात् तत्पारतन्त्र्येण वा सर्व्वत्र तस्य विशेषणत्वम् शाब्दबोधे शब्दभानस्येष्टत्वाच्च शब्दस्य नामार्थतावत् तद्गतलिङ्गस्यापि नामार्थतौचित्यात् “न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते” इत्याद्युक्तेः “शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा । नो चेत् श्रोत्रादिभिः सिद्धोऽप्यसावर्थेऽवभासते” इतिहर्य्युक्तेश्च शब्दानां नामार्थतावगतेः । तथा प्रातिपदिकार्थः । अभेदविवक्षायां तु श्रोत्रादिभिरेव सिद्धः सन् अर्थे प्रकारतया भासते इति तदर्थः । युक्तञ्चैतत् पुंलिङ्गः शब्द इति व्यवहारात् “स्वमोर्नपुंसकादिति” पा० सूत्रे शब्दस्यैव नपुंसकत्वव्यपदेशात् दारानित्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्म्मत्वमन्यथैतेषु लिङ्गाद्यनन्वयापत्तेर्व्यवहारस्तत्रनिर्द्देशासङ्गत्यापत्तेश्च । तथा अर्थभेदाच्छब्दभेदवत् लिङ्गभेदादपि शब्दभेद इति कल्प्यते प्रागुक्तधर्म्मविशेषरूपभेदकसद्भावात् । उक्तञ्च भाष्ये “एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमिति” । एवञ्च तटादिशब्दानामनेकलिङ्गत्वव्यवहारः समानानुपूर्व्वीकत्वेनैव वस्तुतस्तेषां भिन्नानामेव भिन्नलिङ्गत्वमिति दिक्” । “अकारादि सकारान्तान् क्लीबहीनान् लिखेत्ततः । अष्टवर्गद्वयं खण्डद्वयं क्लीबं प्रचक्षते” अकडमचक्रे तन्त्रसारोक्ते अकारादिवर्णचतुष्के च

क्लु गतौ भ्वा० आ० सक०अनिट् । क्लवते अक्लोष्ट चुक्लुवे

क्लृप्त त्रि० क्लृप–क्त । १रचिते २कल्पिते ३विच्छिन्ने ४निर्म्मिते च शब्दच० “पतिंवरा क्लृप्तविवाहवेषा” “क्लृप्तेन सोपानपथेन मञ्चम्” रघुः । ५धारिते च “क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः” मनुः ।

क्लृप्तकीला स्त्री क्लृप्ता कीला यत्र । (पाट्टा) इतिख्याते । निर्द्दिष्टकरग्रहणार्थं दत्तभूमिस्वत्वग्रहणोपयोगिलक्षणज्ञापके पत्रभेदे त्रि० ।

क्लेद पु० क्लिद–भावे घञ् । १आर्द्रतायाम् । सा च जलविकारभेदः यथाह या० “रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्द्दवम्” । “रसादुदकात् रसनेन्द्रियं शैत्यमङ्गानां, स्नेहं स्निग्धताम् मृदुतासहितं क्लेदमार्द्रताम्” मिता० । देहस्थः क्लेदश्च श्लेष्मकार्य्यः क्लेदनशब्दे विवृतिः । “तदङ्गमक्लेदसमाकुलाक्षम्” “स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया” रघुः । २दुःखभावे शब्दचि० “पदस्थितस्य पद्मस्य बन्धू वरुणभास्करौ । पदाच्युतस्य तस्यैव क्लेदकशोषकारावुभौ”

क्लेदक त्रि० क्लेदयति क्लिद णिच् ण्वुल् । १क्लेदकारके देहस्थकफे क्लेदनशब्दे विवृतिः । २क्लेदकारके जलादौ त्रि० । देहस्थदशवह्निमध्ये ३वह्निभेदे अग्निशब्दे ५० पृ० पदार्थादर्शवाक्यम् दृश्यम् । जलस्य क्लेदकत्वेऽपि तत्र अग्नेः साहचर्य्यादेव तथात्वम् ।

क्लेदन् पु० क्लेदयति क्लिद-णिच्-कनिन् (चन्द्रे त्रिका०)

क्लेदन पु० क्लेदयति क्लिद-णिच् ल्यु । क्लेदकारके देहस्थे श्लेष्मभेदे तद्विवृतिः भावप्रकाशे “कफस्यैतानि नामानि क्लेदनश्चावलम्बकः । रसनः स्नेहनश्चापि श्लेष्मणः स्थानभेदतः । अथ क्लेदनादीनां स्थानान्याह “आमाशयेऽथ हृदये कण्ठे शिरसि सन्धिषु । स्थानेष्वेषु मनुष्याणां श्लेष्मा तिष्ठत्यनुक्रमात्” । दोषाणां सकलशरीरव्यापिनामपि पञ्च पञ्च स्थानानीति बाहुल्याभिप्रायेणोक्तानि । तथाच वाग्भटः “इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् । व्यापिनामपि जानीयात् कर्म्माणि च पृथक् पृथक्” । चरकश्च “ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्ध्वसंश्रयाः” इति । अथ तत्तत्स्थानगतस्य श्लेष्मणः कर्म्माण्याह “क्लेदनः क्लेदयत्यन्नमामाशयगतं परास्त्वपि । अनुगृह्णाति च स्वस्थानान्युदककर्म्मणा” । अयमर्थः क्लेदनोऽन्नं क्लेदयति तेन संहतमन्नं भेदं प्राप्नोति । अपराण्यपि श्लेष्मस्थानानि हृदयादीनि मार्गेण गत्वा तत्र तत्र हृदयालम्बनसन्धारसनस्नेहनसमस्तेन्द्रियतर्पणसन्धिसंश्लेषणाद्युदककर्म्मभिरनुगृह्णाति उपकरोति । तथा च “रसयुक्तात्मवीर्य्येण हृदयस्यावलम्बनम् । त्रिकसन्धारणं चापि विदधात्यवलम्बनः” । त्रिकं शिरोबाहुद्वयसन्धिः । “उभावपि ततः सौम्यौ तिष्ठत्यग्निके यतः ततो रसान्विजानीयात् रसनारसनौ समौ” । रसना रसनेन्द्रियं रसनः कण्ठस्थकफः । “स्नेहनः स्नेहदानेन समस्तेन्द्रियतर्पणः ।

क्लेशः सर्व्वसत्त्वानां संक्लेशं निर्वात्यतो" । २क्लेदकारके जलादौ त्रि० ।

क्लेदु पु० क्लिद-उन् । १चन्द्रे उज्ज्वल० २सन्निपाते त्रिका०

क्लेश पु० क्लिश-भावे घञ् । उपतापे दुःखे क्लिश्नन्ति क्लिश्यमानं कर्त्तरि अच् । पातञ्जलोक्तेषु अविद्यादिषु पञ्चसु । "क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" पात० सू० । "अविद्यादयः क्लेशाः" भा० । "क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति" विवरणम् । अविद्यादीनां यथा क्लेशहेतुत्वात् तच्छब्दवाच्यत्वम् तथा तेषां निरोधोपायश्च तत्रैव साधनपादे दर्शितो यथा

"अथ के क्लेशाः कियन्तो वेति" भा०

"अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः" सू०।

"इति पञ्च विपर्य्यया इत्यर्थः । ते स्पन्दमाना गुणाधिकारं द्रढयन्ति परिणाममवस्थापयन्ति कार्य्यकारणस्रोत उन्नमयन्ति परस्परानुग्रहतन्त्रीभूत्वा कर्म्मविपाकं चाभिनिर्हरन्ति" भाष्यम् ।

"पृच्छति अथेति । अविद्येति सूत्रेण परिहारः । अविद्यादयः क्लेशाः । व्याचष्टे पञ्च विपर्य्यया इति । अविद्या तावद्विपर्य्यय एव अस्मितादयोऽप्यविद्योपादानात्तदविनिर्भागवर्त्तिन इति विपर्य्ययाः । ततश्चाविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः । तेषामुच्छेद्यतायां हेतुं संसारकारणत्वमाह ते स्पन्दमानाः । समुदाचरन्तो गुणानामधिकारं द्रढयन्ति नवनवं कुर्व्वन्ति अत एव परिणाममवस्थापयन्ति अव्यक्तमहदहङ्कारपरम्परया किं कार्य्यकारणस्रोत उन्नमयन्ति उद्भावयन्ति । यदर्थं सर्व्वमेतत् कुर्व्वन्ति तद्दर्शयति परस्परेति । कर्म्मणां विपाको जात्यायुर्भोगलक्षणः पुरुषार्थः तममी क्लेशा अभिनिर्हरन्ति निष्पादयन्ति । किं प्रत्येकं ? नेत्याह परस्परानुग्रहेति कर्म्मभिः क्लेशाः क्लेशैश्च कर्म्माणीति" वाचस्पतिविवरणम् ।

"अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" सू० "अत्राविद्या क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां चतुर्विधकल्पितानां प्रसुप्ततनुविच्छिन्नोदाराणाम् । तत्र का प्रसुप्तिः ? चेतसि शक्तिमात्रप्रतिष्ठानां बीजभावोपगमः तस्य प्रबोध आलम्बने सम्मुखीभावः प्रसंख्यानवतो दग्धक्लेशबीजस्य सम्मुखीभूतेऽप्यालम्बने नासौ पुनरस्ति दग्धबीजस्य कुतः प्ररोह इति । अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते तत्रैव सा दग्धबीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति सतां क्लेशानां तदा बीजसामर्थ्यं दग्धमिति विषयस्य सम्मुखीभावेऽपि सति न भवत्येषां प्रबोध इत्युक्ता प्रसुप्तिर्दग्धबीजानाम् अप्ररोहश्च । तनुत्वमुच्यते प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति । तथा विच्छिद्य विच्छिद्य तेन तेनात्मना पुनः पुनः समुदाचरन्तीति विच्छिन्नाः कथं ? रागकाले क्रोधस्यादर्शनात् । न हि रागकाले क्रोधः समुदाचरति रागश्च क्वचित् दृश्यमानो विषयान्तरे नास्ति, नैकस्यां स्त्रियां चैत्रो रक्त इति अन्यासु स्त्रीषु विरक्तः, किन्तु तत्र रागो लब्धवृत्तिः, अन्यत्र भविष्यद्वृत्तिरिति स हि तदा प्रसुप्ततनुविच्छिन्नो भवति । विषये यो लब्धवृत्तिः स उदारः । सर्व्व एवैते क्लेशविषयत्वं नातिक्रामन्ति । कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेशः ? इति, उच्यते सत्यमेवैतत् किन्तु विशिष्टानामेवैतेषां विच्छिन्नादित्वं यथैव प्रतिपक्षभावनातो निवृत्तं तथैव स्वव्यञ्जकाञ्जनेनाभिव्यक्तम् इति सर्व्व एवामी क्लेशा अविद्याभेदाः कस्मात् ? सर्व्वेषु अविद्यैवाभिप्लवते यदविद्यया वस्त्वाकार्य्यते तदेवानुशेरते क्लेशाः विपर्य्यासप्रत्ययकाले उपलभ्यन्ते क्षीयमाणां चाविद्यामनुक्षीयन्त इति" भा० ।

"हेयानां क्लेशानामविद्यामूलत्वं दर्शयति अविद्याक्षेत्रमित्यादि । तत्र का प्रसुप्तिः इति स्वोचितामर्थक्रियामकुर्व्वतां क्लेशानां सद्भावे न प्रमाणमस्तीत्यभिप्रायः पृच्छतः । उत्तरं चेतसीति । सा नामार्थक्रियां कार्षुः क्लेशाः विदेहप्रकृतिलयानां बीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति घोर इव दधिनोऽविवेकख्यातेरस्त्यदस्ति कारणं तत्स्वरूपतायाम् अतो विदेहप्रकृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न यावदवधिकालं प्राप्नुवन्ति, ततः प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषु तेषु विषयेषु संमुखीभवन्ति । शक्तिमात्रेण प्रतिष्ठा एषां ते तथोक्ताः । तदनेनोत्पत्तिर्व्याख्याता बीजभावोपगम इति च कार्य्यशक्तिरिति । ननु विवेकख्यातिमतोऽपि क्लेशाः कस्मान्न प्रसुप्ताः ? इत्यत आह प्रसंख्यानवत इति । चरमदेहो न तस्य देहान्तरमुत्पत्स्यते यदपेक्षयास्य देहः पूर्व इत्यर्थः । विदेहादिभ्योऽन्यत्र ननु सतो नास्त्यविनाश इति किमिति तदीययोर्मर्दितेन विषयसंमुखीभावेन क्लेशाः प्रबुध्यन्ते इत्यत आह सतामिति । सन्तु क्लेशाः दग्धक्लेशां प्रसङ्ख्यानाग्निना बीजभावः [illegible] । [illegible]

"विलोलघण्टाक्वणितेन नागाः" रघुः "दुःसहा हि परिखिन्नः क्वणद्भिरलिनायकैः" अक्वाणिषुश्च नेत्-स्वाकाः" चक्वणाशङ्गनोयेऽहम्" "विभूषणानां क्वणितं च षट्पदः" भट्टिः "किञ्चिन्नक्वणितवीरमध्युवास" क्रमा० चु० णिजर्थः वीणायाः शब्दे अमरः । णिच् क्वणयति ।

**क्वण** पु० क्वण—अप् । १वीणायाः शब्दे, अमरः २ध्वनिमात्रे हेमच० । कर्त्तरि अच् । ३शब्दकारके त्रि०

**क्वणन** न० क्वण—भावे ल्युट् । १वीणायाः शब्दे (कनकन) इति २शब्दभेदे । कर्त्तरि ल्यु । ३क्षुद्रघण्टिकायां (क्षोट-घाण्टि) त्रिका० ।

**क्वथ** निष्पचने (क्वाथशब्दोक्तपाकभेदे) भ्वा० पर० सक० सेट् । क्वथति एदित् अक्वथीत् चक्वाथ क्वाथः । क्वथ्यमानः । णिच् क्वाथयति "जलाशयेषु तप्तेषु क्वथ्यमानेषु वह्निना" भा० आ० २२६ अ० "पञ्चान्नयोर्मध्यशोषाद् यवागूं क्वथितां सकृत्" मनुः

**क्वथित** त्रि० क्वथ—क्त । १अतिशयपक्वे व्यञ्जनादौ, २दशमूलपाचनादौ च हेमच० । भावप्र० क्वथितजलगुणा उक्ता यथा "क्वथितस्य जलस्य शीतलीकृतस्य विधिमाह सुश्रुतः । "शृताम्बु तत् त्रिदोषघ्नं यदन्तर्थ्यशीतलम् । अध्मानमभिष्यन्दि कृमिहृट्ज्वरहृच्च । धारापातेन विष्टम्भि दुर्जरं पवनाहृतम् । भिनत्ति श्लेष्मसंघातं मारुतञ्चापकर्षति । अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि" क्वचिदप्यशीतलम् पिच्छिलमेव शीतलम्"

**क्वथिता** स्त्री भावप्र० उक्ते (कढ़ी) इतिख्याते पदार्थे "स्थाल्यां घृते वा तैले वा हरिद्राहिङ्गु भर्जयेत् । व्यवलेहनसं-युक्तं तक्रं तत्रैव निःक्षिपेत् । एषा सिद्धा समरीचा कथिता क्वथिता बुधैः । व्यवलेहनम् । (आंरहन) इति लोके । "क्वथिता पाचनी रुच्या लघ्वी वह्निप्रदीपनी । कफानिलविबन्धघ्नी किञ्चित्पित्तप्रकोपणी । अलीकतृप्ताः शुष्का या किं वा क्वथितया पुनः । ? हेमा रोचना हृद्या बल्या वातगदापहा । कोष्ठशुद्धिकरी शुक्ला किञ्चित्पित्तप्रकोपणी । अर्द्दिते सहनुस्तम्भे विशेषेण हिता स्मृता" ।

**क्वल** पु० कु+अल—अच् । प्रौढबदरफले "कुवलं यत् पूतीकं वा पर्णवल्कैरलिञ्जान् सौम्यं तदात् क्वलैराख्यं तत् तस्मात् तस्य लिङ्गैश्चदेशे तद्यदातञ्जनेन कानुपं तद्द्भा यत् कन्द्रहातर्नीला कैन्द्रत्वाय" इति तैत्ति० २।५।२।५ "सोमस्यामानाया लतायाः अवयवाः पूतीकाः । पलाशकाण्डस्यांशाः पर्णवल्काः । प्रौढबदरफलानि क्वलाः । ईषदमृतक्रम तञ्जनं पूतीकादिभिरञ्जनं सोमप्रियम्" भा० ।

**क्वाण** पु० क्वण भावे घञ् । १शब्दे इदनिप्रादिपूर्वकस्तु वीणायाःशब्दे अमरः । ज्वला० कर्त्तरि ण । २शब्दकर्त्तरि त्रि०

**क्वाथ** पु० क्वथ-करणे घञ् । १अतिदुःखे हेम० । दुःखेन हि चित्तं क्वथ्यमानमिव भवतीति तस्य तथात्वम्, वैद्यकोक्ते जलादेः पाकभेदे यथा भावप्रकाशे

"पानीयं षोडशगुणं क्षुण्णे द्रव्यपले क्षिपेत् । मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम् । कर्षादौ तु पलं यावद्दद्यात् षोडशिकं जलम् । ततस्तु कुडवं यावत्तोयमष्टगुणं भवेत् । चतुर्गुणमतश्चोर्द्ध्वं यावत्प्रस्थादिकं जलम् । षोडशिकं षोडशगुणम् । "तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम् । शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते" । क्वाथपानमात्रामाह "मात्रोत्तमा पले तत् स्यात् त्रिभिरक्षैस्तु मध्यमा । जघन्या च पलार्द्धेन स्नेहक्वाथौषधेषु च । तन्त्रान्तरे "क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते । चतुर्भागावशिष्टन्तु पेयं पलचतुष्टयम् । दीप्तानलं महाकायं पाययेदञ्जलिं जलम् । अन्ये त्विदं परित्यज्य प्रकृतिं तु चिकित्सकाः । क्वाथस्यागममिच्छन्ति अष्टभागावशेषितम् । पारम्पर्योपदेशेन दद्युर्वैद्याः पलद्वयम्" । अष्टभागावशेषितस्य चतुर्भागावशिष्टापेक्षया गुरुत्वात् दीप्तानलं महाकायं पलद्वयं पाययेन्मध्यमाग्निमल्पकायं पलमात्रं पाययेत् मात्रोत्तमा पलेन स्यादित्यादि वचनात् । "क्वाथे क्षिपेत् सितामंशैश्चतुर्थाष्टमषोडशैः । वातपित्तकफातङ्के विपरीतं मधु स्मृतम् । जीरकं गुग्गुलुं क्षारं लवणं च शिलाजतु । हिङ्गु त्रिकटुकं चैव क्वाथे शाणोन्मितं क्षिपेत् । क्षीरं घृतं गुडं तैलं मूत्रं चान्यत् द्रवं तथा । कल्कं चूर्णादिकं क्वाथे निःक्षिपेत् कर्षसंमितम् । तस्योपविश्य विश्रान्तः प्रसन्नवदनेक्षणः । औषधं हेमरजतस्फाटिकाभाजनपरिस्थितम् । पिबेत् प्रसन्नहृदयः पीत्वा पात्रमधोमुखम् । विधायाचम्य सलिलं ताम्बूलादि प्रयोजयेत्" ।

क्वाथनिषेधकालादि भावप्र० दर्शितं यथा

"नवज्वरे प्रभावं स्यात्कषायेषु विशेषतः । कुर्युर्भेषजसम्बन्धो निषिद्धस्तरुणज्वरे । तोयपेयादिसंस्कारे त्वदोषं तत्र भेषजम्" । सुश्रुते भेषजं क्वाथः तस्य तरुणे पानम् । यतआह "न कषायं प्रशंसन्ति नराणां तरुणे ज्वरे ।

कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः"। आकुलीभूताः मत्ताः स्वमार्गं परित्यज्य इतस्ततो गताः। अत्र कषायशब्देन क्वाथो गृह्यते। उक्तञ्च क्वाथस्य पर्य्यायाः। "शृतं क्वाथः कषायश्च निर्य्यूहः स निगद्यते, इति। "तोयपेयादिसंस्कारे निर्दोषं तत्र भेषजमिति"। तत्र तरुणज्वरे भेषजम् मुख्यभेषजं क्वाथरूपं न तु कल्कमनुद्दिश्य कषायः प्रतिषिध्यत इति कल्ककं तोयपेयायवाग्वादिकम्। ननु "स्वरसस्य तथा कल्कः क्वाथश्च हिमफाण्टकौ। ज्ञेया कषायाः पञ्चैते लघवः स्युर्यथोत्तरम्" इति वचनात् स्वरसादयोऽपि कथं न निषिध्यन्ते। तत्राह "तत्र यस्तु कषायः स्यात् स वर्ज्यस्तरुणज्वरे" इति। चतुर्थभागावशेषकरणेनाष्टमभागशेषकरणे च कषायवर्णः कषायरसश्च स्यात्। स कषायः क्वाथः स तरुणज्वरे निषिद्धः। कषायस्य लक्षणमाह, "पादशिष्टः कषायः स्यात्"। अतः षडङ्गादिस्तरुणज्वरे न निषिद्धः पाकादूर्द्ध्वपाके चोक्तलक्षणाभावेन कषायत्वाभावात्। अथ तरुणज्वरे कषायस्य दोषमाह "दोषा बद्धाः कषायेण स्तम्भितास्तरुणज्वरे। स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम्"। कषायेण स्तम्भिता प्रवृत्तये निवारिताः। यत आह कषायरसगुणात् "कषायः स्तम्भनः शीतोरूक्षः पित्तकफापहः" इत्यादि। स्तभ्यन्ते आध्मानं कुर्वन्ति न विपच्यन्ते सुखेन न विपच्यन्ते दुःखं दत्त्वा विलम्बेन विपच्यन्ते इति यावत्"। [अमरः।

क्वाथोद्भव: न० क्वाथादुद्भवति उद्+भू-अच्। तुत्थाञ्जने

क्षेल कम्पे अक० गतौ सक० भ्वा० प० सेट् क्वि०। क्षेलति अक्षेलीत् इदित् चङि अचिक्षेलत् त।

क्ष पु० क्षि-बा० ड। १संहर्त्तरि २राक्षसे ३नरसिंहे ४विद्युति ५क्षेत्रे ६क्षेत्रपाले ७नाशे च मेदि०। तस्य वाचकशब्दाः तन्त्रशास्त्रे वर्णाभिधाने उक्ता यथा

"क्षः क्रोधसुम्भकः कालोत्तम्यः संवर्त्तकः परः। नृसिंहोविद्युता माया महातेजा युगान्तकः। परात्मा क्रोधसंहारी वर्णान्तो मेरुवाचकः। सर्वाङ्गः सागरः कामः संयोगान्तक्षिपूरकः। क्षेत्रपालो महाक्षोभो मातृकान्तोऽनलः क्षयः। कुक्षं कव्यवहानन्ता कालजिह्वा गणेश्वरः। छायापुत्रश्च संघातोमलयश्चीर्ललाटगः" अत्र संयोगान्त इत्युक्तेः शब्दकल्पद्रुमे क्षकारस्य वर्णान्तरत्वकल्पनम् लोकशास्त्रविरुद्धत्वादतीव प्रामादिकम्। तथाहि अस्य कषयोः संयोगजत्वेन कादित्वम्। पृथग्वर्णत्वे

वर्णमेखलावद् चिक्षेपेत्यादिकपदं न सिद्ध्येत् अर्द्धयुक्ततया हलादिशेषाप्रसक्तौ कवर्गादित्वाभावेन चुत्वाप्रसक्तेः। किञ्च संयुक्तपरात् पूर्व्वस्य गुरुत्वेन "निपीय यस्य क्षितिरक्षिणः कथाम्" नैषधे "लाङ्गूलविक्षेपविसर्पिशोभैः कुमारादौ काव्ये च "गजाध्यक्षोयातिक्षितिपतिरित्यादौ" "दक्षिणे कालिकेति" च भैरवतन्त्रोक्तकालीस्तवे च सर्वत्र तत्पूर्व्वस्य गुरुत्वे सत्येव छन्दोनुगुणता असंयुक्तवर्णत्वे सर्वत्र छन्दोभङ्गः स्यात्। न च तस्यासंयुक्ततया क्वचिदपि तत्पूर्व्वस्य लघुत्वं दृष्टम्। अतएव कविकल्पद्रुमे "स्वदाद्यन्तादिमक्रमः" इति प्रतिज्ञाय कादित्वेन क्षकारादिधातुपाठः मेदिन्यादौ कोषेऽपि तथैव कादिषु तस्य पाठः।

तन्त्रे तु कषयोः संयोगजत्वेऽपि मातृकावर्णानामङ्कपञ्चाशत्संख्यापूरणार्थं लकारवत् पृथक् कीर्त्तनं न्यासादिकार्थार्थं "पञ्चाशल्लिपिभिर्मीला विहिता सर्व्वकर्मसु। अकारादिक्षकारान्ता वर्णमाला प्रकीर्त्तिता। क्षार्णं मेरुमुखं तत्र कल्पयेन्मतिमत्तम!। अनया सर्वमन्त्राणां जपः सर्वसमृद्धिदः" इति गौतमतन्त्रोक्तजपाङ्गमालाकल्पनार्थश्च न वर्णान्तरत्वार्थम्। एवं सर्वतन्त्रेषु वर्णान्तरत्वकल्पनं लोकशास्त्रविरुद्धत्वादुपेक्ष्यम्। "विशेषं कथयाम्यद्य प्रोक्तार्थाः कण्ठतः स्वराः। हृदयं जिह्वया मूर्द्धा हृदयं दन्तजिह्वया। कुक्षस्यामाङ्गलीवाच्याः क्षकारः कण्ठ्यतालुः" इति वरदातन्त्रे १०पटले तस्य कण्ठस्थानोक्त्यर्थं त्वक्षिकार्थं। आद्यककाराभिप्रायेण द्रष्टव्या। "अतएव यान्ताः स्वर्यादि वा यान्ता वर्णानामनुरोधतः। पृथक् क्रमेण वक्ष्यन्ते तथाऽप्येते समन्वयात्" विश्वप्रकाशे तस्य उभयरूपतासमन्वय उक्तः। तत्समन्वयप्रकारीतन्त्रा बोध्यः। एतेन बहूनां मतुल्यत्वेन भेदलानां च तस्य क्षकारत्वेनोच्चारणं प्रामादिकमेव।

क्षज कृच्छ्रजीवने इदित् चुरा० उभ० अक० सेट्। क्षञ्जयति ते अचक्षञ्जत् त। क्षञ्जयां बभूव आस चकार चक्रे।

क्षज वधे भ्वा० आ० सक० सेट् घटा०। क्षजते अक्षजिष्ट। चक्षजे मित् क्षजा। क्षजयति ते अचिक्षजत् त।

क्षञ्ज गतौ दाने च भ्वा० आत्म० इदित् सक० सेट्। क्षञ्जते अक्षञ्जिष्ट चक्षञ्जे। कर्म्मणि क्षञ्ज्यते घटा० क्षञ्जयति इति अक्ष(क्षा)ञ्जि अभूति क्षञ्जं क्षञ्जं क्षाञ्जं क्षाञ्जम् अनुपधाया अपि दीर्घः

क्षण बधे तना० उभ० सक० सेट्। क्षणोति क्षणुते। अक्ष-

षीत् अच् घञ्। क्षणाय क्षणो। उदित् क्षणित्वा क्षत्वा। क्षतिः क्षतः। क्षणः। आत्मनेपदेऽपि रूपं तुल्यम् किंच तन् इति भेदः।

क्षण पु० क्षणोति दुःखं क्षण—अच्। १उत्सवे २मुहूर्त्तात्मक कालस्य द्वादशांशे त्रिंशत्कलात्मके कालभेदे अमरः ३प्रयत्नकटुत्वे दीपिका "भुवनदुरवगौ वाजिकल्पा क्षणैः क्षणसुदयमयं सन्तु कौन्दुश्चितेषु" माङ्गेया कालि ४मुहूर्त्तरूपे कालांशे वि० प्र० तद्वाक्यं १७८८पृष्ठे दर्शितम्। ५निमेषक्रियावच्छिन्नकालस्य चतुर्थभागे सर्वद० तादृशार्थे भूपालेण "क्षणादिः स्यादुपाधितः" भाषा० व्या० मुक्तावलीवाक्यं तच्च कालशब्दे १९८५पृ० दर्शितम्। ६निर्व्यापारस्थितौ अमरः ७अवसरे ८मध्ये ९पराधीनतायां हेमच०। तत्र उत्सवकालभेदयोः "क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना" माघः। उत्सवे "नार्हं त्यनुर्जितं लोके मूढस्य क्षणमाचरेत्" उ०त०ब्रह्मपु०। "क्षणमुत्सवम्" उ०त०रघु०। कालांशे "क्व नु मां क्षणभिन्नोहृदः" "स्थिताः क्षणं पक्ष्मसु ताडिताधराः" कुमा०। अवसरे "स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः। तेन नारद! नारीणां सतीत्वमुपजायते" "दीयते स्म गयितुं गयनोग्रे न क्षणः क्षणदयाऽपि बभ्रुः" माघः। अत्र क्षणदयापि न क्षणो दत्त इति उत्सवार्थत्वेन विरोधस्य कालविशेषार्थत्वेन परिहारात् विरोधाभासः। "नीता रात्रिः क्षण इव मया सार्द्धमिच्छारतैर्या" मेघः

क्षणक्षणा अव्य० वा० प्रकारे—द्वित्वम्। क्षणमात्रे त्रिका०

क्षणतु पु० क्षण—भावे वा० अतु। व्रणे विदारणादौ हेम०

क्षणद पु० क्षणं यात्रादिमुहूर्त्तम् उत्सवं वा ददाति दा-क। १मौहूर्त्तिके गणके मेदि० २जले न० हेम०। ३रात्रौ ४हरिद्रायाञ्च स्त्री अमरः "क्षणदापायशशाङ्कदर्शनः" रघुः "न क्षणः क्षणदयापि बभ्रुः" माघः

क्षणदाकर पु० क्षणदां करोति हेतौ ट। निशाकरे चन्द्रे "आरक्तमार्ग्गः क्षणदासु यत्र" माघः

क्षणदाचर पु० स्त्री क्षणदायां चरति चर-ट। निशाचरे राक्षसे "इन्निता धर्मराजेन प्रविष्टः क्षणदाचराः" भा० व० ५५अ०। "बालुलः प्रभुरपि क्षणदाचराणाम्" रघुः। स्त्रियां जातित्वात् ङीष्। २निशाचरे पक्ष्यादौ त्रि० स्त्रियां ङीप्।

क्षणदान्ध्य न० क्षणदायामान्ध्यम्। रात्र्यन्धत्वे। "क्षौ तोलं सैन्धवं कृष्णां रेणुकाञ्चापि पेषयेत्। अञ्जनार्थेष ता वर्त्यः क्षणदान्ध्याञ्जने हिताः" सुश्रुतः

क्षणद्युति स्त्री क्षणं द्युतिरस्याः। क्षणप्रभायां विद्युति।

क्षणन न० क्षण—भावे ल्युट्। वधे हनने अमरः

क्षणनिःश्वास पुंस्त्री० क्षणात् उत्कृत्य निःश्वासोऽस्य। शिशुमारे (शोशक) मत्स्यभेदे स्त्रियां जातित्वात् ङीष्।

क्षणप्रभा स्त्री क्षणं प्रभाऽस्याः। विद्युति चञ्चलायाम् अमरः

क्षणभङ्ग पु० क्षणात्परः भङ्गः ५त०। सर्व्वेषां भावानां क्षणिकत्वे क्षणनश्वरत्वे। स च सर्व्व०द०दर्शितोयथा।

"तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यं यत् सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावा इति। न चायमसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य नीलादिक्षणानां प्रत्यक्षसिद्धत्वात् व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरिति न्यायेन व्यापकक्रमाक्रमव्यावृत्तावक्षणिकात् सत्त्वव्यावृत्तेः सिद्धत्वाच्च। तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः सम्भवति "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः" इति न्यायेन व्याघातस्योद्भटत्वात्। तौ च क्रमाक्रमौ स्थायिनः सकाशाद्व्यावर्त्तमानौ अर्थक्रियामपि व्यावर्त्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्थापयत इति सिद्धम्। नन्वक्षणिकस्यार्थक्रियाकारित्वं किं न स्यात्? इति चेत् तदयुक्तं विकल्पासहत्वात् तथा हि वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोः किमर्थक्रिययोः स्थायिनः सामर्थ्यमस्ति? न वा?। आद्ये तयोर्निराकरणप्रसङ्गः समर्थस्य क्षेपायोगात् यत् यदा यत्करणसमर्थं तत् तदा तत्करोत्येव यथा सामग्री स्वकार्य्ये समर्थश्चायं भाव इति प्रसङ्गानुमानाच्च। द्वितीयेऽपि कदाचित् न कुर्य्यात् सामर्थ्यमात्रानुबन्धित्वादर्थक्रियाकारित्वस्य, यत् यदा यन्न करोति तत् तदा तत्रासमर्थं यथा शिलाशकलमङ्कुरे, न चैवं वर्त्तमानार्थक्रियाकरणकाले वृत्तवर्त्तिष्यमाणे अर्थक्रिये करोतीति तद्विपर्य्ययाच्च। ननु क्रमवत्सहकारिलाभात् स्थायिनः अतीतानागतयोः क्रमेण करणमुपपद्यते इति चेत् तत्रेदं भवान् पृष्टो व्याचष्टां, सहकारिणः किं भावस्योपकुर्वन्ति? न वा?। नो चेत् नापेक्षणीयास्ते अकिञ्चित्कुर्व्वतां तेषां तादर्थ्यायोगात्। उपकारकत्वपक्षे सोऽयमुपकारः किं भावाद्भिद्यते? न वा?। भेदपक्षे आगन्तुकस्यैव तस्य कारणत्वं स्यात् न भावस्याक्षणिकस्य,

आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात् कार्यस्य। तदुक्तम् "वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्?। चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः" इति। अथ भावस्तैः सहकारिभिः सहैव कार्यं करोतीति स्वभाव इति चेत् अङ्ग तर्हि सहकारिणो न जह्यात् प्रत्युत पलायमानानपि गले पाशेन बद्ध्वा कार्यं कुर्यात् स्वभावस्यानपायात्। किञ्च सहकारिजन्योऽतिशयोऽतिशयान्तरमारभते? न वा? उभयथापि प्रागुक्तदूषणपाषाणवर्षप्रसङ्गः। अतिशयान्तरारम्भपक्षे बहुमुखानवस्थादौस्थ्यमपि स्यात्। अतिशये जनयितव्ये सहकार्यन्तरापेक्षायां तत्परम्परापातादेकानवस्थाऽऽस्थेया। तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थैराधीयमाने बीजस्यातिशये बीजमुत्पादकमभ्युपेयम् अन्यथा तदभावेऽप्यतिशयः प्रादुर्भवेत्, बीजञ्चातिशयमादधानं सहकारिसापेक्षमेवाधत्ते अन्यथा सर्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत। तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरतिशयान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिसम्पाद्यबीजगतातिशयानवस्था प्रथमा व्यवस्थिता। अथोपकारः कार्य्यार्थमपेक्ष्यमाणोऽपि बीजादिनिरपेक्षः कार्यं जनयति तत्सापेक्षो वा। प्रथमे बीजादेरहेतुत्वमापतेत्। द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेय एवं तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत्। एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापात इति तृतीयानवस्था दुरवस्था स्यात्। अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायत इति फलितं ममापि मनोरथद्रुमेण। तस्मादक्षणिकस्यार्थक्रिया दुर्घटा। नाप्यक्रमेण घटते विकल्पासहत्वात्। तथाहि युगपत्सकलकार्यकरणसमर्थः स भावस्तदुत्तरकालमनुवर्त्तते न वा। प्रथमे तत्कालवत् कालान्तरेऽपि तावत्कार्य्यकरणमापतेत्। द्वितीये स्थायित्वाशा मूषिकभक्षितबीजादावङ्कुरादिजननसामर्थ्यमावहेत्। यत् विरुद्धधर्माध्यस्तं तन्नाना यथा शीतोष्णे विरुद्धधर्माध्यस्तश्चायमिति जलधरे प्रतिबन्धसिद्धिः। न चायमसिद्धो हेतुः स्थायिनि कालभेदेन सामर्थ्यासामर्थ्ययोः प्रसङ्गतद्विपर्ययसिद्धत्वात्। तत्रासामर्थ्यसाधकौ प्रसङ्गतद्विपर्ययौ प्रागुक्तौ सामर्थ्यसाधकावभिधीयेते यद्यदा यज्जननासमर्थं तत्तदा तन्न करोति यथा शिलाशकलमङ्कुरम् असमर्थश्चायं वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोरर्थक्रिययोरिति प्रसङ्गः यद्यदा यत् करोति तत्तदा तत्र समर्थं यथा सामग्री स्वकार्य्ये, करोति चायमतीतानागतकाले तत्कालवर्त्तिन्यावर्थक्रिये भाव इति प्रसङ्गव्यत्ययः विपर्ययः। तस्मादिह पक्षे क्रमयौगपद्याभ्यां व्यापकानुपलम्भे नाधिगतव्यतिरेकव्याप्तिकं प्रसङ्गतद्विपर्ययबलात् अद्गृहीतान्वयव्याप्तिकं सत्त्वं क्षणिकत्वपक्ष एव व्यवस्थास्यतीति सिद्धम्। तदुक्तं ज्ञानश्रिया "यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी सत्ता शक्तिरिहार्थकर्मणि मिते सिद्धेषु सिद्धा न वा। नाप्येकैव विधान्यथा परकृतेनापि क्रियादिर्भवेत् द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यतीति"। न च कणभक्षाक्षपादपक्षकक्षीकारेण सत्तासामान्ययोगित्वमेव सत्त्वमिति मन्तव्यं, सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात्। न च तत्र स्वरूपसत्तानिबन्धनः सद्व्यवहारः, प्रयोजकगौरवापत्तेः अनुगतत्वाननुगतत्वविकल्पपराहतेश्च, सर्षपमहीधरादिषु विलक्षणेषु क्षणेष्वनुगतस्याकारस्य मणिषु सूत्रवन्नगत्वेषु गुणवच्चाप्रतिभासनात्। किञ्च सामान्यं सर्वगतं, स्वाश्रयसर्वगतं वा? प्रथमे सर्ववस्तुसङ्करप्रसङ्गः अपसिद्धान्तापत्तिश्च यतः प्रोक्तं प्रशस्तपादेन "स्वविषयसर्वगतमिति"। किञ्च विद्यमाने घटे वर्त्तमानं सामान्यमन्यत्र जायमानेन सम्बध्यमानं तस्मादागच्छत् सम्बध्यते अनागच्छद्वा आद्ये द्रव्यत्वापत्तिः द्वितीये सम्बन्धानुपपत्तिः। किञ्च विनष्टे घटे सामान्यमवतिष्ठते? विनश्यति? स्थानान्तरं गच्छति? वा प्रथमे निराधारत्वापत्तिः, द्वितीये नित्यत्ववाचोयुक्त्ययुक्तिः, तृतीये द्रव्यत्वप्रसक्तिः इत्यादि दूषणग्रहग्रस्तत्वात् सामान्यमप्रामाणिकम्। तदुक्तम् "अन्यत्र वर्त्तमानस्य ततोऽन्यस्थानजन्मनि। तस्मादचलतः स्थानाद्वृत्तिरित्यतियुक्तता। यत्रासौ वर्त्तते भावस्तेन सम्बध्यते न तु। तद्देशिनञ्च व्याप्नोति किमप्येतन्महाद्भुतम्। न याति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वं नाधारमहो व्यसनसन्ततिरिति"। अनुवृत्तप्रत्ययः किमालम्बन इति चेत् अङ्ग अन्यापोहालम्बन एवेति सन्तोष्टव्यमायुष्मतेति अलमतिप्रसङ्गेन"।

विवरणोपन्यासे चायं पक्षः पूर्व्वपक्षीकृत्य दूषितो यथा "अदेशं घटादिषु क्षणिकत्वं साध्येत विमताः उपान्त्यादयो घटसत्ताक्षणाः स्वस्वानन्तरक्षणभाविघटनाशव्याप्ताः घटसत्ताक्षणत्वादन्त्यघटक्षणवदिति' तन्न विमतो घटनाशक्षणो घटसत्तायाम् कालत्वात् सम्मतवदित्याभाससमानत्वात्। अथ घटाभावानुभवविरोध इति चेत् तर्हि क्षणिकत्वानुमानेऽपि सोऽयं घट इति प्रत्यभिज्ञाविरोधोऽस्त्वेव। ननु सर्वे भावाः क्षणिकाः अर्थक्रियाकारित्वात् व्यतिरेकेण शशविषाणवत् विपक्षे स्थायिनोऽर्थक्रियानुपपत्तिर्बाधिका। न च स्थायिनएव पदार्थस्य निमित्तसंयोगादन्यथाभूतस्यार्थक्रियापूर्व्वकं कार्य्यमुत्पादयितुं सामर्थ्यं न क्षणिकस्येति वाच्यम् किमसौ स्थायी पदार्थ एकमेव कार्य्यमुत्पादयेत्? उत युगपदनेकानि? उताहो क्रमेणानेकानि?, तत्र प्रथमद्वितीययोः कृतं स्थायित्वेनासत्कार्य्योत्पादनस्य क्षणिकेनैव सिद्धेः। न तृतीयः समर्थस्य क्षेपायोगात्। अतोभावानामेकक्षणस्यैव क्षणोऽर्थक्रियाकारित्वं सत्त्वमिति, नैतद्युक्तं त्वन्मते अर्थक्रियायाद्दुर्निरूपत्वात्। किमर्थक्रिया नाम संविदां स्वगोचरज्ञानजननं? किंवा क्षणान्तरोत्पादनम्? आद्येऽपि स्वसन्ताने तज्जननं? पुरुषान्तरसन्ताने वा? सर्व्वसन्ताने वा? नाद्यः संविदां स्वप्रकाशत्वेन तदसम्भवात्, अस्तु तर्हि द्वितीयः, देवदत्तसंवेदनं हि स्वप्रकाशमपि यज्ञदत्तसंवेदनस्य विषयत्वाज्जनकं भविष्यतीति, तदसत् न तावत् प्रत्यक्षज्ञानस्य विषयतया जनकमिति शक्यं वक्तुं, न हि पुरुषान्तरज्ञानं प्रत्यक्षतया कश्चिद्दृष्टं। नाप्यनुमानज्ञानविषयतया जनकं त्वया पुरुषान्तरप्रत्यक्षज्ञानमेव विषयजन्यमित्यङ्गीकारात्। ननु तर्हि तृतीयोऽस्तु सर्वज्ञस्य हि प्रत्यक्षज्ञानं सर्वपुरुषगतसंवेदनानि विषयीकुर्व्वत् तैर्जन्यते, मैवं तथा सति सोपप्लवैः सांसारिकसंवेदनैरीश्वरसंवेदनमप्युपप्लुतं स्यात् तन्मते ज्ञानज्ञेययोरभेदात्। अथ ईश्वरज्ञानमुपप्लुतमपि सोपप्लवदोषं भजते तत्त्वज्ञानेनोपप्लवस्य बाधादिति चेत् मैवं न तदेव ज्ञानं सोपप्लवं बाधते उपप्लवस्यैकक्षणेन क्षणे प्राप्तिबाधयोरसम्भवात् नापि ज्ञानान्तरमुत्पाद्य उपप्लवं बाधितुं क्षमते पूर्व्वज्ञानोपप्लवस्य ज्ञानान्तराविषयत्वात् विषयत्वे पूर्व्वज्ञानान्तरमप्युपप्लुतं सत् कथं बाधकं स्यात्? नचोपप्लवानां निरूप्य संवेदनानामैश्वरज्ञानं प्रति विषयतया जनकत्वं, तस्मिन् सत्युपप्लवानभिज्ञः कथमीश्वर उपदिशेत्। नापि क्षणान्तरोत्पादनमर्थक्रियेति द्वितीयः पक्षः, त्वत्प्रक्रियया चरमक्षणस्यासत्त्वप्रसङ्गात् तथा हि विज्ञानानि स्थायित्वकल्पनया द्रव्यगुणादिदोषैर्विषयैश्चोपप्लुतानि पूर्व्वपूर्व्वसजातीयविज्ञानलक्षणेभ्यः संस्कारेभ्य उत्तरोत्तराण्युत्पद्यन्ते तत्र सर्वं क्षणिकमिति भावनया स्थायित्वकल्पना निवर्त्तते स्वलक्षणमिति भावनया द्रव्यगुणादिकल्पना नश्यति दुःखमिति भावनया रागादिदोषप्रवर्त्तितसुखदुःखोपप्लवाः क्षीयन्ते, शून्यमिति भावनया विषयोपप्लवविगमः। ततश्च भावनाभेदैश्चतुर्विधैश्चतुर्विधसंस्कारविरोधिभिश्चतुर्विधोपप्लवे क्रमेण मन्दीकृते भावनाप्रकर्षस्यान्त्यभूतादुपान्त्यप्रत्ययात् सर्वोपप्लवविरक्तं विज्ञानमुत्पद्यते तच्च संस्कारसन्तानान्त्याश्चरमक्षण इति गीयते, तस्य च कार्य्याभावादसत्त्वापत्तौ तथैव क्रमेण पूर्व्वपूर्व्वज्ञानानामप्यसत्त्वं प्राप्नुयात्। चरमक्षण ईश्वरज्ञानस्य जनकत्वाद्वियत्वादिति-चेत् तर्हि चरमक्षणसर्वज्ञज्ञानयोर्विशुद्धतया तुल्यस्वभावयोरेकसन्तानत्वं स्यात् तुल्यस्वभावयोः कार्यकारणभावस्यैकसन्तानलक्षणत्वात् ततश्च सन्तानाविच्छेदादनिर्मोक्षः स्यात्। सर्वज्ञसन्तानप्रवेशएव मोक्ष इति चेत् एवमपि चरमक्षणस्य ईश्वरज्ञानविषयत्वं दुर्निरूपमिति, तज्जनकत्वं दूरापास्तं, भेदे हि सति संविदो विषयविषयिभावः नचेह भेदोऽस्ति। न तावत् संवित् संविदन्तरात् संविदाकारेण भिद्यते तथा सति वैलक्षण्यसिद्धये प्रतियोगिनोऽसंवित्त्वप्रसङ्गात् नाप्यसंविदाकारेण धर्म्मिणोरसंवित्त्वप्रसङ्गात् तस्माच्चरमक्षणस्य सर्वज्ञज्ञानोत्पादनलक्षणार्थक्रियया सत्त्वं दुःसम्पादम्। यदाप्यर्थक्रिया कल्प्येत तदापि सा किं कारणस्य सत्त्वं सम्पादयति? उत प्रतीतिम्? नाद्यः कार्य्यात् पूर्व्वमेव कारणस्य सत्त्वात् अन्यथा कारणत्वायोगात्। द्वितीये तत् कार्य्यं स्वकार्य्येण प्रतिभासितं सत् कारणप्रत्यायकं तदपि तथैवेत्यनवस्था स्यात्। किन्तु स्वयमेव स्वात्मानं प्रकाशयतीति नानवस्थेति चेत् तर्ह्यर्थक्रिया प्रतीतिहेतुरिति पक्षो हीयेत। स्वयमेव स्वार्थक्रियेति वदत आत्माश्रयं दुर्निवारम्। तदेवं न सत्त्वेनार्थक्रियाकारित्वं किन्तु स्वाभाविकः कश्चिद्धर्मः, तथा चैकस्मिन् क्षणेऽर्थक्रियां कृत्वा पुनस्तूष्णीभूतस्यापि स्थायिनः सत्त्वं न विरुध्यते। यदुक्तं स्थायिनः क्रमेणानेककार्य्योत्पादकत्वं नास्ति समर्थस्य क्षेपायोगात् इति तदसत् शक्तस्यापि सहकारिसन्निधानविशेषवशापेक्षया कार्य्यक्रमोपपत्तेः लोके तथैवानुभवात्। अथ मतम् शक्तस्य सहकार्य-

पेक्षाया अप्ययुक्तत्वात् अशक्ता एव सर्वे पदार्थाः परस्परापेक्षया सामग्रीं जनयन्ति सा च शक्ता कार्य्यमुत्पादयति, तदप्ययुक्तं सामग्रीं प्रत्यपि शक्तत्वे पदार्थानामन्योन्यापेक्षा न युक्ता अशक्तत्वे च तदजनकत्वात् निष्फलान्योन्यापेक्षितं अनपेक्षैव सर्वत्र स्यात् । मा भूत् कस्यापि सहकार्य्यपेक्षेति चेत् न अनुभवविरोधात् । न चानुभवो भ्रान्तः, बाधाभावात् । यद्यपि शक्तस्याशक्तस्य वाऽपेक्षा न युक्तेत्युक्तं तथापि शक्तत्वाशक्तत्वविनिर्मुक्तस्य स्वरूपमात्रस्य सहकार्य्यपेक्षा स्यात् न्यायस्यास्य त्वयाप्यङ्गीकार्य्यत्वात् । तथा हि कार्य्यसत्त्वेऽसत्त्वहानिः असत्त्वे चासंबद्धता कारणविशेषेण कार्य्यविशेषस्य समवायानिरूपणात् सर्वं सर्वस्मादुत्पद्येतेति परेण चोदिते सत्त्वासत्त्वसम्बद्धत्वासंबद्धत्वविशेषं विमुच्य नियतपूर्व्वभावि कारणं नियतोत्तरभावि कार्य्यमिति त्वया निरूपणीयम् अन्वयव्यतिरेकौ तत्र निरूपकौ स्त इति चेत् सहकारिणोरपि तौ स्त एव तस्मादस्त्येव सहकार्य्यपेक्षा तत्कृतश्चोपकारविशेषश्चिन्त्यताम् । यत्त्वेकदेशी मन्यते अन्वयव्यतिरेकसिद्धा भूम्युदकादिसहकारिणो बीजाख्ये कारणे विशेषमुच्छूनताख्यं जनयन्ति सतश्च बीजमङ्कुराख्ये कार्य्ये शक्तम् अन्यथानुपकारो भूम्यादिर्बीजेन नापेक्ष्येतेति, तदसत् बीजं स्वगतविशेषोत्पत्तौ शक्तं न चेत् सहकारिसन्निधानमपि न तं जनयेत् ततो नाङ्कुरोत्पादनेऽपि शक्नुयात् । अथ शक्तं तदापि यदि सहकारिसहकृतः विशेषान्तरं प्रागुच्छूनतायां शक्तं स्यात् तदाऽनवस्था स्यात् । अथ तदसहायस्यैव तत्र शक्तं तदाङ्कुरेऽपि विशेषमन्तरेणैव शक्तं स्यात् । अथ मतम् अङ्कुरोत्पत्तिरुच्छूनत्वजन्मपूर्व्विका उच्छूनतोत्पत्तिस्तु सहकारिसन्निधिमात्रसाध्या तथैव दृष्टत्वादिति चेत् न तथासति शक्तिमता कारणेन स्वात्मन्यनुपकुर्व्वतापि सहकार्य्यपेक्ष्यत इति त्वयैव स्वमतव्याघात आपादितः स्यात् । तस्मादेकदेशिपक्षो युक्तिसहः । अन्यत एवास्मन्मतमादरणीयं न हि वयं तद्वत्कारणस्वरूपे सहकार्य्युपकारं ब्रूमः किं तर्हि क्षणिकात्मकात्कारणादुत्पद्यमानं कार्य्यं सहकारिणमपेक्षते कार्य्यस्य बहुकारणसाध्यत्वादिति ब्रूमः । यद्यपि स्थायिकारणमतेऽप्येतावत् समानं तथापि तन्मते यावत् कारणसत्त्वं नैरन्तर्य्येण कार्य्योत्पत्तिर्दुर्व्वारा नियामकाभावात् । न च सहकारिसम्बन्धो नियामकः सम्बन्धस्यापि यावत्सम्बन्धिसत्त्वं भावितव्यत्वात् । न च तस्य सम्बन्धान्तरं नियामकम् अनवस्थापातात् । न च वाच्यं क्षणिकपक्षेऽपि न कारणसत्त्वक्षणे कार्य्यं जायते तयोर्यौगपद्यप्रसङ्गात् अन्यदा जन्माङ्गीकारे चानियमापत्तिरिति, कारणानन्तरक्षणस्य कार्य्यनियामकत्वात् अतः क्षणिकत्वपक्ष एव श्रेयान्, नैवं सर्व्वत्र हि कार्य्यकारणभावो व्याप्तिबलेन निश्चेतव्यः तत्र किं त्वन्मते कार्य्यकारणव्याप्तिर्धूमाग्निव्यक्त्योः ? उत तत्सन्तानयोः ? । नाद्यः क्षणिकयोरन्वयव्यतिरेकबुद्धिद्वयकालावस्थानायोगात् । द्वितीयेऽङ्गारावस्थादग्नेर्धूमो जायेत तत्सन्तानपातित्वाविशेषात् काष्ठभावात्तदा जन्मेति चेत् तथापि स्वसन्ताने विद्यमानत्वात् नचाग्निकाष्ठयोः सम्बन्धाभावः सन्तानद्वयनित्यत्वेन तस्याप्यनिर्व्वाह्यत्वात् । सम्बन्धः सम्बन्धान्तरापेक्षः स्यात् न तदात्म इति चेत् न अनवस्थापत्तेः त्रिचतुरकक्षाविश्रान्त्यभ्युपगमेन नानवस्था इति चेत् तर्हि स्थायिकारणाभ्युपगमेऽप्यनवस्थाया । सुपरिहरत्वान्नोक्तदोषः । ननु स्थिरकारणे उपकारकत्वाङ्गीकारे यदि स्थायित्ववादी स्वमतमपि समीकुर्य्यात् तर्हि तदङ्गीकुर्म इति चेत् धूमकाष्ठयोः कार्य्यसहकारिणोरुपकार्य्योपकारकभावस्यान्वयव्यतिरेकसिद्धस्यावर्ज्जनीयत्वादन्वयव्यतिरेकयोश्चोपकार्य्योपकारकभावसाधकत्वं मूलकारणतत्कार्य्ययोरग्निधूमयोरिव । तस्मादुपकारके सहकारिणि मतद्वयेऽप्यपेक्षा समाना । तथा च क्षणिकपक्षे यथैकस्य वह्नेः सहकारिभेदात् देशभेदाच्च युगपदनेककार्य्यमभ्युपेयते वह्निः स्वदेशे वह्न्यन्तरं जनयति उपरिष्टाद्धूमम्, अन्तस्ताङ्कुरं, पुरुषे विज्ञानञ्चेति तथा स्थायिपक्षेऽप्येकस्य कारणस्य कालभेदात् सहकारिभेदाच्चानेककार्य्यजनकत्वात् तत्र क्रमकारित्वं किं न स्यात् । एतेनैतत् क्षणिकत्ववादिनोऽभिमतसाङ्कर्य्यं शङ्कितं पूर्व्वस्य परिकर्म्मव्याख्यानाद्व्याख्यातं निराकृतत्वात् । तदेवमतिदुष्टं क्षणिकविज्ञानवादिमतमुपेक्ष्य कूटस्थनित्यचैतन्यं सर्व्वं कल्पनातया प्रतीयत इत्ययमेव वेदान्तवादोऽतिनिर्दोषत्वादादरणीय" इति ।

आत्मतत्त्वविवेके च ''अथ बाधकं भवदात्मनि क्षणभङ्गो वेत्यादिना" पञ्चविप्रतिपत्तीनामाशङ्कितानां मध्ये प्रथमविप्रतिपत्तिनिरासेऽस्य विस्तरो दृश्यः ।

क्षणभङ्गुर त्रि० क्षणं प्राप्य भङ्गुरः । क्षणमात्रेण विनाशशालिनि "यदि पुनरमी किमपि नाहमस्मदस्ति किञ्चिदपि वस्तु स्थिरं, विश्वमेव क्षणभङ्गुरम्, अलीकमेव व्यवहारयेरन् न किञ्चिदपि कामयेरन् न चाकामयमानाः

केचिदपि प्रवर्त्तन्ते" आत्मत० शिरोमणिः [शब्दमा०

**क्षणारामिन्** पुंस्त्री० क्षणेक्षणं रमते रम-णिनि । पारावते

**क्षणिक** त्रि० क्षणः स्वसत्ता व्याप्यतयाऽस्त्यस्य ठन् । क्षणमात्र स्थायिनि । तल्लक्षणञ्च आत्मतत्त्वविवेकव्याख्याने रघुनाथ शिरोमणयुक्तम् यथा "क्षणिकत्वञ्च स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति कादाचित्कत्वम् उत्पत्तिमत्त्वं वा । उत्पत्तिश्च स्वाधिकरणक्षणाहितप्रागभावप्रतियोगित्वसम्बन्धः । क्षणश्च स्वाधेयपदार्थप्रागभावानाधारः समयः क्षणिकस्तु विधेर्यौगिकानां प्रागभावे चरमध्वंसे च, निषेधस्य बौद्धानामलीके, स्वाधिकरणसमयप्रागभावाधिकरणक्षणाहितत्वं क्षणिकत्वमिति तु न्यायः" । अत्र गदाधरव्याख्या कादाचित्कशब्दे १८८० पृ० दर्शिता अत्र कादाचित्कत्वं सत्त्वे सति किञ्चित्कालवृत्त्यभावप्रतियोगित्वम् । "क्षणिकत्वम् ध्वंसप्रागभावयोः प्रतियोगित्वम्" सप्ताप० । २विद्युति स्त्री हेम०

**क्षणित** त्रि० क्षणः संजातोऽस्य तार० इतच् । जातक्षणे

**क्षणिन्** त्रि० क्षण: विश्रान्तिकालः उत्सवोवाऽस्त्यस्य इनि । क्षणात् १विश्रान्ते २उत्सवान्विते च । "तं विश्रान्तं शुभे देशे क्षणिनं कल्पमच्युतम्" भा० व० १२अ० । स्त्रियां ङीप् सा च ३रात्रौ शब्दर०

**क्षणेपाक** पु० क्षणे पच्यते पच—कर्मणि घञ् न्यङ्क्वा कु त्वम् अलुक्स० । क्षणेन पच्यमाने पदार्थे । [च क्षतम् ।

**क्षत्** स्त्री० क्षण—भावे संप० क्विप् । छनने विदारणे १पीडने

**क्षत** त्रि० क्षण—क्त । १विदारिते २पीडिते ३दर्पिते च । "क्षीरम्याधमनेन पत्रिणा हृदि क्षतोऽस्तिमिति" रघुः । ४क्षतयुक्ते "क्षताः कामम्" कुमा० "मजम्बरणाङ्गुलीतः क्षतः स्वशरयुतोरुचौ" भट्टिः "क्षतयोनिश्च अपि स्त्रियः" "कन्यां चाक्षतयोनिश्चेत् पाणिग्रहणदूषिता" इति च नारदः । विदारणञ्च शस्त्रादिभिः अवयवविभागः, "अङ्गुलीर्भेरकर्क्षता" रघुः । सर्पेण दंशनेनाङ्गुल्यां विदारणमुक्तम् । भावे क्त ।५विदारणे न० "नखक्षतानीव वनस्थलीनाम्" कुमा० "अनङ्गेनापि सुन्दर ! हरसि ममासे यतः शरसम् किं पुनरङ्गतस्त्वं नखरक्षतैस्सहाः" सा०द०। ६घर्षणे "क्षतोज्ज्वलाङ्गुलनखांशुभिन्नया" माघः । उपचारात् तत्कार्य्ये ७दुःखादौ "क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दोभुवनेषु रूढः" रघुः उपचारात् (घा) इति प्रसिद्धे व्रणरूप

पूयादौ ८व्रणे हेमच० "प्रकुपितास्तु दोषामेदखमिपच्य मांसशोणिते प्रदूष्य कण्डूं जनयन्ति तत्र कण्डूयनात् क्षतं समुपजायते क्षते दुष्टाश्रजाः प्ररोहाः पिच्छिल रक्तस्राविणो जायन्ते कूर्चिकाःख्यन्तरमुपरिष्टाद्वा" सुश्रु० "यस्तु व्रणेपूपयुज्यते स भूयःकल्क इति संज्ञां लभते" सुश्रु० व्रणशब्दे विवृतिः ।

क्षतनिमित्तमरणेऽशौचभेदमाह शु० त० व्यासः "क्षतेन म्रियते यस्तु तस्याशौचं भवेद्यदा । आ सप्तकाच्चिरात्रं स्यात् दशरात्रमतः परम् । शस्त्रघाते मृतः कश्चित् यदि कश्चित् प्रमीयते । अशौचं प्राकृतं तत्र सर्व्वयर्णेषु निश्चयः" । "अत्र शस्त्रघातपदं क्षतेतरशस्त्रघातपरं पारिभाषिकशस्त्रघातपरमपि । यथा देवीपु० "पक्षिमत्स्यमृगैर्ये तु दंष्ट्रिशृङ्गिनखैर्हताः । पतनानशनप्रायैर्वज्राग्निविषबन्धनैः । हता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः" । अन्यथा क्षतं विना पतनादिभिर्विलम्बमृतानां दिनग्रहणेऽनध्यवसायः स्यात् । न च शास्त्रीये व्यवहारेऽन्तरङ्गत्वेन पारिभाषिकग्रहणस्यैव युक्तत्वमिति वाच्यम् आद्ये पारिभाषिकापारिभाषिकशब्दश्रवणात्प्रहणवदत्रापि तथा युक्तत्वात् पारिभाषिकत्वादेव न प्रकरणनियमः" शु०त०

**क्षतकास** पु० ५त० । क्षतजाते कासभेदे "पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः" भावप्र० । कासशब्दे २०७२पृ० विवृतिः [शब्दच० । २लाक्षायां स्त्री हेम० ।

**क्षतघ्न** पु० क्षतं हन्ति हन हेतौ-क । (कुकुरसोंगा) क्षुपभेदे ।

**क्षतज** न० क्षतात् जायते जन-ड । १रुधिरे "अमरः स च्छिन्नमूलः क्षतजेन रेणुः" रघुः "क्षतजकषायपंकजभ्रुवा च भ्रमता" काद० २पूये हेम० । ३क्षतजातमात्रे त्रि० । सुश्रुतोक्ते ४कासभेदे कासशब्दे तद्विस्तार उक्तप्रायोऽपि स्पष्टार्थं सुश्रुतवाक्यमत्रोदाह्रियते यथा "उक्ता ये हेतवो नृणां रोगयोः क्षतशुक्रयोः । कासस्यापि च विज्ञेयास्त एवोत्पत्तिहेतवः । धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च । विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव । प्राणोह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः । निरेति वक्त्रात्सहसा सदोषः कासः स विद्वद्भिरुदाहृतस्तु । स वातपित्तप्रभवः कफाच्च क्षतात्क्षयाच्चः क्षयजोऽपरश्च । पञ्चप्रकारः कथितो भिषग्भिर्विवर्द्धितो यक्ष्मविकारकृत् स्यात् । भविष्यतस्तस्य तु कण्ठकण्डूर्भोज्योपरोधो गलतालुलेपः । स्वशब्दवैस्वर्यमरोचकोऽग्निस्तु दृष्ट लिङ्गानि भवन्त्यमूनि ।

चतुर्थ्यां लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेत नैर्ऋ-तं वा चरुं निर्व्वपेत् तस्य जुहुयात् कामाय स्वाहा काम-कामाय स्वाहा । नैर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहा इति एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने व्रतान्तरेषु च"। आमशायश्चैनाहिताग्नौ विसर्गे दिवास्वप्ने चाभ्यासे चैवम् । प-शोरभावे नैर्ऋतं चरुं निर्व्वपेदित्यर्थः । एतच्चामावास्यायां कर्त्तव्यमित्याह बौधायनः । "अथावकीर्ण्यमावस्यायां निशाग्निमुपसमाधाय संपरिस्तीर्य्य दार्व्वीं कौमिकीं परिचरां कृत्वा द्वे आज्याहुती जुहुयात्" । अत्र च व्रतान्तरेष्वित्यभिदधता वशिष्ठेन द्वादशाहादिकव्रतेषु पुरुषार्थचान्द्रायणादिषु च यथातिदिष्टं तथा चैतदतिदिष्ट-मविशेषात् । अतएव "कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः । अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः" इति मनुना सामान्येनैवावकीर्णित्वलक्षणमभ्यधायि अका-मतो रेतसः स्रावे मनुः "स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः । स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्म्मामित्यृचं जपे-त्"। ब्रह्मचारिणो गुरुदारगमने तु तद्गमनोक्तप्रायश्चित्ते-नैव गुरुणा लघ्ववकीर्णिप्रायश्चित्तं कृतं भवेत् । यथा ब्रह्मवधप्रायश्चित्तेनैव गुरुणा तदन्तरीयकावगोरण-प्रायश्चित्तं सम्पद्यते" ।

क्षतहर न० क्षतं हरति हृ—हेतौ ट । क्षतहरणहेतौ १अगु-रुचन्दने शब्दच० । २क्षतहारकमात्रे त्रि० ।

क्षताशौच न० क्षतनिमित्तमशौचम् । व्रणादिक्षतकृते अत्युक्ते अशौचे । "समराः क्षतकी क्रूर्य्या मत्तोन्मत्त-जडवलाः । क्षतबन्धुरबन्धुश्च दर्शान्ध्यादौ स्वकालतः" प्रा०त० देवलः । अशुचित्वमप्याह तत्रैव सएव । "दन्त-लग्नमसंहार्य्यं लेपं मन्येत दन्तवत् । न तत्र बहुशः कुर्य्यात् यत्नमुद्धरणे पुनः । भवेदशौचमत्यन्तं तृणवेधनात् क्षते क्षते" । तृणवेधादित्युपलक्षणं व्रणहेतुमात्रस्य । अस्यापवादः "चन्द्रसूर्य्यग्रहे चैव क्षतानां पितृकर्म्म-णि । महातीर्थे तु संग्रामे क्षतदोषो न विद्यते" प्रा०त० पुलस्त्यः । क्षतानां पितृकर्म्मणि नित्यकाम्यत्वात् विना निमित्तोदकदानादौ । संग्रामे नियतशस्त्रादिना सम्यक्प्राप्ते ।

क्षति स्त्री क्षण-क्तिन् । १हानौ, २अपचये३नाशे च । "कृयानां न क्षतिः काचिन्न रथस्य न मातलेः" भा० व० १७२ अ० । "द्विषां क्षतीर्दा दधमे मिथोमुखाः" किरा० ।

क्षतोदर क्षतजाते उदररोगभेदे उदरशब्दे ११५० पृ० विवृ-तिः । शल्यमित्यादि तल्लक्षणं सुश्रुतवाक्यं भावप्र० व्या-ख्याय चरकस्तु निर्व्वातिप्रदर्शनेन विशेष उक्तो यथा "शल्यं कण्टककर्करादि । अन्नोपहितं भुक्तं यत् अन्त्रं भिनत्ति यथा अन्यथा आगतं भोजनं विना आगतं, शर्क-रादिभिरितरथापि यदन्त्रं भिनत्ति तत् । उपलक्षणम् । जृम्भणमत्यशनं वा यदन्त्रं भिनत्ति । यतश्चक्रस्त्ररकोक्त शर्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतैः । भिद्येतान्त्रं यदा भुक्तं जृम्भयात्यशनेन वेत्"। तस्मात् भिन्नादन्त्रात् । गुदतस्तु भूयः कृत्वात्मन्त्र पुनर्गुदतः स्रवेदित्यर्थः । दाल्यति विदार्य्यत एव । पदार्थविदारणत्वात् । एतत् क्षतोदरमन्यत्रान्तरे परिस्राव्युदरमादिष्टम्"

क्षत्तृ पु० स्त्री० क्षद—संवृतौ संज्ञायाम् तृच् अनिट् । १सारथौ २द्वाःस्थे ३क्षत्रियायां शूद्रेण जाते वर्णसङ्करे पुंस्त्री० अमरः स्त्रियां ङीप् । ४दासीपुत्रे ५नियुक्ते ६वेधसि पु० मेदि० ७मत्स्ये संक्षिप्तसा० । उपधादीर्घविधौ नप्तृशब्दस्य पृथग्ग्रहणात् औणादिकतृजन्तस्यान्यस्य निषेधेऽपि दीर्घः क्षत्तारौ "क्षत्तारौ ते प्रजापते । तावितायतं स्फातिम्" २,२४,७, "यत् क्षत्तारं ह्वयत्या" अथ० ८,६,४८,आ-शिंजतस्याग्निः क्षत्ता विश्वे देवाः सभासदः" श०ब्रा० १२, ५,४,६, "पिपिक्षाय क्षत्तारम्" यजु० ३०,१३, । "क्षत्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेव च" या० उक्तेः "शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् । वैश्य-राजन्यविप्रासु जायन्ते वर्णसङ्कराः । एकान्तरे त्वानु-लोम्यादम्बष्ठोग्रौ यथा स्मृतौ । क्षत्तृवैदेहकौ तद्वत् प्रातिलोम्येऽपि जन्मनि" मनूक्तेश्च क्षत्रियायां विप्रा-ज्जात इति अमरमतत्वेन शब्दक० उक्तिः प्रामादिकी । "क्षत्ता स्यात् सारथौ द्वाःस्थे, क्षत्रियायाञ्च शूद्रजे" इति नामार्थेऽमरोक्तेः मनुयाज्ञवल्क्यादिवाक्यादाच्च "माहिष्योऽर्य्यक्षत्रिययोः क्षत्ता शूद्रयोः सुतः" इत्यम रोक्तौ अर्य्याशूद्रजातस्य क्षत्तृत्वोक्तावपि तत्र अर्य्या स्वा-मिनी योग्यत्वात्तत्र क्षत्रिया, तेन न पूर्व्वापरविरोध इति भानुदीक्षितव्याख्या । अतएव मेदिन्याम् "क्षत्ता शूद्रक्ष-त्रियाजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्याद्विधुन्तुदवेधसोः पुमान्" । तस्य वृत्तिमाह मनुः "क्षत्तुग्र-पुक्कसानां तु बिलौकोवधबन्धनम्" । तत्र दासीपुत्रे "ततः प्रीतमनाः क्षत्ता (विदुरः) धृतराष्ट्रं विशाम्पते ! । उवाच दिष्ट्या कुरवोवर्द्धन्त इति विस्मितः । वैचित्र-वीर्य्यस्तु नृपो निशम्य विदुरस्य तत्" भा०आ० २०० अ० । विदुरस्य दासीपुत्रत्वं विदुरशब्दे वक्ष्यते "ततोऽपश्यत्

क्षत्रवृद्धात्मजस्तत्र सुहोत्रोऽथ महायशाः" हरिवं० २९अ० क्षत्रवृध् अप्यत्र । "यः पुरूरवसः पुत्र आयुस्तस्याभवन् सुताः । नहुषः क्षत्रवृद्धश्च रजी रम्भश्च वीर्य्यवान् । अनेना इति राजेन्द्र ! शृणु क्षत्रवृधोऽन्वयम् । क्षत्रवृद्धसुतस्यासन् सुहोत्रस्यात्मजास्त्रयः" भाग० ९।१७।१

क्षत्रेषु इषुः । २[illegible] त्रयोदशस्य रौच्यनामकस्य मनोः ३पुत्रभेदे "त्रयोदशस्य पुत्रास्ते चित्रवास्तु रुचेः सुताः । चित्रसेनो विचित्रश्च नाभोधर्म्मधृतोर्हतः । सुनेत्रः क्षत्रवृद्धश्च सुतपा निर्भयो दृढः" हरिवं० ७अ०

क्षत्रसव पु० ६त० । क्षत्रियकर्त्तव्ये यज्ञभेदे

क्षत्रान्तक पु० ६त० । परशुरामे "क्षत्रान्तकक्षात्रभिभवेन चैव" भट्टिः ६त० । क्षत्रान्तकारिन् अप्यत्र "महानन्दसुतः शूद्रागर्भोद्भवोऽतिलुब्धः परशुराम इव अपरोऽखिलक्षत्रान्तकारी भविता ततः प्रभृति शूद्रा भूपाला भविष्यन्ति" मु० त० विष्णुपु०

क्षत्रिय पुंस्त्री० क्षत्रे राष्ट्रे साधु तस्यापत्यं जातौ वा घः । १ब्राह्मणानन्तरवर्णे अमरः टाप् । "नृपायां नृपसंसर्गात् प्रच्छन्नात् गूढजातकः । सोऽपि क्षत्रिय एव स्यादभिषेके च वर्ज्जितः" उशनसोक्ते नृपात् नृपपरिणीतायां क्षत्रियजातिस्त्रियां गूढोत्पन्ने पुत्रे च" । पा० उक्तो घस्तु जातावेव अपत्यमात्रे इञ् । क्षात्रिः क्षत्रजातेरपत्यमात्रे पुंसि स्त्रियां वा ङीप् । स्वार्थे क । तत्रार्थे स्त्रियां टापि यपूर्वत्वात् वा अत इत्वम् । क्षत्रियिका क्षत्रियका । ततो भावे त्व क्षत्रियत्व न० तल् क्षत्रियता स्त्री तद्भावे । ब्राह्मणत्ववत् क्षत्रियत्वस्य जातिविशेषत्वेऽपि गुणविशेषेण शूद्रस्यापि क्षत्रियत्वादि भवति । "शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः । वैश्यत्वं लभते ब्रह्मन् ! क्षत्रियत्वं तथैव च । आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते" भा० व० २११ अ० । सद्गुणाश्च तत्रैवोक्ताः । "शूद्रोऽपि कर्म्मणि यतो वैश्यत्वादि कर्म्म सद्गुणवन्तं वैश्यत्वादयः समभजायन्तीति गुणकृत एव वर्णविभागो न जातिकृत इति भावः" नीलक० । तस्य पत्नी ङीष् वा आनुक् । क्षत्रियाणी क्षत्रियी अमरः । "अर्य्यक्षत्रियाभ्याम्" वा-स्वार्थे आनुक् ङीष् चेति सि० कौ० । पत्न्यान्तु ङीषेवेत्युक्तम् । जातौ तु योपधत्वात् न ङीष् किन्तु टाप् । क्षत्रिया क्षत्रशब्दे उदा० ।

क्षत्रियहणा पु० क्षत्रियं हन्ति अच् णत्वम् । परशुरामे । "किं न वै क्षत्रियहणो हरतुल्यपराक्रमः । विदितः पुत्र ! रामस्ते यतस्त्वं योद्धुमिच्छसि" भा० उ० १७९अ०

क्षत्रियासन न० "क्षत्रियासनमास्थाय यत्कृत्वा धनवान् भवेत् । केशेन पादयुगलं बद्धा तिष्ठेद्योगविरक्तः" रुद्रयामलोक्ते आसनभेदे

क्षद संभृतौ वेधने भक्षणे च सौ० आ० सक० सेट् । क्षदते अक्षदिष्ट क्षद्मा । "तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन् वार्हत्युक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत्" ऐत० ब्रा० १।१५ "शतं मेषान् वृक्ये चक्षदानम्" ऋ० १।११६।१६ । "तस्मै हुतं सुरां मध्वमर्य क्षदामहे" अथ०।१०।६।५

क्षद्मन् न० क्षद–भक्षणे–मनिन् । १उदके २अन्ने च निघ० "दाहस्त्राणो वज्रमिन्द्रो गभस्त्योः क्षद्मेव तिग्ममसनाय संश्यत्" ऋ०१।१२०।४ "क्षद्मेवार्येषु तवरीष उग्रा" ऋ०१०।१०६।७

क्षन्तृ त्रि० क्षम–तृच् । क्षमाशीले सहिष्णौ अमरः "ये क्षन्तारो नाभिजल्पन्ति चान्यान्" भा०अ०।१०२अ० ।

क्षन्तव्य त्रि० क्षम–तव्य । १सोढव्ये "तदेतत् क्षन्तव्यं न खलु मनुरोषः समुचितः" कर्पूरस्तवः, भावे तु कर्त्तव्य २क्षमायां न० "क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्य्यिणां नृणाम्" । मनुः "सर्व्वथा वर्त्तमानस्य [illegible] सदा । क्षन्तव्यं पुत्र !" भा० आ० ४१अ०

क्षप क्षान्तौ अद०चुरा०उभ०सक० सेट् । क्षपयति ते अचिक्षपत् त । क्षपयाम् बभूव आस चकार चक्रे । "अरण्ये काष्ठवत् त्यक्त्वा क्षपयेयुस्त्र्यहं ततः" मनुः

क्षप प्रेरणे चु० इदित् उभ० सक० सेट् । क्षम्पयति ते अचक्षम्पत् त । क्षम्पयाम् बभूव आस चकार चक्रे । अयं मित् "तेन चिणि अक्षम्पि-अक्षाम्पि । णमुलि क्षम्पं क्षम्पं-क्षाम्पं क्षाम्पम्" अनुपधाया अपि वा दीर्घः ।

क्षप् स्त्री चु० क्षप-क्विप् । रात्रौ "स क्षपः परि षस्वजे" ऋ०८।४१।३ "क्षपोरात्रीः" भा० "क्षप उस्रा वरिवस्यन्तु देवाः" ६।५२।१५ ।

क्षप पु० चु० क्षप–कर्म्मणि अच् । उदके निघ०

क्षपण पु० क्षपयति विषयरागं क्षप-ल्यु । बौद्धसंन्यासिनि दिगम्बरे स्वार्थे क । तत्रार्थे "एकः क्षपणकः । शाकाहर्त्ती तत्र क्षपणक ! दश शाकाशाः । यत्र क्षपणक ! दश शाकाशास्तत्र क्षपणक ! का शाकाशा" उद्भ० "स ददर्श नग्नक्षपणकमायान्तम्" भा० आ० ७८६श्लो० "नग्नक्षपणके देवे-

रजसः किं करिष्यति" पञ्च॰ भावे ल्युट्। २क्षेपणे "स-म्यक्चारित्रेयुक्तोह्यनतीते क्षपणं कृतम् "भुक्तातोऽन्त्य-समस्तायमनःस्रा क्षपणं नरकम्" मनुः कर्त्तरि ल्यु। ३नाशके त्रि॰ "चरितानि यत्र गायन्ति लोकशमलक्षपणा-नि भक्ताः" भाग॰ २।१५।७ श्लो॰

**क्षपणी** स्त्री क्षप-कर्म्मणि ल्युट् ङीप्। क्षेपण्याम् अमरटी॰

**क्षपण्यु** क्षप-बा॰ अन्यु। अपराधे शब्दमा॰।

**क्षपा** स्त्री क्षपयति चेष्टाम् क्षप-अच्। १रात्रौ २हरिद्रायां च अमरः "क्षपातमस्काण्डमलीमसं नभः"। "प्रतिक्षपं ह-र्म्यतलेषु यत्र" माघः "दिनक्षपामध्यगतेव सन्ध्या" रघुः।

**क्षपाकर** पु॰ क्षपां करोति कृ-ट। १चन्द्रे २कर्पूरे च अमरः क्षिप् क्षपाकृदयम्। "वियदालयकूटघटिताः क्षपाकृतः" माघः

**क्षपाचर** पुंस्त्री॰ क्षपायां चरति चर-ट। १राक्षसे "नियोगे च मतं कृत्वा निधायासिं क्षपाचरः" भा॰ व॰ २८८अ॰। स्त्रियां जातित्वात् ङीष्। २रात्रिचरमात्रे त्रि॰

**क्षपाट** पु॰स्त्री॰ क्षपायामटति अट-पचा॰ अच्। १राक्षसे "ततः क्षपाटैः पृथुपिङ्गलाक्षैः" भट्टिः स्त्रियां ङीष्।

**क्षपानाथ** पु॰६त॰। १चन्द्रे २कर्पूरे च "क्षिप्रं क्षपानाथ इवा-धिरूढः" माघः क्षपापत्यादयोऽप्यत्र।

**क्षम** सहने भ्वादि॰ आत्म॰सक॰वेट्। क्षमते अक्षमिष्ट अक्षंस्त चक्षमे क्षान्तः क्षमितः। क्षमिता क्षन्ता। "इन्द्र त्वा यशः क्षममाण मानट्" ऋ॰१०।१०४।६। योनित्यं क्षमते तात! बहून् लोकान् स विन्दति" भा॰ व॰ १०२५ श्लो॰। "का-र्पण्यात् साधुभावाच्च क्षन्तो राजन्न चक्षमे" भा॰ आ॰ १५७अ॰। "क्षन्तेरवेः क्षालयितुं क्षमेत कः" माघः "कन्दस्व भीरु! यत्त्वत्प्रोदृत्तुल्योऽपि क्षमामहे" भट्टिः। षित् क्षमा "तेजः क्षमा वानैकान्तम्" माघः वैदिके तु नि॰ क्षमति क्षमिति। इति पा।

**क्षम** सहने दिवा॰ पर॰सक॰वेट् शमादि॰ इरित्। क्षाम्यति अक्षमत् अक्षमीत्। चक्षाम "कामं क्षाम्यतु यः क्षमी" माघः।

**क्षम** न॰ क्षम-अच्। १युक्ते। २शक्ते, "किन्तु सहितुं रणो—ऽक्षुतस्य भीरु! कः क्षमः" भट्टिः क्षात्रकर्म क्षमं देहम्" रघुः "प्रियासु बालासु रतक्षमासु" च मेघ॰ ४क्षमावति त्रि॰ "अतोऽत्र किञ्चित्, किन्तु भवतीं वक्तुमक्षमाम्" कुमा॰।

**क्षमता** स्त्री॰ क्षमस्य भावः तल्। १योग्यतायां, शब्दनिष्ठे २अर्थप्रकाशनसामर्थ्ये च "श्रुतिर्द्वितीया च क्षमता च लिङ्गम्" भट्टकारिका।

**क्षमा** स्त्री क्षम-अङ्। 'बाह्ये वाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता" 'आक्रुष्टोऽभिहतो वापि नाक्रोशेन्न च हन्ति वा। अदुष्टवाङ्मनःकायैस्तितिक्षोः सा क्षमा मतेति" चोक्त लक्षणायाम् तितिक्षायाम्, चित्तवृत्तिभेदे, "आक्रुष्टोऽभिहतो यस्तु नाक्रोशेन्न हन्तेदपि। अदुष्टवाङ्मनोकायै-स्तितिक्षुः क्षमा स्मृता' मातृ॰ १२॰ अ॰। "विभा-गशीलः सततं क्षमायुक्तोदयान्वितः गृहस्थः स्यात् क्षमायुक्तो न गृहेण गृही भवेत् "क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः। अध्यात्मनिरता ज्ञानं ज्ञानमेतद् ब्राह्मणलक्षणम्। विकर्षितक्रमो हिंसा-ल्पबधात्मनाम्। अन्यमन्युसमुत्थानां दोषाणां वर्ज्जनं क्षमा" कूर्मपु॰१४अ॰। २भूमौ च। अमरः। क्षान्ती अन्य॰ भरत॰। पृषो॰ क्षाम् क्ष्मा क्षा क्षमि क्षामा इत्यादयोऽपि निघ॰ क्षमायां भवायां "क्षाम तुभ्यं कृत्वा क्षमु क्षम, महना मनुत द्यौः" ऋ॰ ४।१७१।१ "द्यौ-र्क्षं प्याज्जनिमन्तो जनृत्ताः" ४।२०।४ "अजो न क्षां दा-धार पृथिवीम्" ऋ॰४।६७।५ "क्षां दासायोपबर्हणीं कः" १।१७४।६ "मुहुर्दृषो वर्त्तते यत्सभि क्षाम्" १।१८३।२ "दिव क्षमा च" ५।५०।२। "क्षमा मन्महे रपो विश्वं मो अस्तु भेषजम्" अथ॰६।५७।२ "क्षधिक्षमि विष्वरूपं यदस्त" ऋ॰ ७।२७।२ "अग्निर्यद्रोधति क्षमि" ऋ॰ ४।४२।६। "स परिक्षा त्वलसा क्षो दिवद्ग" १।१००।१५ "द्यावाक्षामा" ऋ॰१।८६।५ "तुरमस्यति गौततौगः क्षमा" इ॰ र॰ उक्ते ३त्रयोदशाक्षरपादके छन्दोभेदे स्त्री "दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा" नमोऽस्तु ते" ४इत्युक्ते दुर्गाशक्तिभेदे ५राधिकासहचरीभेदे "मया पूर्व्वन्तु त्वं दृष्टो गोप्या च क्षमया सह" "क्षमा देहं परित्यज्य लज्जया पृथिवीं गता" ब्रह्मवैपु॰ प्रकृ-तिखं॰ ८अ॰। ६खदिरे राजनि॰

**क्षमाज** पु॰ क्षमातोजायते जन+ड ५त॰। १मङ्गले २नरकासुरे ३भूजातमात्रे त्रि॰ क्षमाजातादयोऽप्यत्र

**क्षमादंश** पु॰ क्षमायाः दंश इव। शिग्रुवृक्षे राजनि॰

**क्षमापि** क्षमं क्षमान्वितं करोति क्षम-णिच् स्वा॰ पुक् दी-र्घश्च। क्षमापयति ते अचि(च)क्षमापत् न क्षमापयाम्-बभूव आस चकार चक्रे। "तदमित्त्रं ब्राह्मणं क्षमा-पयति हेतुवचनोक्त्या" छा॰उ॰भा॰। "क्षमापय महाभागं ततः शान्तिर्भविष्यति" भाग॰ ९।४।५२ श्लो॰

**क्षमाभुज्** पु० क्षमां भुनक्ति भुज—अशने क्विप् । नृपे "सुरवैरिवक्ष उरसि क्षमाभुजः" माघः । क । क्षमाभुजोऽप्यत्र

**क्षमावत्** त्रि० क्षमा+अस्त्यर्थे मतुप् मस्य वः । क्षमायुक्ते । "एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः" गरु० पु० ११४अ० स्त्रियां ङीप्

**क्षमितृ** त्रि० क्षम—तृच् । सोढरि सहनशीले अमरः

**क्षमिन्** त्रि० क्षम-ताच्छील्ये घिनुण् । क्षमाशीले "कामं क्षाम्यतु यः क्षमी" माघः "अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः" विष्णुस० स्त्रियां ङीप् ।

**क्षय** पु० क्षि—क्षये क्षि—निवासगत्योर्वा भावादौ यथायथम् अच् । त्रिवर्गान्तर्गते नीतिवेदिनां राज्ञाम् १अष्टवर्गापचये । अपकर्षे । "कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरः करादानं सैन्यानाञ्च निवेशनम् । अष्टवर्गः स्मृतो राज्ञाम्" भरतः । "क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्" अमरः । क्षयः अष्टवर्गस्यापचयः तस्यैवोपचयः वृद्धिः, स्थानं तस्य उपचयापचयहीनतया स्थितिः" २प्रलये तस्मिन् सर्वेषां क्षयात्तथात्वम् । ३अपचये स च भावविकारभेदः यास्कोक्तः यथा

"षड् भावविकारा भवन्तीति वार्ष्यायणिः जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति । जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति, अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं, विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्धत इति स्वाङ्गाभ्युच्चयं, सांयौगिकानां वार्थानां वर्धते विजयेनेति वा वर्धते शरीरेणेति वा, अपक्षीयत इत्यनेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति" । ४गृहे अमरः ५यक्ष्मरोगे यक्ष्मरोगस्य क्षयसंज्ञाकारणं यथा "क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधैः । राजचन्द्रमसो यस्मादभूदेष महामयः । तस्मात्तं राजयक्ष्मेति कीर्त्तयन्ति मनीषिणः" सुश्रु० । "रक्तपित्तात् भवेत् कासः कासात् संजायते क्षयः" वैद्यकम् "राजयक्ष्मपरिहाणिमाययौ" इत्युपक्रमे "राशि तत् क्षयमभूत् क्षयातुरे" रघुः । ६रोगमात्रे राजनि० । षष्टिवर्षान्तर्गते षष्टितमे ७वर्षे तल्लक्षणं ज्यो०त० भवि०पु० "मेदिनी लभते देवि! सर्वभूतं चराचरम् । देशभङ्गश्च दुर्भिक्षं क्षये संजायते प्रजा । सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कणे तथा । दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये! । कौसुमीमर्व्वटाद्याश्च यमुनानर्म्मदातटम् । त्रि-स्वराष्ट्रो वैश्यवर्गापि विनश्यन्ति न संशयः । सिंहलो मध्यदेशश्च कामरूपस्तथैव च । क्षये क्षयन्ति सर्वाणि नान्यथा वरवर्णिनि!" ।

तै०ब्राह्मणोक्ते दर्शान्तसंज्ञे देवविशेषे च यथा

"रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूता वृहस्पतये स्तुत" ता०ब्रा० "तैत्तिरीयाणां पञ्चमकाण्डोक्तब्राह्मणे रश्मिरिति मन्त्रव्याख्यादित्यादिदृष्टिहेतुत्वाभिधानादादित्यादिपरतया रश्म्यादिमन्त्रव्याख्यायाः तत्र ब्राह्मणमुदाहरिष्यते । हे आदित्य! त्वं रश्मिरसि रश्मियुक्तोऽसि देवा यस्मिन् क्षियन्ति निवसन्ति इति क्षोत्सर्गः क्षयः तस्मै क्षयाय तद्रक्षाय तत्प्राप्त्यर्थं हे आदित्य! त्वां स्तौमीति शेषः । ततः क्षयं देवक्षङ्गं जिन्व प्रीणय क्षयशब्दस्य देवविषयत्वं तैत्तिरीयास्तृतीयकाण्डे-ऽन्त्यब्राह्मणे समामनन्ति "रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह देवो क्षय इति" भा० । ज्योतिषोक्ते ८द्विसंक्रान्तियुक्ते शुक्लप्रतिपदाद्यमावस्यान्ते चान्द्रे मासे यथाह त्रि०शि०

"असंक्रान्तिमासोऽधिमासः स्फुटं स्याद्द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् । क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽधिमासद्वयं च" ।

"यस्मिन् शशिमासेऽर्कसंक्रान्तिर्नास्ति सोऽधिमास इति प्रसिद्धम् । तथा यत्र मासे संक्रान्तिद्वयं भवति स क्षयमासो ज्ञेयः । यतः संक्रान्त्युपलक्षिता मासाः । अत एकस्मिन् मासे संक्रान्तिद्वये जाते सति मासयुगलं जातम् । स क्षयमासः कदाचित् कालान्तरे भवति । यदा भवति तदा कार्त्तिकादित्रय एव । तदा क्षयमासात् पूर्वं मासत्रयान्तर एकोऽधिमासोऽग्रतश्च मासत्रयान्तरितोऽन्यो-ऽसंक्रान्तिमासः स्यात् । अत्रोपपत्तिः । चन्द्रमासप्रमाणमेकोनत्रिंशत् सावनदिनान्येकत्रिंशत् घटिकाः पञ्चाशत् पलानि २९।३१।५० । तथार्कमासस्त्रिंशद्दिनानि षड्विंशतिघटिकाः सप्तदशपलानि ३०।२६।१७ एतावद्भिर्दिवसैरर्कः मध्यगत्या राशिं गच्छति । यदार्कगतिरेकषष्टिः कलास्तदा सार्धैकोनत्रिंशता दिनैः २९।३० राशिं गच्छति । अत चान्द्रमासादल्पोऽर्कमासस्तदा स्यात् । एवं रविमासस्य परमाल्पता २९।२०।४० । सा चैकषष्टिगतिकस्य वृश्चिकादित्रयेऽर्कस्य । स ह्रस्वोऽल्पोऽर्कमासो यदा चान्द्रमासस्यान्तःपातो भवति तदैकस्मिन् मासे संक्रमणद्वयसम्भवः । अत उक्तं क्षयः कार्त्तिकादित्रय इति । एवं

किन्तु भाद्रपदेऽर्कसंक्रान्तिर्जाता। ततोऽर्कगतेरधिकत्वान्मार्गशीर्षे द्विसंक्रान्तिः। ततः पुनर्गतेरल्पत्वाच्चैत्रोऽप्यसंक्रान्तिर्भवति। ततो वर्षमध्ये ऽधिमासद्वयमिव प्रपन्नम्" प्रमिता०। मेषादिषु सूर्य्यस्य गतिभेदात् भोगकालस्य मनादिनादिकमुच्यते

| मे | वृ | मि | क | सि | क | तु | वृ | ध | म | कु | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ३० | ३१ | ३१ | ३१ | ३१ | ३० | २९ | २९ | २९ | २९ | २९ | ३० |
| ५५ | २४ | ३७ | २८ | २ | २९ | ५७ | २७ | १५ | २४ | ४९ | २१ |
| ३२ | ५६ | ३२ | २५ | ५२ | ४ | २ | २६ | २ | ० | ४७ | २१ |

"इदानीं गणकानां प्रतीत्यर्थं क्षयमासकालान् गतागतान् कतिचिद्दर्शयति स्म" प्रमिता०।

"गतोऽब्ध्यद्रिनन्दै ९७४ र्मिते शाककाले तिथीशै १११५ र्भविष्यत्यथाङ्गाक्षसूर्यैः १२५६। गजाद्र्यग्निभूमि १२७८ स्तथा प्रायशोऽयं कुवेदेन्दु १४१ वर्षैः क्वचिद्गोकुभिश्च १९।

"स्पष्टम्। अत्रोपपत्तिः। यदा त्रिंशदेकविंशतिः शुद्धिस्तदा भाद्रपदोऽधिमासः। तस्मिन् जाते कार्त्तिकादित्रये क्षयमासः संभाव्यते। सा च तथाविधा शुद्धिः कुवेदेन्दु १४१ वर्षान्तरे काले पुनर्भवति। किन्तु सत्रिभागाभिश्चतुर्भिर्घटिकाभिरधिका भवति। कदाचिदेकोनविंशत्या वर्षैस्तादृशी भवति। तत्र त्रिभागोनाभिश्चतुर्दशघटिकाभिरधिका भवति। कुवेदेन्दुवर्षैस्त्रयस्त्रिंशदेकोनविंशतिवर्षैश्चोद्विभाज्यादा हिताभिः खराकैश्च भक्ता इत्यादिना क्षयाधिमासेषु केषांचिदिषु सूर्य्यं प्रथमस्थाने सञ्जाताः षड्घटिकाः शुः ६। ७०। द्वितीये विलिप्तासहिताः १२। ४०। अत उक्तं प्रायशोऽयं कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्चेति। प्रायःग्रहणस्त्वर्थादुक्तं स्यात्" प्रमिता०।

कालमा० उक्तं सि०शि० वाक्यं व्याख्यातविशेषोऽभिहितः "स्फुटमानेन योऽसंक्रान्तः सः स्फुटोऽधिमासः तेनैव मानेन यो द्विसंक्रान्तियुक्तः स क्षयाख्यः स च कार्त्तिकमार्गशीर्षपौषेष्वेव त्रिष्वन्यतमो भवति नान्येषु माघादिषु नवसु एवंविधक्षयमासयुक्ते वर्षे क्षयमासात् पूर्वेषु त्रिषु मासेषु मध्ये कश्चिदधिमासो भवति क्षयमासादूर्द्धमपि मासत्रयमध्ये ऽपरोऽधिमासः। तदेवंविधमेकवर्षस्थं मलमासद्वयं चिरेण कालेन यदा कदाचिदायाति नत्वेकाधिमासवत् पुनः पुनः क्षयमासः समायाति तच्चैतयोरागमनकालः सिद्धान्तशिरोमणौ दर्शितः। "गतोऽब्ध्यद्रीत्यादि (वाक्यं प्रागुदाहृतम्) अस्यायमर्थः। चतुःसप्तत्यधिकनवशतसंख्याकैर्वर्षैः परिमिते शाककाले कश्चिदुक्तमासद्वययोपेतो वत्सरोगतः। अयोक्तसंख्या चाब्ध्यद्रिनन्दैरित्यनेन पदेन विवक्षिता। अब्धयश्चत्वारः अद्रयः सप्त नन्दा नव। एतत्संख्यात्रयगमकाः अङ्का गणकप्रसिद्ध्या प्रातिलोम्येन लिखिता यथोक्तसंख्यायां पर्यवस्यन्ति। तिथीशैरित्यत्रापि तिथयः पञ्चदश ईशा एकादश तत्र गणकैरङ्केषु प्रक्षिप्तेषु पञ्चदशाधिकशतयुक्तसहस्रसंख्या सम्पद्यते। तावद्भिःशकवर्षैर्मिते काले, कश्चिदुक्तमासद्वययुतः संवत्सरः। अङ्गाक्षसूर्यैरित्यत्राङ्गानि षट् अक्षाणीन्द्रियाणि पञ्च सूर्य्या द्वादश तत्राङ्कप्रक्षेपे षट्पञ्चाशदधिकशतद्वयोपेतसहस्रसंख्या सम्पद्यते। तावद्भिर्वत्सरैर्मिते शककाले यथोक्तमासद्वयोपेतः कश्चिद्वत्सरः। तस्य चोदाहरणम्। पूर्व्वोदाहृत ईदृश संवत्सरः प्राचीनोभावी वा संवत्सरः। तत्र भाद्रपदशुक्लामावास्यायां कन्यासंक्रान्तिस्तत ऊर्द्धम् असंक्रान्तमेकमासमतीत्य उत्तरयोर्मासयोः क्रमेण तुलावृश्चिकसंक्रान्ती तत ऊर्द्धमेकस्मिन्नेव मासे शुक्लप्रतिपदि धनुःसंक्रान्तिः तत ऊर्द्धं दर्शे मकरसंक्रान्तिः। तत ऊर्द्धं कुम्भसंक्रान्तिः समनन्तरे मासे दर्शे। तत ऊर्द्धं असंक्रान्तिमासमतीत्योत्तरस्मिंश्चेत् यदि मीनसंक्रान्तिरेवं च एकस्मिन्नेव वत्सरे द्वादशसंक्रान्तौ मासौ एकोद्विसंक्रान्तिमास इति यथोक्तमासत्रयं सम्पद्यते। गजाद्र्यग्निभूमिरित्यत्रापि गजा अष्टौ, अद्रयः सप्त, वह्नयस्त्रयः भूरेका तत्राङ्कप्रक्षेपे सप्तसप्तत्यधिकशतत्रयोपेतसहस्रसंख्या सम्पद्यते। तावद्भिर्वत्सरैर्मिते शाककाले कश्चिदुक्तविधः सम्पत्स्यते वत्सरः। कुवेदेन्दुवर्षैरित्यत्र कुरेकः वेदाश्चत्वारः इन्दुरेकस्तत्राङ्कप्रक्षेपे एकचत्वारिंशदधिकशतसंख्या भवति एतावद्भिर्वर्षैः कश्चित्पूर्व्वोत्तरक्षयमासयोर्व्यवधानं भवति गोकुभिश्चेत्यत्र नपुंसकवर्जितेषु स्वरान्तेषु गणनात् औकारो नवमः सम्पद्यते। कुरेका तत्राङ्कप्रक्षेपे सति एकोनविंशतिर्भवति तावद्भिर्वत्सरैः क्वचित्पूर्वोत्तरयोः क्षयमासयोर्व्यवधानमिति। अत्र द्विसंक्रान्तियुक्तस्य क्षयसंज्ञायामुपपत्तिरुच्यते। यदा धनुःस्थे रवौ दर्शपूर्त्तिस्तदा तस्य मेषादिस्थवचनेन मार्गशीर्षत्वं प्राप्तम्। तथा सति पूर्वोदाहृते द्विसंक्रान्ते मासि धनुःस्थे रवौ दर्शो न समाप्तः मकरस्थे तु रवौ समाप्तः। अतः पौषमासत्वं तस्य सम्पन्नम्। तथा च मार्गशीर्षस्य तत्र लुप्तत्वात् तस्य क्षयसंज्ञा युक्ता। अत एकैकमास-

**क्षय्य** त्रि० क्षेतुं शक्यः क्षि-शक्यार्थे यत् "क्षय्यजय्यौ शक्यार्थे" पा० नि०। क्षेतुं शक्ये। शब्दक० क्षीयोक्तिः प्रामादिकी

**क्षर** सञ्चलने भ्वा० पर० अक० सेट्। क्षरति अक्षारीत्। चक्षार क्षरितः क्षरन् क्षारः। "इयं त इन्द्र! रातिः क्षरति सुन्वतः" ऋ० ८, ९२. ४। "मधु क्षरन्ति सिन्धवः" मधुसूक्तम्। "यज्ञोऽनृतेन क्षरति तपः क्षरति कीर्त्तनात्" "इन्द्रियाणां हि च सर्वेषां यद्येकं क्षरतीन्द्रियम्। तेनास्य क्षरति प्रज्ञा" मनुः। "त्वत्प्रसादान्महादेव! तपो मे न क्षरेत् वै" भा० अ० ७० ११ श्लो०। आपत्यात् पदव्ययः। "अक्षारिषुः शराम्भांसि तस्मिन् रक्तःपयोधराः" भट्टिः। ज्वला० क्षरः क्षारः। उपसर्गपूर्वस्तु तदुपसर्गद्योत्यार्थयुक्ते चलने। आङ्पूर्वकः णिजन्तस्तु आक्षारणे ६०७ पृ० दृश्यम्। सञ्चलनञ्च मोचनं स्रवणं चलनं स्यन्दनञ्च तत्र मोचने सक० अन्यत्र अक०। तत्र मोचने "मधु क्षरन्ति सिन्धवः"। "स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः" किरा०। स्रवणे "तपः क्षरतीत्यादि प्रागुक्तम्। वेदे भि० तिपि क्षरिति।

**क्षर** न० क्षरति स्यन्दते सुद्धति वा क्षर-ज्वला० वा अच्। १जले २मेघे पु० मेदि०। ३चले त्रि० ४देहे "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" गीतोक्तेषु ५सर्वप्राणिषु तेषां स्वोपाध्यन्तःकरणचलनेन औपाधिकचलनवत्त्वात्तथात्वम् भा० अनु० १७अ० जीवानां क्षरणप्रकार उक्तो यथा "आयुःकीर्त्तिकराणीह यानि कृत्यानि सेवते। शरीरग्रहणे यस्मिंस्तेषु क्षीणेषु सर्वशः। आयुःक्षयपरीतात्मा विपरीतानि सेवते। बुद्धिर्व्यावर्त्तते चास्य विनाशे प्रत्युपस्थिते। सत्त्वं बलञ्च कालञ्च विदित्वा चात्मनस्तथा। अतिवेलमुपाश्नाति स्वविरुद्धान्यनात्मवान्। यदाऽयमति कष्टानि सर्वाण्युपनिषेवते। अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन। दुष्टान्नामिषपानञ्च यदन्योन्यविरोधि च। गुरु चाप्यमितं भुङ्क्ते नातिजीर्णेऽपि वा पुनः। व्यायाममतिमात्रञ्च व्यवायञ्चोपसेवते। सततं कर्म्मलोभाद्वा प्राप्तं वेगं विधारयेत्। रसाभियुक्तमन्नं वा दिवास्वप्नञ्च सेवते। अपक्वानागते काले स्वयं दोषान् प्रकोपयेत्। स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्। अपि चोद्बन्धनादीनि परीतानि व्यवस्यति। तस्य तैः कारणैर्जन्तोः शरीरं च्यवते तदा। जीवितं प्रोच्यमानं तद्यथावदुपधारय। ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः। शरीरमनुपर्य्येत्य सर्वान् प्राणान् रुणद्धि वै। अत्यर्थं बलवानूष्मा शरीरे परिकोपितः। भिनत्ति जीवस्थानानि मर्म्माणि विद्धि तत्त्वतः। ततः सवेदनो जीवः सद्यः प्रच्यवते क्षरात् (देहात्)। शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्म्मसु। वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम!। जातिमरणसंविग्नाः सततं सर्वजन्तवः। दृश्यन्ते सन्त्यजन्तश्च शरीराणि द्विजर्षभ!। गर्भसंक्रमणे चापि मर्म्मणामतिसर्पणे। तादृशीमेव लभते वेदनां मानवः पुनः। भिन्नसन्धिरथ क्लेदमद्भिः स लभते नरः। यथा पञ्चसु भूतेषु संस्थितत्वं नियच्छति। शैत्यात् प्रकुपितः काये तीव्रवायुसमीरितः। यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः। स गच्छत्यूर्द्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणम्। शरीरञ्च जहात्येवं निरुच्छ्वासश्च दृश्यते। स निरूष्मा निरुच्छ्वासो निःश्रीको हतचेतनः। ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते नरः। स्रोतोभिर्यैर्विजानाति इन्द्रियार्थान् शरीरभृत्। तैरेव न विजानाति प्राणानाहारसम्भवान्। तत्रैव कुरुते काये यः स जीवः सनातनः। तथा यद्यद्भवेद्युक्तं सन्निपाते क्वचित् क्वचित्। तत्तन्मर्म्म विजानीहि शास्त्रदृष्टं हि तत्तथा। तेषु मर्म्मसु भिन्नेषु ततः स समुदीरयन्। आविश्य हृदयं जन्तोः सत्त्वञ्चाशु रुणद्धि वै। ततः सचेतनो जन्तुर्नाभिजानाति किञ्चन। तमसा संवृतज्ञानः संवृतेष्वेव मर्म्मसु। स जीवो निरधिष्ठानश्चाल्यते मातरिश्वना। ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम्। निष्क्रामन् कम्पयत्याशु तच्छरीरमचेतनम्। स जीवः प्रच्युतः कायात् कर्म्मभिः स्वैः समावृतः। अङ्कितः स्वैः शुभैः पुण्यैः पापैर्वाऽप्युपपद्यते। ब्राह्मणा ज्ञानसम्पन्ना यथावच्छ्रुतनिश्चयाः। इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः। यथाऽन्धकारे खद्योतं लीयमानं ततस्ततः। चक्षुष्मन्तः प्रपश्यन्ति तथा च ज्ञानचक्षुषः। पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा। च्यवन्तं जायमानञ्च योनिञ्चानुप्रवेशितम्। तस्य स्थानानि दृष्टानि त्रिविधानीह शास्त्रतः। कर्म्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः। ततः शुभाशुभं कृत्वा लभन्ते सर्वदेहिनः। इहैवोच्चावचान् भोगान् प्राप्नुवन्ति स्वकर्म्मभिः। इहैवाशुभकर्म्माणः कर्म्मभिर्निरयं गताः। अवाग्गतिरियं कष्टा यत्र पच्यन्ति मानवाः। तस्मात् सुदुर्लभो मोक्ष आत्मा रक्ष्यस्ततो भृशम्। ऊर्द्धं तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः। कीर्त्त्यमानानि तानीह क-

श्रुतः प्रतिबोध मे । तच्छ्रुत्वा मैथिली बुद्धिं विन्देथाः कर्म्मनिश्चयम् । ताराकृपाणि सर्वाणि यदैतच्चन्द्रमण्डलम् । यत्र विभ्राजते लोके स्वभासा सूर्य्यमण्डलम् । स्थानान्येतानि जानीहि जनानां पुण्यकर्म्मणाम् । कर्म्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः। तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः । न च तत्रापि सन्तोषो दृष्ट्वा दीप्ततरां श्रियम् । इत्येता गतयः सर्वाः पृथक् ते समुदीरिताः । उपपत्तिन्तु वक्ष्यामि गर्भस्याहमतः परम् । तथा तन्मे निगदतः शृणुष्वावहितो द्विज !"।

११अज्ञाने च "क्षरं त्वविद्या च अमृतं तु विद्या" श्वेताश्व० उ० । १२परमेश्वरे "सदसत्क्षरमक्षरम्" विष्णुस० । "सर्वं खल्विदं ब्रह्मेति" श्रुतेस्तस्य सर्वभूतमयत्वात्तथात्वम् । "कार्य्यकारणरूपं तु नश्वरं क्षरमुच्यते" इत्युक्तयोः १३कार्य्यकारणयोः ।

**क्षरे(र)ज** त्रि० क्षरे जायते जन—ड वा सप्तम्या लुक् । मेघजाते

**क्षरण** न० क्षर—भावे ल्युट् । १स्रवणे २मोचने च "क्षरणात् स्तवनाद्वा क्षारः" सुश्रुतः "अङ्गुलीक्षरणसन्नवितर्कः" । कर्त्तरि ल्यु । ३क्षरणशीले त्रि० ।

**क्षरिन्** पु० क्षर—इनि । १वर्षाकाले हेमच० । २क्षरणयुक्ते त्रि० स्त्रियां ङीप् ।

**क्षल** शोधने वा चु० उभ०पक्षे भ्वा० पर० सक० सेट् । क्षालयति ते क्षलति अचिक्षलत् त अक्षालीत् । क्षालयाम् बभूव आस चकार चक्रे चक्षाल । ज्वला० क्षलः क्षालः । "कृते रवेः क्षालयितुं क्षमेत कः" माघः । "क्षालितमपि हृदयं मलिनं शोकोर्म्मिभिः क्रियते" प्रबो० । "क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति" हितो० । भ्वादिस्तु चाले चयने कवि० इति भेदः । प्राद्युपसर्गपूर्वस्तु तदुपसर्गद्योत्यार्थयुक्तशोधने । "गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा" भा० वि० १७अ० । "मुखं प्रक्षालयेत्ततः" स्मृतिः ।

**क्षव** पुं० क्षु—भावादौ अप् । १क्षुते (हाँचि) २राजिकायां (राइसर्षा) । अमरः । ३कासे शब्दरत्ना० ।

**क्षवक** पु० क्षु—करणे अप् संज्ञायां क । १राजिकायाम् २अपामार्गे ३भूताङ्कुशे च राजनि० । [भावप्र० ।

**क्षवकृत्** पु० क्षवं करोति कृ—क्विप् । क्षुपभेदे (हिक्कनी)

**क्षवथु** पु० क्षु—अथुच् । १क्षुते (हाँचि) । २कासे च मेदि० । क्षुतलक्षणं सुश्रुते उक्तं "घ्राणाश्रिते मर्म्मणि संप्रदुष्टे यस्यानिलो नासिकया निरेति । कफानुयातः बहुशः सशब्दं तं रोगमाहुः क्षवथुं विभिन्नाः" । "उदुष्णतोयः क्षवथुर्निरेति" सुश्रुतः । क्षतजशब्दे २१५६ पृ० दृश्या०

**क्षवपत्रा** स्त्री क्षवः क्षुतहेतुः पत्रं यस्याः । द्रोणपुष्प्याम् राजनि० तत्पत्राघ्राणे हि क्षुतं जायते । क्षरपत्रेति वा पाठः ।

**क्षविका** स्त्री क्षवः क्षुतं साध्यतयाऽस्त्यस्य ठन् । हस्तीभेदे राजनि० ।

**क्षात्र** न० क्षत्रस्य कर्म्म भावो वा—अण् । "शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म्म स्वभावजम्" गीतोक्ते १क्षत्रियकर्म्मणि । तस्येदमण् । २तत्सम्बन्धिनि त्रि० "आत्मकर्म्मक्षमं देहं क्षात्रो धर्म्म इवाश्रितः" रघुः ।

क्षत्राणां समूहः अण् । ३तत्समूहे न० "शतं क्षात्रसंग्रहीतानाम् पुत्राः" शत० ब्रा० १२,४,२,५, "क्षत्तारः कोषाध्यक्षाः तेषां समूहः क्षात्रम्" भा० ।

**क्षात्रि** त्रि० क्षत्रायायं जातिभिन्न इञ् । क्षत्रसम्बन्धिनि जातौ तु क्षत्रिय इत्येव ।

**क्षान्त** त्रि० क्षम—कर्त्तरि क्त । १सहिष्णौ केनचित्पीडनेऽपि सामर्थ्ये सति तत्प्रतीकारपराङ्मुखे । कर्म्मणि क्त । २सोढे । ३निर्वैरो निर्वृतिः क्षान्तो निर्मन्युः क्रतिरेव च । पितृवर्त्ती च व्याधाः परमधार्म्मिकाः" हरिवं० २१अ० उक्ते सप्तव्याधमध्ये ३व्याधभेदे । ते च गुरोर्गोहरणात् क्रमेण मृगचक्रवाकादियोनिप्राप्ताः तत्रैव तत्कथा । क्षान्ताशब्दे परे प्रिया० कर्म्मधारये न पुंवत् । परमक्षान्ता । उत्करा० चतुरर्थ्यां छ । क्षान्तीय तत्सन्निकृष्टादौ त्रि० । ४ऋषिभेदे पु० । क्षान्तस्य गोत्रापत्यम् अश्वा० फञ् । क्षान्तायन तदृषिगोत्रापत्ये पुंस्त्री० ।

**क्षान्ति** स्त्री क्षम-भावे क्तिन् । क्षमायाम् सामर्थ्ये सत्यपकारिणोऽप्यपकाराचिकीर्षायाम् । "क्षान्त्या शुध्यन्ति विद्वांसः" मनुः । "शमोदमस्तपः शौचं क्षान्तिरार्ज्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम्" गीता "शमोदमस्तपः शौचं सन्तोषः क्षान्तिरार्ज्जवम् । ज्ञानं दयाच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम्" भाग० ७।११ २२

**क्षान्तु** पु० क्षम—तुन् दीर्घश्च । १क्षमाशीले उणादिकोषः २पितरि पु० संक्षिप्तसा०

**क्षाम** त्रि० क्षै—कर्त्तरि क्त । १क्षीणे २अल्पे शब्दरत्ना० "क्षामोऽपि यवसंग्रस्त नखैः किंशुकिमन्त्यपि" । "क्षामेण कटुकोष्णेन मन्दाग्निना" सुश्रुतः "क्षामच्छायं भवनमधुना मद्वियोगेन नूनम्" ३अक्षे क्षामा कलितज्वरितादि क्षणा नि-

ख्यातः क्षारगुडो ह्येष रोगयुक्ते प्रयोजयेत्"।

**क्षारतैल** न० चक्र०उक्ते कर्णशूलनिवारके पक्वतैलभेदे यथा "बालमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम्। शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम्। सौवर्चलं यवक्षारः सर्जिकोद्भिदसैन्धवम्। भूर्जग्रन्थिविडं मुस्तं मधुशुक्तं चतुर्गुणम्। मातुलुङ्गरसश्चैव कदल्या रस एव च। तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम्। बाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः। पूरणादस्य तैलस्य क्रिमयः कर्णसंस्थिताः। क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात्। क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम्। मधुप्रधानं शुक्तन्तु मधुशुक्तं तदोच्यते। जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम्। मधुभाण्डे विनिःक्षिप्य धान्यराशौ निधापयेत्। मासेन तज्जातरसं मधुशुक्तमुदाहृतम्"। गारुडे १९८अ० इत्थमेव। तत्रोक्ते निर्लोमतादिसाधने २तैलभेदे च यथा "शुक्तिशम्बूकशङ्खानां दीर्घवृन्तात् सवल्कलात्। दग्ध्वा क्षारं समादाय खरमूत्रेण गालयेत्। क्षाराष्टभागं विपचेत् तैलञ्च सार्षपं बुधः। इदमन्तःपुरे देयं तैलमात्मेषु पूजितम्। बिन्दुरेकः पतेद्यत्र तत्र रोमापुनर्भवः। मर्द्दनादिव्रणे देयमश्विभ्याञ्च विनिर्म्मितम्। अर्शसां कुष्ठरोगाणां पामादद्रुविचर्च्चिकाम्। क्षारतैलमिदं श्रेष्ठं सर्वक्लेदहरं परम्।"

**क्षारत्रय** न० ६त० "सर्जिकाच यवक्षारः टङ्कणक्षारएव च क्षारत्रयम् त्रिक्षारम् क्षारत्रितयमेव च" राजनि०। उक्ते क्षारद्रव्यत्रये [ राजनि०

**क्षारदला** स्त्री क्षारोदलेऽस्याः। चिल्लीशाके चुक्रवास्तूके

**क्षारद्रुमक** न० ६त०। "शिग्रुमूलकपलाशचुक्रिकाचित्रकार्द्रकनिम्बसम्भवैः। इक्षुरैक्षविकमोचकोद्भवैः क्षारपूर्वदशकं प्रकीर्त्तितम्" राजनि० उक्ते दशविधक्षारद्रव्ये

**क्षारदेश** पु० क्षारप्रधानोदेशः शा० त०। क्षारप्रधाने देशे "जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः। किमाश्चर्य्यं क्षारदेशे प्राणदा यमदूतिका" उद्भटः

**क्षारद्रु** पु० क्षारप्रधानोद्रुः। घण्टापाटलिवृक्षे रत्नमा०

**क्षारनदी** स्त्री क्षारप्रधाना नदी। नरकविशेषस्थे नदीभेदे

**क्षारपत्र** पु० क्षारः पत्रेऽस्य। वास्तूकशाके राजनि० २वा कप्। तत्रार्थे हेमच०

**क्षारपाक** पु० सुश्रुतोक्ते क्षारद्रव्यस्य पाकभेदे तत्र क्षारभेदस्य गुणप्रयोगादिकमुक्त्वा तत्पाकविधिरुक्तो यथा "अथातः क्षारपाकविधिमध्यायं व्याख्यास्यामः। शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमः छेद्यभेद्यलेख्यकरणात्त्रिदोषघ्नत्वाद्विशेषक्रियावचारणाच्च। तत्र क्षरणात् क्षणनाद्वा क्षारः। नानौषधिसमवायात्त्रिदोषघ्नः शुक्लत्वात्सौम्यस्तस्य सौम्यस्यापि सतो दहनपचनदारणादिशक्तिरविरुद्धा स खल्वाग्नेयौषधिगणभूयिष्ठत्वात् कटुक उष्णस्तीक्ष्णः पाचनो विलयनः शोधनो रोपणः शोषणः स्तम्भनो लेखनः कृम्यामकफकुष्ठविषमेदसामुपहन्ता पुंस्त्वस्य चातिसेवितः। स द्विविधः प्रतिसारणीयः पानीयश्च। तत्र प्रतिसारणीयः कुष्ठकिटिभदद्रुकिलासमण्डलभगन्दरार्बुददुष्टव्रणनाडीचर्म्मकीलतिलकालकन्यच्छव्यङ्गमशकबाह्यविद्रधिकृमिविषार्शःसूपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुशदन्तवैदर्भेषु तिसृषु च रोहिणीष्वेतेषु चैवानुशस्त्रप्रणिधानमुक्तम्। पानीयस्तु गरगुल्मोदराग्निसङ्गाजीर्णारोचकानाहशर्कराश्मर्य्याभ्यन्तरविद्रधिकृमिविषार्शःसूपयुज्यते। अहितस्तु रक्तपित्तज्वरितपित्तप्रकृतिबालवृद्धदुर्बलभ्रममदमूर्च्छातिमिरपरीतेभ्योऽन्येभ्यश्चैवंविधेभ्यः। तं श्वेतरक्षारवदुक्त्वा परिस्रावयेत्तस्य विस्तारोऽन्यत्र। स च त्रिविधो मृदुर्मध्यस्तीक्ष्णश्च। तं चिकीर्षुः शरदि गिरिसानुजं शुचिरुपोष्य प्रशस्तेऽहनि प्रशस्तदेशजातमनुपहतं मध्यमवयसं महान्तमसितमुष्ककमधिवास्यापरेद्युः पाटयित्वाभिमन्त्र्यानेन मन्त्रेण। अग्निवीर्य्य! महावीर्य्य! मा ते वीर्य्यं प्रणश्यतु। इहैव तिष्ठ कल्याण! मम कार्य्यं करिष्यसि। मम कार्य्ये कृते पश्चात् स्वर्गलोकं गमिष्यसि। श्वेतपुष्परक्तपुष्पस्य इत्थं जुहुयात्। अपरेद्युः प्रकल्प्याथ निर्वाते देशे निचितं कृत्वा सुधाशर्कराश्च प्रक्षिप्य तिलनालैरादीपयेत्। अथोपशान्तेऽग्नौ तद्भस्म पृथग्गृह्णीयाद्भस्मशर्कराश्च। अथानेनैव विधानेन कुटजपलाशाश्वकर्णपारिभद्रकविभीतकारग्वधतिल्वकार्कस्नुह्यपामार्गपाटलानक्तमालवृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोतावश्वमारकसप्तच्छदाग्निमन्थान् गुञ्जाश्चतस्रश्च कोशातकीः समूलफलपत्रशाखा दहेत्। ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य मूत्रैर्वा यथोक्तैरेकविंशतिवारान् विस्राव्य महति कटाहे शनैर्दर्व्या विघट्टयन् विपचेत्। स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्च तमादाय महति वस्त्रे परिस्राव्येतरं विभज्य च पुनरग्नावधिश्रयेत्। तत एव च क्षारोदकात् कुडवमध्यर्द्धं वाऽपनयेत्। ततः कटशर्कराभस्मशर्कराक्षीरपाकशङ्खनाभीरग्निवर्णाः कृत्वाऽऽयसे

राजनि । "अपदानरत्न परितः क्षितिक्षिताम्" माघः । महीक्षिदादयोऽप्यत्र ।

**क्षितिज** पु० क्षितेर्जायते जन—ड । १मङ्गले "क्षितिजा-त्मजेनां गतः" ज्यो० । २नरकासुरे । ३भूनागे उपरसभेदे राजनि० । ४महीरुहे वृक्षे च । ५भूमिजाते त्रि० सि०शि० गोलबन्धाधिकारोक्ते वृत्तभेदभेदे यथा

"पूर्वापरं विरचयेत् समण्डलाख्यं याम्योत्तरं च विदि-शोऽनयद्वयं च । ऊर्ध्वाध एवमिह वृत्तचतुष्कमेतदाधेय-मिर्यगपरं क्षितिजं तदर्धे" सि०शि० ।

"एकं पूर्वापरमन्यद्याम्योत्तरं तथा कोणवृत्तद्वयमेवं वृत्तचतु-ष्टयमूर्ध्वाधोरूपमाधेयं तदर्धे वृत्तं क्षितिजाख्यं निवे-शयेत् । अत्र याम्योत्तरवृत्ते उत्तरक्षितिजादुपरि पलां-शान्तरे एकं ध्रुवचिह्नं कार्यम् । दक्षिणक्षितिजादधो-ऽन्यत् । इदानीमुन्मण्डलमाह" प्रमि० ।

"पूर्वापरक्षितिजसंज्ञयोर्भिन्नम् याम्ये ध्रुवे पलभवैः क्षि-तिजादधःस्थे । सौम्ये कुजादुपरि चाक्षलवैर्ध्रुवे तदु-न्मण्डलं दिननिशोः क्षयवृद्धिकारि" सि०शि० ।

"समवृत्तक्षितिजयोर्यौ पूर्वापरौ संपातौ तयोर्ध्रुवचिह्न-योश्च लग्नं यद्विवध्यते तदुन्मण्डलसंज्ञम् । दिनरात्र्यो-र्वृद्धिक्षयौ तद्वशेन भवतः" प्रमि० ।

**क्षितिजन्तु** पु० क्षितेर्जन्तुरिव । भूनागे उपरसभेदे राजनि० ।

**क्षितिदेव** पु० क्षितौ देव इव पूज्यत्वात् । ब्राह्मणे "क्षितिदेव-तादयोऽपि तत्रार्थे । "अग्निहोत्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः" आ० त० पराशरः ।

**क्षितिधर** पु० क्षितिं धारयति धृ—णिच् अच् उप० स० । १प-र्वते "क्षितिधरपतिकन्यामाददानः करेण" कुमा० । २कूर्म्मवासुकिदिग्गजेषु च कुमा० । [ राजनि० ।

**क्षितिनाग** पु० क्षितिजातो नागः । उपरसभेदे भूनागे

**क्षितिनाथ** पु० ६त० । भूमिपाले राजनि क्षितिपत्यादयो-ऽप्यत्र । "क्षितिपतिमगुरुलमन्दतो विनामम्" रघुः ।

**क्षितिप** पु० क्षितिं पाति पा—क । भूपाले राजनि "क्षितिपः क्षयितोद्धताञ्चकः" माघः । "क्षितिपसमाजमगात् स्वयं-वरस्थम्" रघुः । "अहंयुनाऽथसुथ क्षितिपः शुभंयुः" भट्टिः ।

**क्षितिपाल** पु० क्षितिं पालयति पालि-अण् उप० स० । मही-पालके राजनि "गिलोन्द्रयोऽपि क्षितिपालसत्त्वैः" रघुः । ण्वुल् । क्षितिपालकोऽप्यत्र । "हताहतेभ्यः क्षितिपालभा-गभ्यः" भट्टिः । "क्षितिपालं भजन्ते यानि द्रुतप्रेषादीनि तेभ्यः क्षितिपालभागभ्यः" जयम० । अत्र मल्लि० क्षिति-पालभाक्शब्दस्य राजार्थकत्वकल्पनमतीव प्रामादिकम् ।

**क्षितिपुत्र** पु० ६त० । १मङ्गलग्रहे २नरकासुरे च तयोस्तत्-पुत्रत्वकथा आग्नेयग्रहे ८२६ पृ० कुजशब्दे २०६० पृ० दर्शिता "स वासुदेवं मानेन क्षितिपुत्रः ( नरकासुरः ) गतं समाः" कालिकापु० ३८अ० । क्षितितनयादयोऽप्यत्र ।

**क्षितिभृत्** पु० क्षितिं बिभर्त्ति धारयति पालयति च धारक-पोषकयोः क्विप् । भूधरे १पर्वते "क्षितिभृदिव क्षिति-कम्पकीर्णशृङ्गः" भट्टिः । २महीपाले राजनि । "अधुना धर्मैः क्षितिभृतोऽनिभृताः" किरा० भूभृदादयोऽप्यत्र । "प्रमथितभूभृतः प्रतिपदं मथितस्य भृशं महीभृता" माघः ।

**क्षितिरन्ध्र** न० ६त० । गर्त्ते शब्दचि० ।

**क्षितिरुह** पु० रोहति रुह-क ७त० । वृक्षे हेम० । "क्षि-तिरुहपल्लवपुष्पकर्णपूरे" माघः ।

**क्षितिवदरी** स्त्री क्षितौ जाता वदरी । भूवदर्य्याम् राजनि०

**क्षितिवर्द्धन** त्रि० क्षितिं वर्द्धयति वृध-णिच् ल्यु । शवे मृते त्रिका० । "करोमि क्षितिवर्द्धनम्" भट्टिः ।

**क्षितिव्युदास** पु० क्षितिं व्युदस्यति वि+उद्+अस—अण् उप० स० । गर्त्तस्थकर्कटे शब्दचि०

**क्षितीश** पु० क्षितिमीष्टे ईश—क । भूमीश्वरे नृपे "आयतन्तु-क्षितीशानाम्" रघुः "पञ्चाशं मे वीर्यबद्धाः क्षितीशाः" भा०व० १८२अ० । १विष्णौ च "देवकीनन्दनः स्रष्टा-क्षितीशः पापनाशनः" विष्णुस० ।

**क्षितीश्वर** पु० ६त० । भूमीश्वरे नृपे "तदाननं मृत्सुरभि क्षितीश्वरः" "कौशिकेन स किल क्षितीश्वरः" रघुः ।

**क्षित्यदिति** स्त्री क्षितौ अदितिः । क्षितौ अदितेरवतारे देवक्यां वसुदेवपत्न्याम् । तत्कथा च हरिवं० ५६अ० । "या च सा सुरभिर्नाम अदितिश्च सुरारणी । उभे ते तस्य वै भार्य्ये सह तेनैव यास्यतः । ताभ्यां सह स गोपत्वे कश्यपो भुवि रंस्यते । तदस्य कश्यपस्यांशो जाता कश्यपोपमः । वसुदेव इति ख्यातो गोषु तिष्ठति भूतले । गिरिर्गोवर्द्धनो नाम मथुरायास्त्वदूरतः । तत्रासौ गोष्वभिरतः कंसस्य करदायकः । तस्य भार्य्याद्वयञ्चैव अदितिः सुरभिस्तथा । देवकी रोहिणी चैव वसुदेवस्य धीमतः । तत्रावतर लोकानां भवाय मधुसूदन !" । विष्णु० प्रति ब्रह्मोक्तिः ।

**क्षित्वन्** पु० क्षि—क्वनिप् तुक् च । वायौ उज्ज्वलदत्तः

**क्षिद्र** पु० क्षिद-रक् । १रोगे २सूर्य्ये ३विषाणे च संक्षिप्तसा० ।

**क्षिप** प्रेरणे तुदा० उभ० सक० अनिट् । क्षिपति-ते अक्षै-

क्षीण्याकटुकैः कर्षणैरपरैरपि । अथ क्षीणौज आदीनां लक्षणमाह । "बिभेति दुर्बलोऽभीक्ष्णं चिन्तयेद्व्यथितेन्द्रियः । अभ्युत्थानोन्मना रूक्षः क्षामः स्यादोजसः क्षये । पुरीषस्य क्षये पार्श्वे हृदये च व्यथा भवेत् । सशब्दस्यानिलस्योर्द्ध्वगमनं कुक्षिसंहतिः" । कुक्षिसंहतिः उदरसङ्कोचः "मूत्रक्षयेऽल्पमूत्रत्वं वस्तौ तोदश्च जायते । स्वेदनाशे त्वचो रौक्ष्यं चक्षुषोरपि रूक्षता । सन्त्याश्च रोमकूपाः स्वलिङ्गं स्वेदक्षये भवेत् । आर्त्तवस्य स्वकाले चाभावस्त्वाल्पताथ वा । जायते वेदना योनौ लिङ्गं स्यादार्त्तवक्षये । अभावः स्वल्पता वा स्यात् स्तन्यस्य भवतस्तथा । स्तनौ पयोधरावेतल्लक्षणं स्तन्यसंक्षये । अनुन्नतो भवेत् कुक्षिर्गर्भस्यास्पन्दनन्तथा । इति गर्भक्षये प्राज्ञैर्लक्षणं समुदाहृतम्" । अथ क्षीणानां धातुदोषमलानां वर्द्धनमाह । "तत्तत्संवर्द्धनाहारविहारातिनिषेवणात् । तत्तत् प्राप्य नरः शीघ्रं तत्तत्क्षयमपोहति । ओजस्तु
क्षी वर्द्धते नृणां स्निग्धस्वादुभिस्तथा । द्रव्यैरन्यैर्विशेषात्तु क्षीरमांसरसादिभिः" । अन्यच्च "दोषधातुमलक्षीणो बलक्षीणोऽपि मानवः । तत्तत्संवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति । यद्यदाहारजातन्तु क्षीणः प्रार्थयते नरः । तस्य तस्य स लाभेन तत्तत्क्षयमपोहति" । तत्र केन क्षीणः किङ्काङ्क्षतीत्याकाङ्क्षायामाह "कषायकटुतिक्तानि रूक्षशीतलघूनि च । यवमुद्गप्रियङ्गूंश्च वातक्षीणोऽभिकाङ्क्षति" । पित्तक्षीणः किं काङ्क्षतीत्याकाङ्क्षायामाह "तिलमाषकुलत्थादिपिष्टवर्षिकृतिन्तथा । मस्तुशुक्ताम्लतक्राणि काञ्जिकञ्च तथा दधि । कट्वम्ललवणोष्णानि तीक्ष्णं क्षारं विदाहि च । समयं देशमुष्णञ्च पित्तक्षीणोऽभिकाङ्क्षति । मधुरस्निग्धशीतानि लवणाम्लगुरूणि च । दधि क्षीरं दिवास्वप्नं कफक्षीणोऽभिकाङ्क्षति । रसक्षीणो नरः काङ्क्षत्यम्भोऽतिशिशिरं मुहुः । रात्रिं निद्रां हिमं चन्द्रं भोक्तुञ्च मधुरं रसम् । रक्तं मांसरसं मद्यं मधुसर्पिर्गुडौदनम् । द्राक्षादाडिमशुक्तानि सक्षारलवणानि च । रक्तसिद्धानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति । अन्नानि दधिसिद्धानि षाडवांश्च बहूनपि । स्थूलक्रव्यादमांसानि मांसक्षीणोऽभिकाङ्क्षति" । षाडवा मधुराम्लादिरससंयोगपाचिताः गुडप्रभृतयः । "मेदःसिद्धानि मांसानि ग्राम्यानूपौदकानि च । सक्षाराणि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति । अस्थिक्षीणस्तथा मांसं मज्जास्थिस्नेहसंयुतम् । स्वाद्वम्लसंयुतं द्रव्यं मज्जाक्षीणोऽभिकाङ्क्षति । शिखिनः कुक्कुटस्याण्डं हंसवारसयोस्तथा । ग्राम्यानूपौदकानाञ्च शुक्रक्षीणोऽभिकाङ्क्षति । यवान्नं माषकाञ्च शाकानि विविधानि च । मसूरमाषयूषञ्च मलक्षीणोऽभिकाङ्क्षति । पेयमिक्षुरसं क्षीरं सगुडं बदरोदकम् । मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च । अभ्यङ्गोद्वर्त्तने मद्यं निवातशयनासने । गुरु प्रावरणं चैव स्वेदक्षीणोऽभिकाङ्क्षति । कट्वम्ललवणोष्णानि विदाहीनि गुरूणि च । फलशाकानि पानानि स्त्री काङ्क्षत्यार्त्तवक्षये । सुराग्राम्यमांसानि गोक्षीरं शर्करान्तथा । आमं दधि द्रव्याणि स्तन्यक्षीणाऽभिकाङ्क्षति । अजाजाविवराहाणां गर्भान् काङ्क्षति संस्कृतान् । यथागुल्मप्रकारादीन् भोक्तुं गर्भपरिक्षये" ।

**क्षीणचन्द्र** पु० कर्म० । उभयपक्षयोरष्टमीमध्यस्थे चन्द्रे "कृष्णाष्टमीदलादूर्द्धं यावच्छुक्लाष्टमीदलम् । तावत्कालं शशी क्षीणः पूर्णस्तत्रोपरि स्मृतः" ज्यो० ।

**क्षीणाष्टकर्मन्** पु० क्षीणान्यष्ट कर्माण्यस्य । जिने हेम० अर्हच्छब्दे १८६पृ० विवृतिः "अष्टकर्म यथाम्नायः" "क्षीणाष्टकर्मा क्षेत्रज्ञः" इति तत्रत्यवाक्यम्

**क्षीब(व)** मदे भ्वा० आत्म० अक० सेट् । क्षीब(व)ते अक्षीबी-(वी)त् । क्लिक्षीव(ष)

**क्षीब(व)** त्रि० क्षीब(व)–क्त नि० । मत्ते । "क्षीबाः(वाः) कुर्वन्ति हास्यञ्च कलहं च तथाऽपरे" रामा० सु० ६ स० ।

**क्षीर** पु०न० क्षि–क्रन् दीर्घश्च, घस–अदने ईरन् किञ्च उपधालोपे चर् वा अर्द्धर्चा० । १दुग्धे २जले अमरः ३सरलद्रवे शब्दच० । "आमप्रवालं प्रसवात् क्षीरं पेयूषमुच्यते । परतो मोरटं विद्यादप्रसन्नं कफात्मकम्" रत्नमा० । क्षीरवर्गशब्दे विवृतिः "शाकाम्लफलपिण्याककुलत्थलवणान्वितैः । करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते । स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत् । दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नाशयेच्च । क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तञ्च नैतल्लवणेन सार्द्धम् । पिष्टान्नसन्धायकमाषमुद्गकोषातकीकन्दफलादिकैश्च" । "मत्स्यमांसगुडमुद्गमूलकैः कुष्ठिता भवति सेवितं पयः । शाकजाम्बवरसादिसेवितं मारयत्यबुधमाशु सर्पवत्" वैद्यके द्रव्यान्तरसंयोगे तस्यानर्थतोक्ता ।

"धेनुस्तनादिनिष्क्रान्तां धारां क्षीरस्य यो नरः । शिरसा प्रतिगृह्णाति स पापेभ्यः प्रमुच्यते" वराहपु० "अन् क्षीरवक्षा

मह्योत्सुकाः पायसकर्दमाः। तान् लोकान् पुरुषा यान्ति
क्षीरस्नपनकाः हरेः। आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं
चानुकूलताम्। सप्तजन्मान्यवाप्नोति क्षीरस्नानपरो हरेः।
दध्यादीनां विकाराणां क्षीरतः सम्भवो यथा। तथैवा-
शेषकामानां क्षीरस्नपनसम्भवम्। यथा च विमलं क्षीरं
यथा निर्वृतिकारकम्। तथास्य विमलं ज्ञानं भविष्यति
फलप्रदम्। पक्षानुकूलतां पुंसि प्रियमप्राप्रिये जने।
करोति भगवान् विष्णुः क्षीरस्नपनतोषितः। सर्वोऽस्य
स्निग्धतामेति हृदिमाद्ये प्रमोदति। स्नपनक्षीरेण देवेशे
सुप्ते मधुसूदने"। वह्नि॰ पु॰ क्रियायोगसाराध्याये।
तत्पाकविधिः भावप्र॰। "क्षीरमष्टगुणं द्रव्यात् क्षीरात्तोयं
चतुर्गुणम्। क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत्"

**क्षीरक** पु॰ क्षीरमिव कायति कै-क। क्षीरमोरटलतायाम्
रत्नमा॰। [ शब्द रत्ना॰।

**क्षीरकञ्चुकी** स्त्री क्षीरं कञ्चुकमिव त्वगस्य। क्षीरीश

**क्षीरकण्ठ** पु॰ क्षीरं कण्ठे यस्य। स्तनन्धये बालके।

**क्षीरकन्द** पु॰ क्षीरमिव कन्दोऽस्य। १क्षीरविदार्य्याम्, जटा-
धरः २क्षीरवल्ल्यां स्त्री राजनि॰। "क्षीरकन्दोद्विधा
प्रोक्तो विनामश्च सनालकः" राजनि॰।

**क्षीरकाकोलिका** स्त्री क्षीरमिव शुभ्रा काकोली। क्षीर-
विदार्य्यां भावप्र॰ काकोलीशब्दे १८५४ दृश्यम्।

**क्षीरकाण्डक** पु॰ क्षीरान्वितं काण्डं यस्य कप्। १स्नुही-
वृक्षे, २अर्कवृक्षे च अमरः।

**क्षीरकाष्ठा** स्त्री क्षीरप्रधानं काष्ठमस्याः। वटीवृक्षे राजनि॰

**क्षीरकीट** पु॰ ६त॰। दुग्धजाते कीटभेदे हारा॰

**क्षीरक्षव** पु॰ क्षीरं क्षरति क्षु-अच्। दुग्धपाषाणे राजनि॰

**क्षीरखर्जूर** पु॰ क्षीरवत् स्वादुः खर्जूरः। पिण्डखर्जूरे

**क्षीरघृत** न॰ क्षीरात् उद्भूतं घृतम्। मथितदुग्धजाते
घृते "क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं
नेत्ररोगहितञ्च" सुश्रुते सद्गुणा उक्ताः "द्राक्षारसं क्षीरघृतं
पिबेद्वा" सुश्रुतः [ माले स्त्रि॰

**क्षीरज** न॰ क्षीराज्जायते जन-ड। १दधि हेम॰ २दुग्धजात-

**क्षीरतैल** न॰ क्षीरपक्वं तैलम्। सुश्रुतोक्ते तैलभेदे "द्विशेषकाथ्य
पादांशधिकमवतार्य्य परिस्राव्य तैलमौल्मिकत्र पुनरन्नावधि-
श्रयेत् ततस्तैलं क्षीरादुगतमवतार्य्य शीतीभूतमभिमथ्नी
यात्तत्र यः स्नेह उत्तिष्ठेत्तमादाय मधुरौषधकषायक्षीरयु-
क्तं विपचेदेतत् क्षीरतैलमदंताह्नराणां पानाभ्यङ्गादिषूप
योज्यम्। तैलहीनं वा क्षीरसर्पिरवतर्पणमिति"।

**क्षीरदल** पु॰ क्षीरं दले यस्य। अर्कवृक्षे (आकन्द) राजनि॰

**क्षीरद्रुम** पु॰ क्षीरप्रधानो द्रुमः शा॰त॰। अश्वत्थवृक्षे राजनि॰

**क्षीरधि** पु॰ क्षीरं धीयतेऽस्मिन् धा—आधारे कि। क्षीर-
समुद्रे क्षीरनिधिरप्यत्र। "इन्दुः क्षीरनिधाविव" रघुः

**क्षीरधेनु** स्त्री क्षीरनिर्म्मिता धेनुः। दानार्थकल्पितक्षीर-
विहितधेन्वाम् तद्विधानादि हेमा॰ दा॰ ख॰ वह्नि पु॰यथा
"क्षीरधेनुं प्रवक्ष्यामि तां निबोध नराधिप!। अनुलिप्ते
महीपृष्ठे गोमयेन नरोत्तम!। गोचर्म्ममात्रमानेन कुशा-
नास्तीर्य सर्वतः। तत्रोपरि महाराज! न्यसेत् कृष्णा-
जिनं बुधः। तत्रोपरि कुण्डलीकां गोमयेन कृतामपि।
क्षीरकुम्भं ततः स्थाप्य चतुर्थांशेन वत्सकम्। सुवर्ण-
मुखशृङ्गाणि चन्दनागुरुकाणि च। प्रशस्तपत्रश्रवणां
तिलपात्रोपरि न्यसेत्। मुखं गुडमयं तस्या जिह्वा श-
र्करया तथा। फलप्रशस्तदन्ताश्च मुक्ताफलमयेक्षणाम्।
इक्षुपादां दर्भरोमां सितकम्बलकम्बलाम्। ताम्रपृष्ठां कां-
स्यदोहां पट्टसूत्रमयं तथा। पुच्छञ्च, कपर्द्दक! नवनी-
तमयस्तनीम्। स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नमयीं भुवि।
चत्वारि तिलपात्राणि चतुर्दिक्ष्वपि स्थापयेत्। सप्तव्री-
हिसमायुक्तां दिक्षु सर्वासु कल्पयेत्। एवं लक्षणसंयुक्तां
क्षीरधेनुं प्रकल्पयेत्। आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैः
समर्च्चयेत्। धूपदीपादिकं कृत्वा ब्राह्मणाय निवेदयेत्।
आच्छाद्यालङ्कृतं कृत्वा मुद्रिकाकर्णपत्रकैः। पादुको-
पानहं छत्रं दत्त्वा दानं समर्पयेत्। अनेनैव तु मन्त्रेण
क्षीरधेनुं प्रकल्पयेत्। या लक्ष्मीः सर्वभूतानामित्यादि
नरपुङ्गव!। आप्यायस्वेति मन्त्रेण क्षीरधेनुं प्रदापयेत्।
गच्छामि त्वां देवि! भक्त्या दाहको भक्तमुद्धरेत्। एवं धेनु-
मादायाथ क्षीराहारोदिनं चरेत्। त्रिरात्रन्तु पयोभक्षो
ब्राह्मणो राजसत्तम!। दीयमानां प्रपश्यन्ति ते यान्ति
परमां गतिम्। एतां हेमसहस्रेण शतेनाथ स्वशक्तितः।
शतार्द्धमथ वाप्यर्द्धं,तथैवार्द्धं यथेच्छया। दत्त्वा धेनुं म-
हाराज! शृणु तस्यापि तत्फलम्। दिव्यं वर्षसहस्रन्तु
रुद्रलोके महीयते। पितृपितामहैः सार्द्धं ब्रह्मणो-
भवनं व्रजेत्। दिव्यं विमानमारूढो दिव्यगन्धानुलेपनः।
क्रीडित्वा सुचिरं कालं विष्णुलोकं स गच्छति। द्वाद-
शादित्यसङ्काशैर्विमानैरुपशोभितैः। गीतवादित्रनिर्घोषै-
रप्सरोगणसेवितैः। तत्रोपविष्टोऽसौ राजा विष्णुसा-
युज्यतां व्रजेत्। य इदं शृणुयाद्राजन्! पठेद्वा भक्तिभा-
वितः। सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति"

**क्षीरनाश** पु० क्षीरं नाशयति नश–णिच् अण् उप०स०। श्लेष्मातकवृक्षे राजनि०। तद्वृक्षयोगात् दुग्धस्य नाशनं लोकसिद्धम्।

**क्षीरनीर** न० क्षीराम्भ नीरमिव। १आलिङ्गने शब्दमा०। आलिङ्गने हि क्षीरनीरयोरिव संसर्गो भवति। समा०द्व०। २क्षीरनीर-समाहारे न० "क्षीरनीरसमं मित्रं प्रशंसन्ति विचक्षणाः। तत्र नीरं क्षीरयति" वेता०। क्षीरमिव नीरम्। ३क्षीरतुल्ये जले न०। क्षीरनीरं धीयतेऽत्र धा-आधारे कि। क्षीर-धि दुग्धसमुद्रे पु०।

**क्षीरप** त्रि० क्षीरं पिबति पा–क। दुग्धपायिनि बालक-भेदे पु० "तत्रोनपोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीर-पाः क्षीरान्नादा अन्नादा इति तेषु संवत्सरपराः क्षीरपाः द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादाः" सुश्रु० "क्षीरं तु बालवत्सानां ये पिबन्तीह मानवाः। न तेषां क्षीरपाः केचित् भवन्ति कुलवर्द्धनाः" भा०आनु०१२५ अ०

**क्षीरपर्णिन्** पु० क्षीरयुक्तं पर्णमस्यास्ति इनि। अर्कवृक्षे राजनि०

**क्षीरपर्णी** स्त्री क्षीरं पर्णेऽस्याः गौ०ङीष्। अर्कवृक्षे शब्दच०

**क्षीरपलाण्डु** पु० क्षीरमिव शुभ्रः पलाण्डुः। श्वेतपलाण्डौ "स्निग्धोरुचिस्थः स्थिरधातुकर्त्ता बल्योऽथ मेधाकर पुष्टिदश्च। स्वादुर्गुरुः श्वासितपित्तशस्तः सपिच्छलः क्षीर-पलाण्डुरुक्तः" सुश्रुते तद्गुणा उक्ताः।

**क्षीरपाण** पु० पीयते पा-कर्म्मणि ल्युट् क्षीरं पानं यस्य "पानं देशे" पाणत्वम् अत्र देशः देशस्थायिजनपरः। १उशीनरदेशस्थजने सि०कौ०"वा भावकरणयोः" पा० भावे करणे च ल्युटि वा णत्वम् इत०। २तत्पानकरणे त्रि०। ३तत्पानपात्र्यां स्त्री ङीप्। ४दुग्धस्य पाने न०।

**क्षीरभृत** पु० क्षीरेण भृतः। दुग्धमात्रभृतिके गोपाले भृत्यभेदे। "गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनुः "यो गोपालस्तो भृत्यः क्षीरेण भृतो न भक्तादिना स स्वाम्यनुमत्या दशभ्यो गोभ्यः श्रेष्ठामेकां गां भृत्यर्थं दु-ह्यात् सा भक्तादिरहिते गोपाले भृतिः स्यात्। एव-मेकगवीक्षीरदानेन दश गाः पालयेदित्युक्तम्" कुल्लू०

**क्षीरवर्ग** पु० ६त० सुश्रुतोक्ते क्षीरभेदसंघे यथा "गव्यमाजं तथा चौष्ट्रमाविकं माहिषञ्च यत्। अश्वा-याश्चैव नार्य्याश्च करेणूनाञ्च यत्पयः। तत्त्वनेकौषधि-रसप्रस्वादं प्राणदं गुरु। मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु। सर्वं प्राणभृतां तस्मात् सात्म्यं क्षीरमि-होच्यते। तत्र सर्व्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जा-तिसात्म्यात्। वातपित्तशोणितमानसेष्वपि विकारेष्वविरुद्धम्। जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छाभ्रममद-दाहपिपासाहृद्बस्तिपाण्डुरोगग्रहणीदोषार्शःशूलोदाव-र्त्तातिसारप्रवाहिकायोनिरोगगर्भास्रावरक्तपित्तश्रमक्लम-हरं पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानमास्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनं विरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनमि-ति बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्शितानाञ्च पथ्यतमम्। गोक्षीरमनभिष्यन्दि स्निग्धं गुरु रसाय-नम्। रक्तपित्तहरं शीतं मधुरं रसपाकयोः। जीव-नीयं तथा वातपित्तघ्नं परमं स्मृतम्। गव्यतुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम्। दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत्। अजानामल्पकायत्वात् कटुतिक्त-निषेवणात्। नात्यम्बुपानाद्व्यायामात् सर्व्वव्याधिहरं पयः। रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु। शोफगुल्म-मोदरार्शोघ्नं कृमिकुष्ठविषापहम्। आविकं मधुरं स्निग्धं गुरु पित्तकफापहम्। पथ्यं केवलवातेषु कासे चानिलसम्भवे। महाभिष्यन्दि मधुरं माहिषं वह्नि-नाशनम्। निद्राकरं शीतकरं गव्यात् स्निग्धतरं गुरु। उष्णं चैकशफं बल्यं शाखावातहरं लघु। माधुर्य्यं मधुरं साम्लं कषायानुरसं हिमम्। नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम्। हस्तिन्या मधुरं वृष्यं क-षायानुरसं गुरु। स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बल-वर्द्धनम्। प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीत-लम्। रात्रौ सोमगुणत्वाच्च व्यायामाभावतस्तथा। दिवाकराभितप्तानां व्यायामानिलसेवनात्। वातानुलोमि श्रान्तिघ्नं चक्षुष्यं चापराह्णिकम्। पयोऽभिष्यन्दि गुर्व्वा-मं प्रायशः परिकीर्त्तितम्। तदेवोक्तं लघुतरमनभि-ष्यन्दि च शृतम्। वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम्। धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा। तदेवातिशृतं सर्वं गुरु बृंहणमुच्यते। अनिष्टगन्धम-म्लञ्च विवर्णं विरसञ्च यत्। वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्" भावप्र० अत्र विशेष उक्तस्तत्र व दृश्यं।

**क्षीरमोरट** पु० क्षीरवत् स्वादुः मोरटः। मोरटभेदे मोरट-शब्दे विवृतिः। "क्षीरमोरटमधूलिकाकृष्णाबल्वप्रभृतीनि समाहेन मधुरोवर्गः" सुश्रु०का च पीलुपर्ण्यादिके।

**क्षीरलता** स्त्री क्षीरप्रधाना लता। क्षीरविदार्य्याम् राजनि०

नाविधानि रत्नानि दिव्यान्याभरणानि च । क्षीरोदधेस्तू-त्थितानि गन्धर्वाश्च सहस्रशः । एतान् दृष्ट्वा तदोत्पन्ना-नत्याश्चर्यसमन्विताः । अभवन् जातहर्षास्ते तत्र सर्वे सुरासुराः । दैत्यपक्षे ततो मेघाः सस्यग्वर्षन्ति संस्थिताः । कृष्णाज्ञया तु वायुस्तु सुखं वाति सुरान् प्रति । विष्णुनिःश्वासवातेन वासुकेस्तार्क्ष्यतापनात् । निस्तेजसोऽभवन् दैत्या निर्वीर्याश्च महामते ! । ततः श्रीरुत्थिता तस्मात् क्षीरोदाद्धृतपङ्कजा । विभ्राजमाना राजेन्द्र दिशः सर्वाः स्वतेजसा । ततस्तीर्थोदकैः स्नाता दिव्यवस्त्रैरलङ्कृता । दिव्यगन्धानुलेपैस्तु सुमनोभिः सुपूजिता । देवपक्षं समासाद्य स्थिता चाप्यरिन्दम ! । हरिवक्षःस्थलं प्राप्ता ततः सा कमलालया । ततोऽमृतघटं पूर्णं गृहीत्वा पयसो निधेः । धन्वन्तरिः समुत्तस्थौ" ।

**क्षीराब्धितनया** स्त्री ६त० । लक्ष्म्यां १तस्यास्तज्जातत्वात्तथात्वम् २चन्द्रे पु० क्षीराब्धिजशब्दे दृश्यम् ।

**क्षीरावी** स्त्री क्षीरमवति अव—अण् ङीप् । दुग्धिकायाम् (दुधी) अमरः स्वार्थे क । तत्रार्थे । अस्याः पत्रच्छेदने दुग्धवर्णस्रावसद्भावात्तथात्वम् । सा च "शकलतुल्य-पत्रा" सुभूतिः । [ त्रिका०

**क्षीराह्व** पु० क्षीरमाह्वयते स्पर्द्धते आ+ह्वे-क । सरलद्रुमे

**क्षीरिका** स्त्री क्षीरं तत्तुल्यस्वादोऽस्त्यस्य ठन् । १राजादने २पिण्डखर्ज्जूरे अमरः । "क्षीरिकायाः फलं पक्वं गुरु विष्टम्भि शीतलम्" राजनि० । "क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु । तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित्" भावप्र० । ३परमान्ने भावप्र० कृतान्नशब्दे २१८०पृ० दृश्यम्

**क्षीरिद्रुमाद्य** न० "क्षीरिद्रुमाद्योत्थरसे विपक्वं तज्जैश्च कल्कैः पयसा च सर्पिः । सितोपलार्द्धं मधुपादयुक्तं रक्तातिसारं शमयत्युदीर्णम्" चक्रदत्तोक्ते घृतभेदे

**क्षीरिन्** पु० क्षीरं तत्तुल्यनिर्यासोऽस्त्यस्य इनि । क्षीरतुल्यनिर्यासयुक्ते १वृक्षभेदे स च भावप्र० उक्तो यथा "न्यग्रोधोडुम्बराश्वत्थपारीषप्लक्षपादपाः । पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चवल्कलम् । केचित्तु पारीषस्थाने शिरीषं वेतसं परे" वदन्तीति शेषः । "क्षीरवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः । रूक्षाः कषाया मेदोघ्ना विसर्पशयनाशनाः । शोथपित्तकफास्रघ्नाः स्तन्याभ-ग्नास्थियोजकाः । त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित् । तेषां पत्रं हिमं ग्राहि कफवातास्रनुत्तथा ।

विदर्भ्याध्मानजित् तिक्तं कषायं लघुलेखनम्" तद्गुणाः । २हिमजायां तिक्तदुग्धायां पीतदुग्धायां क्षीरिकायां स्त्री ङीप् जटा० "क्षीरिणी तिक्तपीता च रेचना शोकतापहृत् । कृमिदोषकफघ्नी च पित्तज्वरहरी परा" राजनि० । ३वराहक्रान्तायां शब्दचि० ४कटुतुम्ब्यां ५काश्मर्य्यां ६दुग्धिकायां च राजनि० दुग्धिकायां पुंस्त्री शब्दच० ७स्नुहीवृक्षे ८अर्कवृक्षे ९राजादन्याम् १०दुग्धपाषाणे ११प्लक्षे १२सोमलतायां १३श्यालीवृक्षे च पु० राजनि०

**क्षीरी** स्त्री० क्षीर+अस्त्यर्थे अच् गौरा०ङीप् । (गिरखोला) ख्याते वृक्षभेदे शब्दर० ।

**क्षीरीश** पु० क्षीरिणां वृक्षाणामीशः प्रधानत्वात् । परपर्णे कुकुन्दरे मूलकाकारमूले स्वरगन्धे वृक्षभेदे रत्नमा० ।

**क्षीरेयी** स्त्री० क्षीरेण ईं शोभां याति या-क गौ० ङीप्, क्षीर+भा० भवार्थे ढञ् वा ङीप् । परमान्ने हला०

**क्षीरोद** पु० क्षीरमिव स्वादु उदकं यस्य उदादेशः । दुग्धसमुद्रे "ततः श्रीरुत्थिता तस्मात् क्षीरोदात् धृतपङ्कजा" हरिवंशपु० । क्षीरोदमन्थनकथा यथा

"मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् । दानवैः सहिता भूत्वा मथध्वं क्षीरसागरम् । अहञ्च तत्र साहाय्यं करिष्यामि दिवौकसः! । मथिष्यध्वमतं तत्र तत्प्रभावाद्धि निर्जराः । भविष्यथ क्षणादेव अमृतस्य प्रभावतः । यूयं सर्वे महावीर्या भविष्यथ रणक्रमाः । इन्द्राद्यास्तु महोत्साहाः स्थानलब्धमहामरीन् । ततो हि दानवान् जेतुं समर्था नात्र संशयः । इत्युक्ता देवदेवेन देवाः सर्वे जगत्पतिम् । प्रणम्यागम्य निलयं सन्धिं कृत्वाथ दानवैः । क्षीराब्धिमथने सर्व्वे चक्रुरुद्योगमुत्तमम् । बलिना चोद्धृतो राजन् ! मन्दराख्यो महागिरिः । क्षीराब्धौ क्षेपणश्चैव तेनैवाथ महीपते ! । सर्व्वौषधिश्च प्रक्षिप्ता दैवदैत्यैः पयोदधौ । वासुकिश्च ततस्तत्र राजन् । नारायणाज्ञया । सर्पदेवहितार्थाय विष्णुश्च स्वयमागतः । ततो विष्णुसमादेशात्तत्र सर्वे सुरासुराः । समेत्य मित्रभावेन क्षीराब्धेस्तटमाश्रिताः । मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाऽथ वासुकिम् । ततो मथितुमारब्धा नृपते ! तरसाऽमृतम् । विष्णुना मुखभागे तु वासुकेर्दानवाः कृताः । देवाश्च पुच्छभागे तु मन्थनार्थे नियोजिताः । एवन्तु मथ्यमानस्तु मन्दराधः प्रविश्य वै । आधारेण विना राजंस्तं दृष्ट्वा सहसा हरिः । सर्वलोकहितार्थाय कूर्मरूपमधारयत् । आत्मानं सं-

नाचामेत् दक्षिणं श्रवणं स्पृशेत्”। अन्यक्षुतें जीवशब्दः प्रयोज्यः यथा मदनपारिजातधृतम् “जीवेति क्षवतो ब्रूयात् जीवेत्युक्ते त्वया सहेति” “क्षुतानुपतनजृम्भासु जीवेत्तिशाद्धप्रिस्वनः। गुरोरपि च कर्त्तव्योऽन्यथा प्रत्यहा भवेत्” त०त०। “दीर्घायुष्कृत् क्षुतं दीर्घं युगपद्बहुनिर्पिण्डितम्” काशीख०क्षीलक्षणे। असंवृतमुखस्य क्षुतकरणं निषिद्धं यथा विष्णुध० “नासंवृतमुखः कुर्य्याद्धास्यं जृम्भां तथा क्षुतम्”। “स्खलितं प्रतिक्षुतमितोपशृस्तं” माघः ताजकोक्तायाम् २अरिष्टक्षौ अरिष्टशब्दे ३५५पृ० विवृतिः “क्षुताच्छादा न शुभं तदापि”। “क्षुतदृष्ट्या रिपोर्भयम्” नीलक०।

क्षुतक पु० क्षुताय साधु कन्। राजिकायाम् राजनि०।

क्षुताभिजनन पु० क्षुतमभिजनयति अभि+जन-णिच्-ल्यु। (राइ) कृष्णसर्षपभेदे अमरटीकायां स्वामी

क्षुत्करी स्त्री क्षुतं करोति कृ-ट ङीप्। सर्षाकी च शब्दच०

क्षुद गतौ निघ० भ्वा० प० सक० सेट्। क्षोदति अक्षोदीत् चुक्षोद। “उत क्षोदन्ति रोदसी महित्वा” ७,५८,१, “क्षोदन्त आपो रिणते वनानि” ऋ०५,५८,६,

क्षुद पेषणे रुधा० उभ० सक० अनिट् इरित्। क्षुणत्ति अक्षुदत् अक्षौत्सीत् अक्षुत्त। चुक्षोद चुक्षुदे। क्षुण्णः क्षुन्दन् क्षुन्दानः। क्षोदः। “क्षुण्णमिव विपक्षकैः” क्षुन्नन्ति सर्पान् पाताले” भट्टिः। “ते तं व्याधिपुरक्षौत्सुः” “अक्षुदद्वाजिकुञ्जरम्” भट्टिः “पदः खगडनखण्डखाद्यसहजक्षोदक्षमे” नैषध०। उपसर्गपूर्व्वस्तु तत्तद्योत्यार्थयुक्ते पेषणे। [कविक०।

क्षुद् स्त्री क्षुद-सम्प० भावे क्विप्। चूर्णने “क्षुदिर क्षुदि”

क्षुद्र त्रि० क्षुद-कर्त्तरि रक्। १कृपणे २अधमे ३क्रूरे ४अल्पे च मेदि०। ५दरिद्रे हेम०। ६तण्डुलीयशाके पु० शब्दचि०। “क्षुद्रेऽपि नूनं शरणं प्रपन्ने” कुमा० “क्षुद्राः संत्रासमेते विजहत हरयः” सा०द०। “कामात्मा विषयः क्षुद्रः” मनुः। ततः अतिशायने इष्ठन् ईयसुन् रलोपे गुणः। क्षोदिष्ठ क्षोदीयस् अतिशयक्षुद्रादौ त्रि०। “इष्टतृषाहायः कार्य्यान् क्षोदीयानपि गच्छति” माघः

क्षुद्रकण्टकारी स्त्री नि० क०। अग्निदमनीवृक्षे राजनि०

क्षुद्रकण्टकी स्त्री क्षुद्रं कण्टकं यस्याः गौ०ङीप्। १हङ्खाम् भावप्र० क्षुद्रभण्टाकीति वा पाठः

क्षुद्रकण्टिका क्षुद्रं कण्टकं यस्याः टाप् अत इत्वम्। कण्टकारिकायाम् शब्दच०।

क्षुद्रकमानस न० काश्मीरदेशस्थे कुङ्कुमोत्पत्तिस्थानभेदे। “काश्मीरेषु सरो नाम्ना दिव्यं क्षुद्रकमानसम्” सुश्रु०

क्षुद्रकम्बु पु० कर्म्म०। शम्बूके (शामुक)। हेमच०

क्षुद्रकारवेल्ली स्त्री कर्म्म०। वनकारवेल्लीभेदे राजनि०। पृषो० क्षुद्रकारलिकाप्यत्र राजनि०

क्षुद्रकुलिश पु० नि० कर्म्म०। वैक्रान्तमणौ राजनि०

क्षुद्रकुष्ठ न० कर्म्म० सुश्रुताद्युक्तेषु एककुष्ठादिषु एकादशकुष्ठभेदेषु कुष्ठशब्दे विवृतिः [क्षुरे राजनि०

क्षुद्रक्षुर पु० क्षुद्रक्षुरस्येवाकारोऽस्त्यस्य अच्। क्षुद्रगो-

क्षुद्रगोक्षुरक क्षुद्रगोक्षुरमिव कायति कै-क (छोटगोक्षुरी) गोक्षुरभेदे राजनि० [किङ्किण्याम् (घुङ्गुर) अमरः

क्षुद्रघण्टिका स्त्री० घण्टा+अल्पार्थे कन् घण्टिका कर्म्म०।

क्षुद्रघोण्टी स्त्री नि० कर्म्म०। १चिरिविल्वकाक्षुपे राजनि०

क्षुद्रचञ्चु पु० क्षुद्रं चञ्चुरिवाकारोऽस्य। क्षुपभेदे राजनि०

क्षुद्रचन्दन पु० नित्य कर्म्म०। रक्तचन्दने राजनि०

क्षुद्रचिर्भटी स्त्री नि० कर्म्म०। गोपालकर्कट्यां राजनि०

क्षुद्रचूड पुंस्त्री क्षुद्रा चूडा यस्य (गुण्शालिक) खगभेदे शब्दच०

क्षुद्रजन्तु पु० कर्म्म०। ‘क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव वा। शतं वा प्रसृतौ येषां केचिदा नकुलादपि” इत्युक्ते स्वल्पे १जन्तौ। २शतपद्यां शब्दमाला

क्षुद्रजम्बू स्त्री कर्म्म०। भूमिजम्ब्वाम् शब्दचि०।

क्षुद्रजातीफल पु० कर्म्म०। आमलके राजनि०

क्षुद्रजीरक न० कर्म्म०। कणजीरके, सुगन्धे शब्दच०

क्षुद्रजीवा स्त्री कर्म्म०। जीवन्तीवृक्षे राजनि०

क्षुद्रतुलसी स्त्री नि० कर्म्म०। बर्व्वरीभेदे राजनि०

क्षुद्रदंशिका स्त्री नि०कर्म०। (छोटडांश) दंशभेदे जटा०।

क्षुद्रदुरालभा स्त्री नि०कर्म्म०। स्वल्पदुरालभाभेदे राजनि०

क्षुद्रदुस्पर्शा स्त्री नि० कर्म्म०। अग्निदमनीवृक्षे राजनि०

क्षुद्रधात्री स्त्री नित्य कर्म्म०। कर्कटवृक्षे राजनि०।

क्षुद्रधान्य न० कर्म्म०। तृणधान्ये कङ्गुप्रभृतौ भावप्र० “क्षुद्रधान्यं कुधान्यञ्च तृणधान्यमिति स्मृतम्। क्षुद्रधान्यमनुष्णं स्यात् कषायं लघु लेखनम्। मधुरं कटुकं पाके रूक्षञ्च क्लेदशोषकम्। वातकृत् बद्धविट्कञ्च पित्तरक्तकफापहम्” तद्गुणा उक्ताः।

क्षुद्रनासिक त्रि० क्षुद्रा नासिकाऽस्य। ह्रस्वनासिके (खाँदा)

क्षुद्रपत्रा स्त्री क्षुद्रं पत्रं यस्याः टाप्। चाङ्गेर्य्याञ्च (चुकोपालङ्ग)। हारा०। २स्वल्पपत्रान्विते त्रि०। गौरा० ङीष्। ३वचायां स्त्री राजनि०।

**क्षुद्रपनस** पु० नि० कर्म्म०। लकुचे (माँदार) राजनि०।

**क्षुद्रपर्ण** पु० क्षुद्रं पर्णमस्य। १अर्जके वर्वरीभेदे राजनि०। २स्वल्पपत्रयुक्ते त्रि०। [ क्षुपभेदे राजनि०।

**क्षुद्रपाषाणभेदा** स्त्री नि० कर्म्म०। गिरिभवे कन्दरोत्थे

**क्षुद्रपिप्पली** स्त्री नित्य० कर्म्म०। वनपिप्पल्याम् राजनि०

**क्षुद्रपृषती** स्त्री नित्य० कर्म्म०। स्वल्पविन्दुयुक्तायां पृषन्त्यां मृगीभेदे "पृषती क्षुद्रपृषती स्थूलपृषती मैत्रावरुण्यः" यजु० २४, २, अत्रत्यवेददीपे उक्तार्थकता दृष्टा

**क्षुद्रपातिका** स्त्री नि० कर्म्म०। मूलपोतिकायां राजनि०।

**क्षुद्रफल(क)** क्षुद्रं फलमस्य वा कप्। १जीवनवृक्षे शब्दच०। २भूमिजम्बुवृक्षे शब्दमा०। कप्भावे। ३इन्द्रवारुण्यां ४गोपालकर्कट्याम् ५अग्निदमन्यां ६कण्टकारिकायां च स्त्री राजनि० टाप्।

**क्षुद्रभण्डाकी** स्त्री नि० कर्म्म०। वृहत्याम् राजनि०।

**क्षुद्रमत्स्य** पु० कर्म्म०। स्वल्पमत्स्ये (कोटमाछ) "क्षुद्रमत्स्याः स्वादुरसा दोषत्रयविनाशनाः। लघुपाका रुचिकराः सर्वदा ते हिता मताः। अतिसूक्ष्माः पुंस्त्वहराः रूच्याः कासानिलापहाः" भावप्र० तद्गुणा उक्ताः।

**क्षुद्रमुस्ता** स्त्री नि० कर्म्म०। कसेरुक्षुपे राजनि०।

**क्षुद्ररोग** पु० कर्म्म०। सुश्रुतोक्ते चतुश्चत्वारिंशत्स्वल्परोगभेदे यथा "अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः। समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति। तद्यथा अजगल्लिका यवप्रख्याऽन्धालजी विवृता कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्दभो जालगर्दभः कक्षा विस्फोटकोऽग्निरोहिणी चिप्पं कुनखोऽनुशयी विदारिका शर्कराऽर्बुदं पामा विचर्चिका रकसा पाददारिका कदरमलसेन्द्रलुप्ते दारुणकोऽरुंषिका पलितं मसूरिका यौवनपिडका पद्मिनीकण्टको जतुमणिर्मशकश्चर्म्मकीलस्तिलकालको न्यच्छं व्यङ्गः परिवर्तिकाऽवपाटिका निरुद्धप्रकशो निरुद्धगुदोऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति। स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा। कफवातोत्थिता ज्ञेया बालानामजगल्लिका१। यवाकारा सुकठिना ग्रथिता मांससंश्रिता। पिडका श्लेष्मवाताभ्यां यवप्रख्येति२ सोच्यते। घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम्। अन्धालजी३ मल्पपूयां तां विद्यात् कफवातजाम्। विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम्। विवृतामिति४ तां विद्यात्पित्तोत्थां परिमण्डलाम्। ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः। कफानिलाभ्यां भूतां ता विद्यात्तां कच्छपी५मिति। पाणिपादतले सन्धौ ग्रीवायामूर्द्ध्वजत्रुणि। ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते। तोदक्लेदपरीदाहकण्डूमद्भिर्मुखैर्वृतः। व्याधिर्वल्मीक६ इत्येष कफपित्तानिलोद्भवः। पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम्। इन्द्रवृद्धान्तु ७ तां विद्याद्वातपित्तोत्थितां भिषक्। कर्णोपरि समन्ताद्वा पृष्ठे वा पिडकोग्ररुक्। शालूकवत्पनसिकां ८ तां विद्यात् श्लेष्मवातजाम्। हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम्। पाषाणगर्दभं ९ विद्याद्बलासपवनात्मकम्। विसर्पवत्सर्पति यो दाहज्वरकरस्तनुः। अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्दभः१०। बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम्। पित्तप्रकोपात्सम्भूतां कक्षामिति११ विनिर्दिशेत्। अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः। क्वचित्सर्वत्र वा देहे स्मृता विस्फोटका१२ इति। कक्षाभागेषु ये स्फोटा जायन्ते मांसदारणाः। अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः। सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्। तामग्निरोहिणीं १३ विद्यादसाध्यां सन्निपाततः। नखमांसमधिष्ठाय पित्तं वायुश्च वेदनाम्। करोति दाहपाकौ च तं व्याधिं चिप्प१४मादिशेत्। तदेव क्षतरोगाख्यं तथोपनखमित्यपि। अभिघातात्प्रदुष्टो यो नखो रूक्षोऽसितः खरः। भवेत्तु कुनखं१५ विद्यात्कुलीनमिति संज्ञितम्। गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम्। कफादन्तःप्रपाकान्तां विद्यादनुशयीं१६ भिषक्। विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु। रक्तां विदारिकां१७ विद्यात् सर्वजां सर्वलक्षणाम्। प्राप्य मांसशिरास्नायु श्लेष्मा मेदस्तथाऽनिलः। ग्रन्थिं कुर्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम्। स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः। मांसं विशोष्य ग्रथितां शर्करां जनयेत्पुनः। दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः। स्रवन्ति सहसा रक्तं तद्विद्याच्छर्कराबुर्दम्१८। पामाविचर्च्चौ१९ २०कुष्ठेषु रकसा२१ च प्रकीर्त्तिता। परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः। पादयोः कुरुते दारीं२२ सरुजां तलसंश्रिताम्। शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः। मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम्। सकीलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा। कोलमात्रः सरुक्स्रावो जायते कदरस्तु२३ सः। क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ। दुष्टकर्द्दमसंसर्गादलसं २४ तं विनिर्दिशेत्। रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्। प्रच्यावयति

रोमाणि ततः श्लेष्मा सशोणितः । रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः । तदिन्द्रलुप्तं २५ खालित्यं रुढ्येति च विभाव्यते । दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते । कफवातप्रकोपेण विद्याद्दारुणकन्तु २६ तम् । अरूंषि बहुवक्त्राणि बहुक्लेदानि मूर्द्धनि । कफासृक्कृमिकोपेन नृणां विद्यादरुंषिकाम् २७ । क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः । पित्तञ्च केशान् पचति पलितं २८ तेन जायते दाहज्वररुजावन्तः स्फोटाः सपीतकाः । गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः २९ । शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः । जायन्ते पिडका यूनां ३० वक्त्रे या मुखदूषिकाः । कण्टकैराचितं वृत्तं कण्डुमत् पाण्डुमण्डलम् । पद्मिनीकण्टकप्रख्यैस्तदाख्यं ३१ कफवातजम् । नीरुजं सममुत्सन्नं मण्डलं कफरक्तजम् । सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं ३२ विदुः । अवेदनं स्थिरञ्चैव यस्य गात्रेषु दृश्यते । माषवत् कृष्णमुत्सन्नमनिलान्मशकं ३३ दिशेत् । समुत्थाननिदानाभ्यां चर्मकीलं ३४ प्रकीर्त्तितम् । कृष्णानि तिलमात्राणि नीरुजानि समानि च । वातपित्तकफोद्रेकात्तान् विद्यात्तिलकालकान् ३५ । मण्डलं महदल्पं वा श्यामं वा यदि वा सितम् । सहजं नीरुजं गात्रे न्यच्छं ३६ मित्यभिधीयते । क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः । सहसा मुखमागम्य मण्डलं विसृजेत्ततः । नीरुजं तनुकं श्यावं मुखे व्यङ्गं ३७ तमादिशेत् । मर्द्दनात्पीडनाच्चापि तथैवाप्यभिघाततः । मेढ्रचर्म्म यदा वायुर्भजते सर्व्वतश्चरः । तदा वातोपसृष्टन्तु चर्म्म प्रतिनिवर्त्तते । मणेरधस्तात्कोषश्च ग्रन्थिरूपेण लम्बते । सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित् । मारुतागन्तुसम्भूतां विद्यात्तां परिवर्त्तिकाम् ३८ । सकण्डुः कठिना चैव सैव श्लेष्मसमुत्थिता । अल्पीयसीं यदा हर्षाद्बालां गच्छेत् स्त्रियं नरः । हस्ताभिघातादथ वा चर्म्मण्युद्वर्त्तिते बलात् । मर्द्दनात्पीडनाद्वापि शुक्रवेगविघाततः । यस्यावपाट्यते चर्म्म तां विद्यादवपाटिकाम् ३९ । वातोपसृष्टमेवन्तु चर्म्म संश्रयते मणिम् । मणिश्चर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च । निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् । मूत्रं प्रवर्त्तते जन्तोर्म्मणिर्न्न च विदीर्य्यते । निरुद्धप्रकशं ४० विद्यादरुढां चावपाटिकाम् । वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः । निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च । मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति । सन्निरुद्धगुदं ४१ व्याधिमेनं विद्यात्सुदुस्तरम् । शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् । स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा । कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते । एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ४२ । स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः । प्रक्लिद्यते यदा स्वेदात् कण्डूं जनयेत्तदा । तत्र कण्डूयनात् क्षिप्रं स्फोटाः स्रावश्च जायते । प्राहुर्वृषणकच्छूं ४३ तां श्लेष्मरक्तप्रकोपजाम् । प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः । रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत् ।

क्षुद्रल त्रि० क्षुद्राः क्षुद्ररोगाः सन्त्यस्य सिध्मा० लच् । क्षुद्ररोगयुक्ते

क्षुद्रवर्वरा स्त्री नित्यकर्म्म० । वरटायां राजनि०

क्षुद्रवल्ली स्त्री नित्यकर्म्म० । मूलपोतिकायाम् राजनि०

क्षुद्रवार्त्ताकिनी स्त्री नि०कर्म्म० । श्वेतकण्टकार्य्यां राजनि०

क्षुद्रवार्त्ताकी स्त्री नि० कर्म्म० । बृहत्याम् अमरः

क्षुद्रशङ्ख पु० नित्य कर्म्म० । शङ्खनखे (जोङ्‌डा) अमरटीका

क्षुद्रशर्करा स्त्री नि०कर्म्म० । यावनालशर्करायाम् राजनि०

क्षुद्रशार्दूल पुंस्त्री नि० कर्म्म० । क्षुद्रव्याघ्रे (चिताबाघ) राजनि० [शमि त्रि०

क्षुद्रशीर्ष पु० क्षुद्रं शीर्षमस्य । १मयूरशिखावृक्षे, २स्वल्पशीर्ष-

क्षुद्रशुक्ति स्त्री नि० कर्म्म० । जलशुक्तिकायाम् । स्वार्थे क तत्रैवार्थे राजनि०

क्षुद्रश्यामा स्त्री नि० कर्म्म० । कटभीवृक्षे राजनि०

क्षुद्रश्लेष्मातक पु० नि० कर्म्म० । भूकर्बुदारवृक्षे राजनि०

क्षुद्रश्वास पु० कर्म्म० । श्वासरोगभेदे

"क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्वश्च पञ्चधा भिद्यते स महाव्याधिः श्वास एको विशेषतः । प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा । आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च । किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते । निषण्णस्यैति शान्तिञ्च स क्षुद्र इतिसंज्ञितः" सुश्रु० "रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन् । क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः । हिनस्ति न च गात्राणि न च दुःखं यथेतरे । न च भोजनपानानां निरुणद्ध्युचितां गतिम् । नेन्द्रियाणां व्यथाञ्चापि काञ्चिदुत्पादयेद्रुजम् । स साध्य उक्तो बलिनः सर्व्वे चायत्तलक्षणाः" भावप्र०

क्षुद्रश्वेता स्त्री सुश्रुतोक्ते अर्कादिगणोक्ते ओषधिभेदे "रास्नेन्द्रपुष्पी क्षुद्रश्वेता महाश्वेतादि" सुश्रुतः

**क्षुद्रसहा** स्त्री सह–अच् क्षुद्रस्य सहा ६त०। १शुक्लपर्ण्याम् २माक्षीरमक्षायाम् राजनि०

**क्षुद्रसुवर्ण** न० नि० कर्म्म०। पित्तले राजनि०

**क्षुद्रहिङ्गुली** स्त्री कर्म्म०। १कण्टकार्य्याम्। स्वार्थे क अपो ह्रस्वे टाप्। अत्रैवार्थे शब्दच०।

**क्षुद्रा** स्त्री क्षुद–रक्। १वेश्यायाम्, "क्षुद्राधिष्ठितभवनाः" काद० २कण्टकार्य्याम्, ३सरघायाम्, अमरः ४मक्षिकामात्रे, ५चाङ्गेर्य्याम्, ६हिंस्रायाम्, हेमच० ७नटेभुकायां (गन्धभादाल) रत्नमा० ८वादरतायाम्, शब्दर० "क्षुद्राभिरक्षुद्रतराभिराकुलम्" माघः "क्षुद्राभिः सरघाभिः" मल्लि० ९व्यङ्गायाञ्च। क्षुद्राभिः निर्वृत्तम् अण्। क्षौद्र मधुनि "स क्षौद्रपटलैरिव" रघुः [कायाम् राजनि०

**क्षुद्राग्निमन्थ** पु० कर्म्म०(छोटगणिआरी) स्वल्पगणिकारि-

**क्षुद्राञ्जन** न० सुश्रुतोक्ते अञ्जनभेदे "गोमूत्रपित्तमदिरा यकृद्धात्रीरसे पचेत्। क्षुद्राञ्जनं रसे चान्त्यतयकृत् स्वफलेऽपि वा। गोमूत्राज्यार्णवमलपिप्पलीक्षौद्रकट्फलं सैन्धवोपहितं युक्ताविहितं वेणुगह्वरे। भेदो यकृद्गतक्षाजं पिप्पल्यः सैन्धवं मधु। रसमामलकस्यापि पक्वं सम्यग् निधापयेत् कोशे खादिरनिर्म्माणे तद्वत् क्षुद्राञ्जनं हितम्"।

**क्षुद्राण्डमत्स्यसंघात** पु० क्षुद्राणामण्डमत्स्यानामण्डाभिन्नयन्त्राणां मत्स्यानां संघातः। (पोनार झाँक) पोताधाने अमरः

**क्षुद्रादिकषाय** पु० चक्रदत्तोक्ते कषायभेदे "क्षुद्राऽमृतानागरपुष्कराह्वयैः कृतः कषायः कफमारुतोत्तरे। सश्वासकासारुचिपार्श्वरुग्भवे ज्वरे त्रिदोषप्रभवे च शस्यते"

**क्षुद्रापामार्ग** पु० नि० कर्म्म०। रक्तापामार्गे राजनि०

**क्षुद्रामलकसंज्ञ** पु० क्षुद्रामलकस्य संज्ञेव संज्ञा यस्य। कर्कटवृक्षे राजनि०

**क्षुद्राम्ल** पु० नि० कर्म्म०। कोषाम्रे राजनि०

**क्षुद्राम्रपनस** पु० नि० कर्म्म०। लकुच त्रिका०

**क्षुद्राम्ला** स्त्री क्षुद्रा अम्लरसा कर्म्म०। १चाङ्गेर्य्याम् हारा० (चुकोपालङ्ग) स्वार्थे क। अत्रैवार्थे। २यवाक्षुल्याम् राजनि०

**क्षुद्रिका** स्त्री क्षुद्रैव क। दंशे(डाँश) राजनि०

**क्षुद्रीय** त्रि० क्षुद्र+उत्करा० चतुरर्थ्याम् छ। क्षुद्रनिर्वृत्तादौ

**क्षुद्रेङ्गुदी** स्त्री नित्यकर्म०। यवासे राजनि०

**क्षुद्रेर्वारु** पु० कर्म०। गोपालकर्कट्याम् राजनि०

**क्षुद्रोदुम्बरिका** स्त्री कर्म०। काकोदुम्बरिकायाम् राजनि०

**क्षुद्रोपोदिका** स्त्री नि० कर्म०। मूलपोतिकायाम् राजनि०

**क्षुद्रोलूक** पुंस्त्री कर्म०। उलूके राजनि०

**क्षुध** बुभुक्षायां दिवा० पर० सक० अनिट् इदित्। क्षुध्यति अक्षुधत्। चुक्षोध क्षुत्। क्षुधा क्षुधितः। क्षुधित्वा। "क्षुध्यद्भ्योवय आसुतिदाः ऋ० १,१०४,७, मा क्षुधन्मा-तृषत्" अथ० २,२९,४, क्षुध्यन्तोऽभ्यवदन् व्याघ्राः"। "क्षुधित्वा पलिभिर्वनम्" भट्टिः। क्षुधाजातास्य तारका० इतच्। क्षुधित संजातक्षुधे त्रि०

**क्षुध्** स्त्री क्षुध–भावे संप० क्विप्। १बुभुक्षायाम्। कर्म्मणि क्विप्। २अन्ने निघ० पाठान्तरम्। "यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा" मनुः हलन्तत्वात् वा टाप्। क्षुधाप्यत्र स्त्री क्षुधार्त्तः। "या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता" देवीमा०। क्षुधा च प्राणिनां स्वाभाविकदुःखहेतुर्यथोक्तं सुश्रुते "स्वाभाविकाः क्षुत्पिपासाजरामृत्युनिद्राः प्रभृतयः"। इयञ्च प्राणधर्म्मः यथाह शा०ति० "बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू षडूर्म्मयः"। क्षुधा कार्य्याणि यथा

"व्याधयो निर्जिताः सर्वे क्षुधया मधुसूदन!। कुब्जकी सकटी कुब्जी तथैवान्धकृतो नरः। क्षुधार्त्तो न विराजेत प्रेतवत्कृशितो भृशम्। स्त्रीरत्नं विविधान् भोगान् वस्त्राण्याभरणानि च। न वेच्छति नरः किञ्चित् क्षुधया कलुषीकृतः। यथा भूमिगतं तोयं रविरश्मिभिः शुष्यति। शरीरस्थस्तथा धातुः शुष्यते जाठराग्निना। न शृणोति न चाघ्राति चक्षुषा न च पश्यति। दह्यते वेपते मूढः शुष्यते च क्षुधार्द्दितः। मूकत्वं बधिरत्वञ्च जडान्धत्वन्तु पङ्गुताम्। रौद्रं मर्य्यादहीनत्वं क्षुधा सर्वं प्रयच्छति। भगिनीं जननीं पुत्रं भार्य्यां दुहितरं तथा। भ्रातरं स्वजनं वापि क्षुधाविष्टो न विन्दति"।

**क्षुधाकुशल** पु० ७त० बिल्वान्तरवृक्षे राजनि०

**क्षुधाभिजनन** पु० क्षुधामभिजनयति अभि+जन+णिच् ल्यु। १राजिकायां अमरः। २क्षुधाजननमात्रे त्रि०

**क्षुधालु** त्रि० क्षुध–बा० आलुच्। क्षुधायुक्ते

**क्षुधावत्** त्रि० क्षुधा–अस्त्यस्य क्षुधा शब्दतयाऽस्त्यस्याः वा मतुप् मस्य वः। १क्षुधायुक्ते स्त्रियां ङीप्। भैषज्यरत्नावल्युक्ते २गुटिकाभेदे स्त्री "रसाद्योमक्षकाभागान् त्र्यूषणं त्रिफला वचा। यमानी शतपुष्पा च चविका जीरकद्वयम्। प्रत्येकं पलमेषान्तु वराटकर्षा मृगर्षभा। यावक'

पश्चिमश्चेन्द्रकेयराजसुदर्शनाः। दग्धोतुपला विडङ्गानी आमा हरकचन्दनम्। चङ्गापामार्गकुष्ठका मध्वूकस्य पलार्द्धकम्। चार्द्रकस्य रसेनाथ गुडिकां संप्रकल्पयेत्। बदरास्थिसमात्रां तां भक्षयित्वा पिबेदनु। वारि भक्तं ज अस्यैव प्रातरुत्थाय मानवः। वटी क्षुधावती नाम सर्वाजीर्णविनाशिनी। अग्निञ्च कुरुते दीप्तं भक्षकस्य नियच्छति। अन्नं पलस्य स्थूलस्य परिणामकृतस्य यत्। तत् सर्वं शमयत्याशु भास्करस्तिमिरं यथा। मण्डूरं वर्ज्जयेदत्र विशेषात् क्षीरशर्क्करे"।

क्षुधासागररस पु० भैषज्यरत्नावल्युक्ते औषधभेदे "त्रिकटु त्रिफला चैव तथा लवणपञ्चकम्। चारत्रयं रसं गन्धं भागैकं पूर्ववद्भिषक्। गुञ्जामात्रां वटीं कुर्य्यात् अष्टकैः पञ्चभिः सह। क्षुधासागरनामायं रसः सूर्य्येण निर्म्मितः"। [अमरः। "अशस्य क्षुधितः पातम्"

क्षुधित त्रि० क्षुधा + जाताऽस्य तार० इतच्। क्षुधायुक्ते

क्षुधुन पुंस्त्री क्षुध—उन किच्। म्लेच्छजातौ उज्ज्वल०।

क्षुप मदे सौ० प० अक० सेट्। क्षोपति अक्षोपीत् चुक्षोप "स चुक्षुपुनतः" भा० आ० १७१अ०

क्षुप पु० क्षुप—क क्षु—पक् वा। ह्रस्वशाखाशिफे दृक्षे अमरः। वासुदेवस्य सत्यभामाया गर्भजातपुत्रभेदे। "अजिरे सत्यभामायां भानुर्भैरवः क्षुपः" हरिव० १६अ०। इक्ष्वाकुपितरि ३राजभेदे च पु०। "आसीत् कृतयुगे तात! मनुर्दण्डधरः प्रभुः। तस्य पुत्रो महाबाहुः प्रसन्धिरिति विश्रुतः। प्रसन्धेरभवत् पुत्रः क्षुप इत्येव संज्ञितः। क्षुपस्य पुत्र इक्ष्वाकुः" भा०आश्व०४अ०। ४द्वारकापश्चिमस्थे ४पर्वतभेदे। "बभौ रैवतकः शैलो रम्यसानुगुहाजिरः। पूर्वस्यां दिशि लक्ष्मीवान् मणिकाञ्चनतोरणः। दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते। इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथा क्षुपः" हरि० १५७अ०।

क्षुपडोड्डमुष्टि पु० दोलयति दुल—उत्क्षेपे अच् नाडयोमुष्टिरस्य पृषो० कर्म्म०। विपत्सुरक्षके राजनि०

क्षुब्ध पु०क्षुभ नि०करणे क्तः। १मन्थानदण्डे हेम०। "सुधैव मन्दरक्षुब्धक्षोभिताम्भोधिवर्णना" माघः २क्षोभयुक्ते त्रि०। "पार्श्वौ परिपदे कृत्वा योनिं लिङ्गेन ताडयेत्। बाहुभ्यां धारणं गाढं बन्धोऽयं क्षुब्धसंज्ञकः" रतिम०उक्ते ३रतिबन्धभेदे पु०

क्षुभ सञ्चलने भ्वा०आत्म०अक०सेट् लृदित्। क्षोभते अक्षुभत् अक्षोभिष्ट चुक्षुभे। क्षोभिष्यत् क्षोभः। "तामसौ नापि क्षुभत्" नाक्षुभ्यत्क्षोभात्" भट्टिः क्षुब्धः क्षुभितः। "क्षुब्धतोया महावेगाः श्वसमानाइवाशुगाः" भा० व० ८अ०। "क्षुभिताः सागराः सर्वे" रामा०बा० ६५स०। "चुक्षुभे द्विषतां मनः" रघुः "यदेतदादित्यस्य मध्ये क्षोभत इव" छा० उ०। क्षोभमाणः।

क्षुभ सञ्चालने वा दिवा० क्र्या० अक० सेट्। क्षुभ्यति क्षुभ्नाति अक्षोभीत्। क्षुभितः। "क्षुभ्यन्ति प्रसभमहोभि नापि हेतोः" माघः। क्षुभ्नातीत्यत्र क्षुभ्ना० न णत्वम्। प्रादुपसर्गपूर्व्वकस्तत्तदर्थयुक्ते क्षोभे

क्षुभ त्रि० क्षुभ—क। १क्षोभके २प्रवर्त्तके च "मठराकृताद्भ्रष्टाद्यांस्तांस्तान् यन्देऽनिक्षुभान्" भा०व० ३अ० "अग्निक्षुभान् तत्प्रवर्त्तकान्" नीलक०। ३सूर्य्यपार्श्वदेवभेदे स्त्री। "क्षुभया वहिता मैत्री याम्याम्याम् समानरः" तत्रैव "क्षुभा नियमाहानुप्रकर्त्त्री देवता" नीलक०

क्षुभित त्रि० क्षुभ—क्त। १आलोडिते, २व्याकुले, ३भीते च हला०। "क्षुभितसैन्यपरागविपाण्डुरे" माघः "महाप्रलयमारुतक्षुभितपुष्करावर्त्तकेति वेणी०

क्षुम्नादि पा० उक्ते निमित्ते सत्यपि णत्वनिवृत्तिनिमित्ते शब्दगणे स च गणः "क्षुम्ना नमन नन्दिन् नन्दन नगर। एतान्युत्तरपदानि संज्ञायाम्प्रयोजयन्ति। हरिनन्दी हरिनन्दनः गिरिनगरम्। नृतिर्यङि प्रयोजयति। नरीनृत्यते। नर्त्तन गहन नन्दन निवेश निवास अग्नि अनूप एतान्युत्तरपदानि प्रयोजयन्ति। परिनर्त्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः। आचार्य्यादणत्वञ्च। आचार्य्यभोगीनः। आकृतिगणोऽयम् क्षुम्नादिः। "अविहितलक्षणो णत्वप्रतिषेधः क्षुम्नादिषु द्रष्टव्य "इति भाष्यम्" न भाष्यकारेणादयस्तस्यैव प्रपञ्चः" इति कैयटः। पाठान्तरम् "क्षुम्ना तृप्नु नमन नर नगर नन्दन यङ्वृति गिरिनदी गृहगमन निवेश निवास अग्नि अनूप आचार्य्यभोगीन चतुर्हायन इरिकादीनि वनोत्तरपदानि (संज्ञायाम्) इरिका तिमिर समीर कुबेर हरि कर्म्मार क्षुम्नादिः"।

क्षुमत् त्रि० क्षु+अस्त्यर्थे मतुप्। १अन्नयुक्ते लक्षणया २अन्नवत्स्तुत्ये च। "आ तु इन्द्र! क्षुमन्तम्" ऋ० ८,८१,१,"क्षुमन्तं स्तुत्यम्" भा०

क्षुमा स्त्री क्षु—मक्। (मसिना) (तिसी) १अतस्याम् अमरः। "क्षायो विधूनने क्षायति शत्रून कम्पयति पृषो०। क्षुमा २शत्रुकम्पके त्रि० "क्षुमाभिः पातये-

नृपाज्ञया चरेत् । शववाहतीर्थगमसिन्धुमज्जनं क्षुर-
माचरेन्न खलु गर्भिणीपतिः" । मू० चि०
"अथ केषाञ्चिन्निमित्तविशेषे क्षौरस्य विधिनिषेधौ
मञ्जुभाषिणीच्छन्दसाह । क्रतुपाणीति अत्र पूर्व्वार्द्धे
अत्यपि निषिद्धवारादौ एषु कर्म्मसु क्षुरकर्म्म क्षौरं सद्यः
कार्य्यमिति वाक्यार्थः क्रतौ यज्ञे विप्राज्ञया क्षौरम् ।
तथा पाणिपीडो विवाहो अत्रापि ततः प्रागभाविनि
गोदानकर्म्मणि केचित्तु विवाहे श्मश्रुकर्म्मप्रागक्यपरं
क्षौरमित्याहुः अतएव शाखाविशेषेण विवाहे क्षौरमुक्त-
मित्यूचुः । तथा च श्रुतिः "मुण्डयितारः श्रविष्ठाय
माबधूमडामित्यादि" । क्रतौ मातापित्रोर्मरणे बन्धमोक्ष-
णे कारागृहे बन्धस्य यदा मोचनं भवेत्तदा द्विजा-
ज्ञया राजाज्ञादावपीति बोध्यम् नृपो राजा तस्या-
ज्ञया चौरादेः क्षौरं कार्य्यमेव यदाह नारदः "नृप-
विप्राज्ञया यज्ञे मरणे बन्धमोक्षणे । उद्वाहेऽखिलवार-
र्क्षतिथिषु क्षौरमिष्टमिति" । धर्म्मशास्त्रे "गङ्गायां
भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि । आधाने सोमपाने
च षट्सु क्षौरं विधीयते" इति । अथ शवेति गर्भिणी
गर्भवती तस्याः पतिर्भर्त्ता शववाहं मृतकवहनं तीर्थयात्रां
उपलक्षणत्वाद्विदेशगमनमपि । सिन्धुमज्जनम् समुद्र-
स्नानं, क्षुरं क्षुरकर्म्म एतानि कर्म्माणि न आचरेन्न
कुर्य्यात् । यदाह वसिष्ठः "स्तम्भनिर्माणमुदधिस्नानं
चौलं मृतस्य तु । तीर्थयात्रां नखप्रान्तं न कुर्य्याद्‌ग-
र्भिणीपतिः" । "सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाह-
नम् । विदेशगमनञ्चैव न कुर्य्याद्गर्भिणीपतिः" धर्म्मशास्त्रे
तु विशेषतः "राजा योगी दुरस्त्री च मातापित्रोस्तु-
जीवतोः । मुण्डनं सर्वतीर्थेषु न कुर्य्याद्गर्भिणीपतिः"
अयञ्च क्षौरादिनिषेधो गुर्विणीपतेः सप्तमासादूर्ध्वं न
प्राक्, यदुक्तं नारदीये "वपनं तीर्थयात्राञ्च वर्जयेद्‌गुर्विणीप-
तिः । आद्यञ्च सप्तमान्मासादूर्ध्वं नान्यत्र वेदवित्" । आद्यं
श्राद्धभोजनम् । इदमुत्तरार्द्धं गर्भाधानप्रकरणे वक्तव्य-
मपि प्रसङ्गादत्रैवोक्तं पञ्चकृतेति" । पी० धा०
"नृपाणां हितं क्षौरभे श्मश्रुकर्म्म दिने पञ्चमे पञ्चमेऽ-
स्योदये वा । षडग्निस्त्रिमैत्रोऽष्टकः पञ्चपित्र्योऽवदतोऽ-
बधत्र्यंशका क्षौरकृन्मृत्युमेति" । मू० चि०
"अथ क्षौरे राज्ञां विशेषं सर्वथा वर्ज्यनक्षत्राणि च
भुजङ्गप्रयातेनाह नृपाणां हितमिति क्षौरभे क्षौर-
नक्षत्रे विहिते सति पञ्चमे पञ्चमे एव दिने श्मश्रुकर्म्म-
मुण्डनाकारि क्षुरकर्म्म नृपाणां राज्ञां हितं प्रशस्तं
यदाह वसिष्ठः "महीभृतां पञ्चमे पञ्चमेऽह्नि क्षौरं च
कार्य्यं हितमुक्तभेषु" ननु पञ्चमे इति वीप्सयोक्त्या नियम ।
प्रतीतेर्विहितनक्षत्राभावे च सति श्मश्रुकर्म्म कार्य्यमिति
उक्तं च वसिष्ठेन "न लभ्यते चेन्न मदुक्तधिष्ण्यं तल्लोदये
वा निखिलं विधेयमिति" उदयशब्देन मुहूर्त्तं इति क-
श्चिद्व्याकुर्व्वते तदाह गर्गः "क्षौरकर्म्म महीपानां पञ्चमे
पञ्चमेऽहनि । कर्त्तव्यं क्षौरनक्षत्रेऽप्यथवा तन्मुहूर्त्तके इति
तेषां क्षौरनक्षत्राणां ये स्वामिनस्तेषां मुहूर्त्ते इत्यर्थः ।
तांश्च मुहूर्त्तान् विवाहप्रकरणे वक्ष्यति । अत्र क्षौरपदं
श्मश्रुकर्म्मपरम् । "राजा योगी दुरस्त्री च मातापित्रोस्तु
जीवतोः । मुण्डनं सर्वतीर्थेषु न कुर्य्याद्गर्भिणीपतिरिति"
राज्ञो मुण्डननिषेधात् । अतएवोक्तं श्रीपतिना "श्मश्रुकर्म्म
पञ्चमे च पञ्चमेऽह्नि च भूभृताम् । क्षौरभस्योदये वाऽपि
स्यान्निन्द्यतारका न चेत्" इति । निन्द्यतारका जन्म-
विपदादितारका । अन्ये त्वेवं व्याचक्षते अस्योदये
वेति अस्य क्षौरभस्योदये लग्ने । यथा मेषलग्नं त्रिंशद्भा-
गात्मकं तत्राद्याश्विन्योदयभागा १२,२० [illegible]
यावता कालेन मेषलग्ने उदयं यान्ति तावदश्विनीनक्षत्र-
मुदयं यातीत्यर्थः । तदनन्तरं तावन्तः अंशा यावता
कालेनोदयं यान्ति तावद्भरण्युदय इत्यनेन न्यायेन
सर्वेषां नक्षत्राणामुदयाश्रयाः । इयं च व्याख्या
वराहपद्यव्याख्यावसरे भट्टोत्पलेनाभ्यधायि । पितृचर-
णास्त्वेवं व्याकुर्वते । यस्मिन् काले अश्विन्या उदयः क्षिति-
जसंबन्धः संपद्यते तं समयमारभ्य यावद्भरण्या उदयः-
क्षितिजसंबन्धस्तदन्तराले यावान्कालः सोऽश्विन्या उदय
उच्यते । एवं सत्युदयनद्वयांशान्तरालाद्गणितमार्गेण
यावानिष्टकाल आगच्छेत्स एव तन्नक्षत्रोदय इति निष्कृ-
ष्टार्थ इति । नक्षत्रस्योपलक्षणत्वाच्छुभवाराद्यंशकेऽपि न-
क्षत्रादौ होरायां कार्यमुक्तञ्च नारदेन "यस्य खेटस्य
यत्कर्म वारे प्रोक्तं विधीयते । तस्य क्षणवारेऽ-
पि तस्य तत्कर्म सर्वदेति" । क्षणवारः कालहोरा ।
एवं सति निषिद्धवारेऽपि प्रशस्तश्मश्रुकर्म्म का-
र्य्यमिति युक्तमुत्पश्यामः । षडग्निरिति । अग्निः कृत्ति-
का क्षौरात्षष्ठा यद्वारे कृत्तिका यस्य । एवं त्रीणि
मैत्राण्यनुराधायस्य अष्टौ का रोहिण्यो यस्य । पञ्च पि-
त्र्याणि मघायस्य । अवदतश्चत्वारोऽर्य्यमा उत्तराफाल्गुन्यो
यस्य । बधत्र्यंशः क्षौरकृत् अत्ययः वर्णान्तरं कृत्य

पूर्व्वसूरिभिः । कामरूपं महापीठं गुह्याद्गुह्यतमं परम्” कालिकापु० ५० अ० । गङ्गाक्षेत्रं स्कान्दे “तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते” । नारायणक्षेत्रं यथा “प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । तत्र नारायणःस्वामी गङ्गागर्भान्तरे परे । तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे । एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः । स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च” ब्रह्मवै० पु० प्र० ख० २७ अ० । भास्करक्षेत्रम् “गङ्गायां भास्करक्षेत्रे मातापित्रोर्म्मृते गुरौ । आधाने सोमपाने च वपनं सप्तसु स्मृतम् । इतिस्मृति सप्तर्षयलिखितवचनम् । “भास्करक्षेत्रं प्रयागः” इति प्रायश्चित्ततत्त्वम् । गयाक्षेत्रं यथा “पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः” इति वायुपुराणम् । पुरुषोत्तमक्षेत्रम् । “मुनय ऊचुः । पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम्” । “जैमिनिरुवाच । एतत्क्षेत्रवरस्यास्य वपुर्भूतं महात्मनः । स्वयं वपुष्मान् यत्रास्ते स्वनाम्ना ख्यापितं हि तत्” उत्कलखण्डम् । विष्णुक्षेत्राणि यथा “श्रीभगवानुवाच । शृणुष्वावहितो ब्रह्मन् ! गुह्यनामानि मेऽधुना । क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि यत्नतः । कोकामुखे वराहञ्च मन्दरे मधुसूदनम् । अनन्तं कपिलद्वीपे प्रभासे रविनन्दनम् । माल्योदये तु वैकुण्ठं महेन्द्रे तु नृपात्मजम् । ऋषभे तु महाविष्णुं द्वारकायान्तु भूपतिम् । पाण्डुसह्ये तु देवेशं वसुरूढे जगत्पतिम् । वल्लीवने महायोगं चित्रकूटे नराधिपम् । नैमिषे पीतवासञ्च गवां निष्क्रमणे हरिम् । शालग्रामे तपोवासमचिन्त्यं गन्धमादने । कुब्जागारे हृषीकेशं गङ्गाद्वारे गदाधरम् । गरुडध्वजं तोषके च गोविन्दं नामसाह्वये । वृन्दावने तु गोपालं मथुरायां स्वयम्भुवम् । केदारे माधवं विद्यात् वाराणस्यान्तु केशवम् । पुष्करे पुष्कराक्षन्तु धृष्टद्युम्ने जयध्वजम् । तृणबिन्दुवने वीरमशोकं सिन्धुसागरे । कंशे वट्टे महाबाहुममृतं तेजसो वने । विशाखयूपे विश्वेशं नारसिंहं वने वने । लोहकूटे रिपुहरं देवशाले त्रिविक्रमम् । पुरुषोत्तमं दशपुरे कुब्जके वामनं विदुः । विद्याधरं वितस्तायां वाराहे धरणीधरम् । देवदारुवने गुह्यं कावेर्य्यां नागशायिनम् । प्रयागे योगमूर्त्तिञ्च पयोष्ण्यां सुन्दरं विदुः । कुमारतीर्थे कौमारं लौहित्ये हयशीर्षकम् । त्रिविक्रममुज्जयिन्यां लिङ्गकोटे चतुर्भुजम् । हरिहरं तुङ्गभद्रायां दृष्ट्वा पापात् प्रमुच्यते । विश्वरूपं कुरुक्षेत्रे मणिकुण्डे हलायुधम् । लोकवीरमयोध्यायां कुण्डिने रुक्मिणीपतिम् । भण्डीरे वासुदेवञ्च चक्रतीर्थे सुदर्शनम् । आद्यं विष्णुपदे विद्यात् शूकरे शूकरं विदुः । कुमेशं मानसे तीर्थे दण्डके श्यामलं विदुः । त्रिकूटे नागमोक्षञ्च मेरुपृष्ठे च भास्करम् । विरजं पुष्पभद्रायां बालं चामीकरे विदुः । यशस्करं विपाशायां माहिष्मत्यां हुताशनम् । क्षीराब्धौ पद्मनाभञ्च विमले तु सनातनम् । शिवनद्यां शिवकरं गयायाञ्च गदाधरम् । सर्व्वत्र परमात्मानं यः पश्यति स मुच्यते । अष्टषष्टिस्तु नामानि कीर्त्तितानि मया तव । क्षेत्राणि चैव गुह्यानि कथितानि विशेषतः । द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः । वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम्” नारसिं० पु० ६२ अ० । मेषादिद्वादशराशिषु । “राशिनामानि च क्षेत्रं भञ्च गृहनाम च । मेषादीनाञ्च पर्य्यायं लोकादेव विचिन्तयेत्” । ग्रहाणां क्षेत्राणि ज्यो० त० च कुजशुक्रबुधेन्दुसौम्यशुक्रावनीभुवाम् । जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः” ज्योति० त० । “इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम्” गीतोक्तेषु ७पदार्थेषु क्षेत्राकारे दर्शनादि मणिना त्रिकोणचतुष्कोणादिके पदार्थे तारक्षेत्रभेदाच रेखाभेदशाखा एतावरेखाभेदसंज्ञा निरूप्यते तत्रादौ लक्षणैः क्षेत्रतत्त्वदीपिकायामित्थमभ्यधायि यथा

१ यः पदार्थो लक्षयितुं शक्यः परिमाणस्य स्थूलत्वदैर्घ्यविस्तार-रहितः स बिन्दुः । ((बिन्दुसमुदायो रेखा)

२ यः पदार्थो दैर्घ्यविस्तारस्थूलत्वाभ्यां रहितः स रेखा

३ यः पदार्थो विस्तारदैर्घ्ययुक्तः स्थूलत्वरहितः स धरातलम्

४ यः पदार्थो विस्तारदैर्घ्यस्थौल्ययुक्तः सः स्थूलपदार्थः ।

५ रेखा च त्रिविधा सरला वक्रा मिश्रिता च ।

६ तत्र या रेखा एकदिग्गमनेनैव चिह्नद्वयान्तराले तिष्ठति एवं ययोश्चिह्नयोरन्तराले सा तावनेकरेखासु तिर्य्यगल्पतमा सा सरला । यत्र रेखापदं तत्र सरलैव ग्राह्या ।

७ या रेखा वर्त्तनेन प्रतिचिह्नं दिगन्तरं गच्छति सा वक्रा । (उभयलक्षणान्विता मिश्रिता)

८ रेखा च समान्तरा विषमान्तरा लम्बः सम्पातरेखा च ।

९ ययोः रेखयोरन्तरं समानमेव एवं वर्त्तनेन तयोर्योगः

कदापि न भवितुमर्हति, सा समानान्तरा रेखा भवति ।

१० ययोरन्तरं विषमम् एवं वहिर्मुखान्तरं तर्हिर्मिव वर्द्धते मोत्तरोत्तरमल्पान्तरं यावद्रेखायोगस्तदनन्तरमुत्तरोत्तरमल्पान्तरं विवर्द्धते योगश्च कदापि भवितुं न शक्नोति सा विषमान्तरा ।

११ एकरेखायामन्यरेखासंयोगादुत्पन्नौ कोणौ यदि समानौ भवतस्तदा ते रेखे मिथोलम्बरूपे भवतः ।

१२ या रेखा वृत्तपालिनिर्गता सती पालिखण्डं न करोति सा सम्पातरेखा भवति । यद्वृत्तं वृत्तसम्पातेन खण्डितं न भवति स वृत्तसम्पातः ।

१३ एकचिह्नान्निःसृते द्वे रेखे यदि सम्मुखेतरभिन्नदिग्गते भवतस्तदा तच्चिह्ने कोणोभवति ।

१४ कोणस्त्रिविधः समकोणोऽल्पकोणोऽधिककोणश्च ।

१५ तत्र समानरेखायां लम्बयोगादुत्पन्नः कोणः समकोणः

१६ समातिरिक्तोविषमकोणोभवति ।

१७ समकोणान्न्यूनोऽल्पकोणोभवति ।

१८ समकोणादधिकोऽधिककोणो भवति ।

१९ धरातलं द्विविधं समं वर्त्तुलं च ।

२० तत्र यस्मिन्धरातले सरला रेखा सर्वतो भावेन संलग्ना भवति यद्वा यत्र कुत्रापि चिह्नद्वये लग्ना सरला रेखा सर्वतः स्पृशति तद्धरातलं समं ज्ञेयम् । समातिरिक्तं विषममिति ।

२१ सरलरेखाभिः कुटिलरेखाभिर्वा निबद्धसीमं धरातलं समधरातलक्षेत्रं भवति । यत्र क्षेत्रमत्रस्तत्र समधरातलक्षेत्रं ज्ञेयम् । १

२२ सरलरेखानिबद्धसीमं धरातलकं क्षेत्रं भुजैः कोणैर्वाऽभिधेयं भवति किन्तु यावन्तोभुजास्तावन्त एव कोणाः भवति । [णैश्चाऽनेकविधं भवति ।

२३ त्रिभिर्भुजैर्निबद्धसीमं धरातलं त्रिभुजक्षेत्रं भुजैः को-

२४ यस्य त्रयोबाहवः समानास्तत्समत्रिभुजं भवति ।

२५ यस्य द्वौ बाहू समानौ तत्समद्विभुजं ज्ञेयम् ।

२६ यस्य त्रयोबाहवोविषमास्तद्विषमत्रिभुजं भवति ।

२७ यस्यैकः समकोणस्तत्समकोणत्रिभुजं ज्ञेयम् ।

२८ समातिरिक्तकोणं विषमत्रिभुजं भवति ।

२९ यस्यैकोऽधिककोणस्तदधिककोणत्रिभुजं भवति ।

३० यस्य त्रयोऽपि न्यूनकोणास्तन्न्यूनकोणत्रिभुजं ज्ञातव्यम् ।

३१ चतुर्भुजैर्निबद्धसीमं धरातलं चतुर्भुजक्षेत्रं भवति ।

३२ यस्य चतुर्भुजस्य परस्परं सम्मुखौ भुजौ समान्तरौ भवतस्तत्समानान्तरभुजं चतुर्भुजं क्षेत्रं भवति । तद्-व्यवसायाभिधानं चतुर्विधं तद्यथा ।

३३ यस्य चतुर्भुजस्य परस्परसम्मुखौ भुजौ समानौ एवमेकः समकोणश्च भवति तच्चतुर्भुजं समकोणायतं भवति।

३४ यस्य चत्वारोभुजा मिथःसमानाः कोणाश्च समानास्तच्चतुर्भुजं समकोणसमचतुर्भुजं वर्गक्षेत्रं वा भवति ।

३५ यस्य परस्परं सम्मुखरेखाद्वयं समानं समानान्तरं च भवति । कोणाश्च विषमास्तच्चतुर्भुजं विषमकोणायतम्

३६ यस्य चत्वारोबाहवः समानाः समानान्तराश्च भवन्ति कोणाश्च विषमास्तद्विषमकोणसमचतुर्भुजं भवति ।

३७ यस्य च परस्परं सम्मुखौ भुजौ विषमान्तरौ तच्चतुर्भुजं विषमचतुर्भुजं भवति ।

३८ यस्य भुजद्वयं समानान्तरं तत्समानान्तरविषमचतुर्भुजम्

३९ चतुर्भुजस्यैकान्तरकोणसंलग्ना रेखा कर्णो भवति ॥

४० चतुर्भुजादधिकभुजैर्निबद्धं धरातलं सामान्यतोबहुभुजं क्षेत्रं तद्बहुविधं भुजानुसारेण कोणानुसारेण वा तेषां नामानि

४१ यथा पञ्चभुजं षड्भुजं सप्तभुजमष्टभुजं नवभुजं दशभुजमेकादशभुजं द्वादशभुजमित्यादीनि ॥

४२ तत्र बहुभुजक्षेत्रं यदि समभुजं भवति तस्य कोणा समानाभवन्ति तदा तत्क्षेत्रं समपञ्चभुजमित्याभिधानकं भवति तदितरत् विषमपञ्चभुजमित्यादि ।

४३ एवमेव समत्रिभुजे कोणाः समानाभवन्त्येवेति नियमः तत्त्रिभुजं समानकोणसमत्रिभुजं भवति । यस्य चत्वारो भुजाः समानाः सन्ति तत्समचतुर्भुजं क्षेत्रं भवति ।

४४ यस्य क्षेत्रस्य भुजाः समानाभवन्ति तत् क्षेत्रं समभुजं यस्य कोणाः समानास्तत्समानकोणं क्षेत्रं यस्य भुजाः कोणाश्च समानाभवन्ति तत्क्षेत्रं समकोणसमभुजं भवति

४५ कुटिलरेखया निबद्धसीमं धरातलं वृत्तक्षेत्रं भवति सा रेखा परिधिसंज्ञिका पालिसंज्ञिका वा भवति तस्या मध्यविन्दुः केन्द्रसंज्ञकोभवति ॥

४६ केन्द्रान्निःसृता वृत्तपालिसंलग्ना रेखा व्यासार्द्धं भवति ।

४७ या रेखा उभयतः पालिसंलग्ना केन्द्रगा च भवति सा व्याससंज्ञिका भवति ॥

४८ परिधिखण्डश्चापसंज्ञकोभवति ॥

४९ चापोभयप्रान्तगा रेखा चापकर्णसंज्ञिका ज्यासंज्ञिका च

५० जीवाचापाभ्यां निबद्धधरातलकं क्षेत्रं धनुःक्षेत्रं चापक्षेत्रं वा भवति ॥

५१ यस्य चापस्य व्यासरेखा जीवा भवति तत् अर्द्धवृत्तम् ।

५२ केन्द्राद्बहिःसृते द्वे रेखे चापोभयप्रान्तसंलग्ने यदि भवतः तदा तत्क्षेत्रं वृत्तांशसंज्ञकं वृत्तखण्डकं च भवति ॥

५३ यस्य चापः परिधिपाद मितः केन्द्राद्बहिःसृताभ्यां रेखाभ्यां समकोणश्च भवति तद्वृत्तपादक्षेत्रं भवति ॥

५४ क्षेत्रस्योर्द्ध्वकोणादाधाररेखायां पतितलम्बमानमौच्च्यम्

५५ समकोणत्रिभुजे समकोणसम्मुखभुजः कर्णोभवत्यन्यौ पार्श्वौ भवतः किं चैक आधारोऽन्योलम्बः ॥

५६ अत्र कोणोपलब्धिः कल्पितत्रिभिर्वृत्तैर्भवति किन्तु सदैव कोणसंलग्नरेखयोर्मध्य उच्चारणीयः ॥

५७ परिधेः षष्ट्यधिकशततमांशोंऽशसंज्ञकोभवति । अंशस्य षष्ट्यंशः कला । कलायाः षष्ट्यंशोविकला । विकलायाः षष्ट्यंशः प्रतिविकलेत्यादि ।

५८ कोणस्य परिमितिः कोणचिह्नतकेन्द्रात् कृते वृत्ते तत्कोणाकारकरेखयोरन्तरालचापगतांशतुल्या भवति स कोणस्तद्वृत्तस्य केन्द्रं भवति ॥

५९ तेषां चापानां केन्द्राद्दूरत्वं समानं भवति येषु केन्द्राद्बहिः सृतोलम्बः समोभवति ॥

६० येषु दीर्घोलम्बः पतति तेषां दूरत्वं दीर्घं भवति ॥

६१ चापगतैकचिह्नाद्बहिःसृते द्वे रेखे तदन्यचापोभयप्रान्तमिलिते तदुद्भूतः कोणश्चापान्तर्गतकोणोभवति ॥

६२ अनन्तरोक्तकोणाद्विपरीतदिग्भवः कोणस्तत्कोणसत्त्वे चापोपरिस्थः कोणोभवति किन्तु द्वयोः कोणयोः स्वरूपं समानं तयोः प्रथमोऽन्तर्गतो द्वितीयउपरिस्थ इत्येष भेदः

६३ यत्कोणचिह्नं परिधिगतं भवति स परिधिकोणोभवति यस्य तच्चिह्नं केन्द्रगतं स्यात्स कोणः केन्द्रकोणोभवति ॥

६४ सरलरेखाकृतक्षेत्रस्य सर्व्वे कोणा यदि वृत्तमध्ये परिधिसंलग्नाभवन्ति तदा तत्क्षेत्रं वृत्तान्तर्गतं क्षेत्रोपरि गतवृत्तं वा भवति ॥

६५ यदि सरलरेखाकृतक्षेत्रस्य मध्ये सर्व्वभुजसंलग्नः परिधिस्तदा तद्वृत्तं क्षेत्रान्तर्गतं वृत्तोपरिगतक्षेत्रं वा,

६६ सरलरेखाकृतक्षेत्रस्य सर्व्वभुजसंलग्नायदि तद्भिन्नस्य क्षेत्रस्य सर्व्वे कोणाभवन्ति तदा तत्क्षेत्रं क्षेत्रान्तर्गतं क्षेत्रोपरिगतक्षेत्रं वा भवति ॥

६७ यद्रेखायाएकांशोवृत्तान्तर्गतो द्वितीयोबहिर्गतः स्यात्सा रेखा वृत्तच्छेदिनी भवति ॥

६८ ययोर्द्वयोस्त्रिभुजयोर्येषां सरलरेखाकृतक्षेत्राणां वा प्रतिदिग्भुजैः प्रतिदिग्भुजाः समानाः सन्ति तानि परस्परं समभुजानि भवन्ति ययोर्येषां वा प्रतिदिक्कोणैः प्रतिदिक्कोणाः समानास्तानि क्षेत्राणि परस्परं समानकोणानि भवन्ति ॥

६९ उभयोः क्षेत्रयोः परस्परं भुजाः कोणाश्च परस्परं भुजैः कोणैश्च समानाभवन्ति किं चैकस्य क्षेत्रस्य सर्व्वे भुजाः कोणाश्च द्वितीयक्षेत्रस्य सर्व्वैर्भुजैः कोणैश्च परस्परं समानाः यथा एकक्षेत्रोपरि द्वितीयक्षेत्रं स्थाप्यते तदा सर्व्वे भुजाः कोणाश्च सर्वभुजोपरि कोणोपरि च समानरूपेण पतिताः स्युः यथा द्वयोरेकरूपं स्यादीदृक्क्षेत्राण्येकरूपाणि भवन्ति ॥

७० येषां क्षेत्राणां प्रतिदिक्कोणाः समानाएवं प्रतिदिग्भुजा एकनिष्पत्तियुताभवन्ति तानि क्षेत्राणि सजातीयानि

७१ क्षेत्रस्याखिलभुजयोगः सीमाछलेनोच्यते ॥

एवं रेखानिष्पन्नक्षेत्राणां भुजकोट्यादिमानफलज्ञानार्थं लीलावत्युक्तः क्षेत्रव्यवहारोऽत्र दर्श्यते यथा "भुजकोटिकर्णानामन्यतमाभ्यामन्यतमानयनाय करणसूत्रं वृत्तद्वयम् । इष्टाद्बाहोर्यः स्यात्तत्स्पर्द्धिन्यां दिशीतरोबाहुः । त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः । तत्कृत्योर्योगपदं कर्णो दोःकर्णवर्गयोर्विवरात् । मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात्पदं बाहुः । उदाहरणम् । कोटिश्चतुष्टयं यत्र दोस्त्रयं तत्र का श्रुतिः । कोटिं दोःकर्णतः, कोटिश्रुतिभ्यां च भुजं वद ।

न्यासः




कोटिः ।४। भुजः ।३। भुजवर्गः ९ । कोटिवर्गः । १६ । एतयोर्योगाम् ।२५। मूलम् ५। कर्णो जातः ॥

॥अथ कर्णभुजाभ्यां कोट्यानयनम् ॥

न्यासः




कर्णः ।५। भुजः ।३। अनयोर्वर्गान्तरम् ।१६। एतन्मूलं ।४। कोटिः

॥अथ कोटिकर्णाभ्यां भुजानयनम् ॥




कोटिः ।४। कर्णः ।५। अनयोर्वर्गान्तरम् ।९। एतन्मूलं । ३ । भुजः

"प्रकारान्तरेण तज्ज्ञानाय करणसूत्रं सार्द्धवृत्तम् ।

राश्योरन्तरवर्गेण द्विघ्ने घाते युते तयोः । वर्गयोगो भवेदेवं तयोर्योगान्तराहतिः । वर्गान्तरं भवेदेवं ज्ञेयं सर्वत्र धीमता ॥

कोटिश्चतुष्टयमिति पूर्वोक्तोदाहरणे ।




कोटिः । ४ । भुजः । ३ । अनयोर्घातः ।१२। द्विघ्नः ।२४। अन्तरवर्गेण ।१। युतः वर्गयोगः ।२५। अस्य मूलं कर्णः ।५।

अथ कर्णभुजाभ्यां कोट्यानयनम् ।




कर्णः ।५। भुजः ।३। अनयोर्योगः ।८। पुनरेतयोरन्तरेण ।२। ऽऽहतोवर्गान्तरम् । १६ । अस्य मूलं कोटिः । ४ ।

अथ कर्णकोटिभ्यां भुजानयनम् ।




कोटिः ।४। कर्णः ।५। (उक्तरीत्या) जातो भुजः । ३ ।

"उदाहरणम् । सार्द्धत्र्यमितौ बाहुर्यत्र कोटिश्च तावती । तत्र कर्णप्रमाणं किं गणक ! ब्रूहि मे द्रुतम् ॥




भुजः १३/४ कोटिः १३/४ अनयोर्वर्गयोर्योगः १६९/८ अस्य मूलाभावात्करणी गतएतावान् कर्णः

अस्य आसन्नमूलज्ञानार्थमुपायः वर्गेण महतेष्टेन हताच्छेदांशयोर्वधात् । पदं गुणपदक्षुण्णच्छिद्भक्तं निकटं भवेत् ॥ एवम् अयं कर्णवर्गः १६९/८ अस्य छेदांशघातः १३५२ अयुतवर्गेण १०००००००० गुणितः १३५२०००००००० अस्यासन्नमूलम् ११६२७७ इदं गुणमूलेन १० गुणितच्छेदेन ८०० भक्तं लब्धमासन्नपदं ४ भागाः ४७७/८०० अयं कर्णः । एवं सर्वत्र ।

"त्र्यस्रजात्ये करणसूत्रं वृत्तद्वयम् । इष्टो भुजोऽस्माद्द्विगुणेष्टनिघ्नादिष्टस्य कृत्यैकवियुक्तयाप्तम् । कोटिः पृथक् सेष्टगुणा भुजोना कर्णो भवेत्त्र्यस्रमिदन्तु जात्यम् ॥ इष्टोभुजस्तत्कृतिरिष्टभक्ता द्विःस्थापितेष्टोनयुतार्द्धिता वा । तौ कोटिकर्णाविति कोटितो वा बाहुश्रुती वा करणीगते स्तः ।

उदाहरणम् । भुजे द्वादशके यौ यौ कोटिकर्णावनेकधा । प्रकाराभ्यां वद क्षिप्रं तौ तावकरणीकृतौ ।

न्यासः




भुजः । १२ । इष्टम् । २ । अनेन द्विगुणेन । ४ । गुणितो भुजः ।४८। इष्ट । २ कृत्या । ४ । एकोनया । ३ । भक्तो लब्धा । १६ । कोटिः इष्टमिष्टगुणा। ३२ । भुजोना । १२ । जातः कर्णः । २० ।

त्रिकेष्टेन वा ।




कोटिः । ९ । कर्णः ।१५।

(उक्तरीत्यायातः)

पञ्चकेष्टेन वा




कोटिः । ५ । कर्णः । १३ । (उक्तरीत्यायातः)

